THE

# KÂSHI-SANSKRIT-SERIES

( *HARIDÂS SANSKRIT GRANTHAMĀLĀ* )

## NO 100.

( Chhanda Section, No 4 )



THE

# VAG VALLABHA

*Of*

## SRIDUHKHABHANJANAKAVI

*Edited with*

THE VARAVARNINÎ COMMENTARY

*By*


*M. M Pandit Deviprasada Kavichakravarti*

Professor, Benares Hindu University

Benares


*With an Introduction and Index etc ,*

By


SĀHITYA DARS'ANĀDYACHĀRYA DARS'ANIKASARVABHAUMA

TARKARATNA NYAYARATNA

*Goswami Damodara S'astri*





*BENARES*

JAI KRISHNADÂS-HARIDÂS GUPTA,

*The Chowkhamba Sanskrit Series Office,*

1933

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़पुस्तकमालायाः

१००

छन्दोविभागे (४) चतुर्थपुष्पम् ।

# वाग्वल्लभः

श्रीदुःखभञ्जनकविविरचितः

तदात्मजेन

काशीविश्वविद्याऽऽलयाध्यापकेन

महामहोपाध्याय-

पण्डितश्रीदेवीप्रसादकविचक्रवर्त्तिना

कृतया

वरवर्णिनीटीकयाऽलङ्कृतः

दार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्य्यतर्करत्नन्यायरत्न-

गोस्वामिश्रीदामोदरशास्त्रिरचितया भूमिकया सहितः

पाण्डेयपण्डितश्रीरामतेजःशर्मणा शोधितः ।

प्रकाशकः—

जयकृष्णदास हरिदासगुप्तः—

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी ।

१९३२

श्रीः

# भूमिका

श्रीमद्हनुमद्भीममध्वान्तर्यामिरामकृष्णवेदव्यासात्मकसच्चिदानन्द-
विग्रहपूर्णतमाह्लादिनीशक्त्यभिन्नीकृतस्वरूपप्रेमावतारभगवन्
श्रीश्रीगौरकृष्णः शरणम् ।

आर्य्या पथ्या स्वराट् श्रीकमलपदुधरा स्रग्विणी पुष्पिताग्रा
दोलाक्रीडाकलानन्दथुपरवनिता शालिनी मौलिमाला ।
मत्तालीभारतीलाप्रमुदितवदना भासिनी फल्गुमध्या
लीलाचित्रा विचित्रा शशधरसुमुखी राधिका कीर्त्तिगौरी ।

अथायमुपक्रम्यते वाग्वल्लभनामा निबन्धो मुद्रयित्वा प्रकाशयितुम्,

किंविषयकोऽयं ग्रन्थ इति जिज्ञासूनां विनोदाय किञ्चिदिहोल्लिख्यते—

इह किल शब्दार्थोभयात्मके प्रपञ्चेऽपेक्षाकृतायामर्थविस्मृतावपि सम्प्रति तद्वि-वक्षया शब्दसम्बद्धमेव किञ्चिदालुलोचयिषितव्यमधुनाऽस्ति,

परं तु शब्दस्यापि ध्वनिवर्णविशेषाभ्यां द्वैविध्येन ध्वनेरपि नोत्तिष्ठापयिषा, केवलं वर्णविजृम्भणं दिदर्शयिषितम्,

अत्रापि विद्यमानायां साधुत्वासाधुत्वचर्चायामुदस्य वर्णपदवाक्यप्रबन्धशाखा-द्यपेक्षिकायां सतीष्वपि भूयसीषु भाषासु तन्मूलरूपा देवगिरमेव समीक्षामहे,

अत्र च वेदतदङ्गोपवेदस्मृतिपुराणोपपुराणदर्शनकलाप्रभृतिभेदप्रभेदेषु सकलाभ्यर्हि-तस्यापौरुषेयस्यानर्गलप्रामाण्यकस्य भगवतो महापुरुषस्य वेदस्य चक्षुर्मुखघ्राणश्र-वणपाणिचरणात्मनां क्रमेण ज्यौतिषव्याकरणशिक्षानिरुक्तकल्पच्छन्दसां प्राधान्येन वेदो-पकरणत्वाद् वेदाङ्गतया व्यपदेशोद्घोषो नैव तिरोहितस्त्रयीमार्गिकाणाम्,

एवं चैतदादिसर्वेषामेव वाग्विषयत्वेऽपि रसरागगङ्गाऽऽदिनदीहिमालयादिनगाश्व-त्थादितरुयुगवर्षर्तुमासतिथिवारनक्षत्रयोगकरणराशिरोगाणामिवाध्यात्मिकादैविकाधिभौ-तिकस्वरूपताऽपि शास्त्रीयतत्तत्स्थलेषु प्रतिपादिता निर्विवादैवास्थेया, अत एव तत्तद्ध्यानादिषु ध्येयाकृतिवर्णवस्त्रभूषणायुधादिवर्णनमपि संगच्छते,

प्रकृतश्च संदर्भश्छन्दोविषयक इत्येतदधिष्ठातृदेवमधिकृत्य विश्वकर्मप्रकाशे

"जवाकुसुमसंकाशं छन्दो ज्ञेयं विपश्चिता ।
चकोरास्य कञ्जपाणि शक्ति बिभ्रच्छिलाऽन्विताम् ।
लोहकुण्डलकप्रोतप्रवालकृतकुण्डलम्" इत्युक्तम्,

एतेन वर्णादिविषयिकाऽऽरोपोक्तिः कस्यापि तत्तत्प्रमाणाज्ञाननिबन्धनत्वेन हेयैव,

इदमिहावधेयम्—सर्वत्रैवाध्यात्मिकादिभेदत्रयेऽन्योन्य भेदसहिष्णवभेदात्मकतादात्म्याध्यासेन शास्त्रलोकयोर्व्यवहारो यथा गङ्गाऽऽदिषु पूजनादिकमाधिदैविकत्वस्तुतादात्म्येन, कथमन्यथा चेतनेतरेषु प्रवाहाद्यात्मकेषु तादृशाचारसंगतिर्भवेत्, तस्मादाधिदैविकत्वनान्तरीयकधर्मारोपनिबन्धनैवाधिभौतिके तथा वर्त्तना शास्त्राचार्याणाम्,

"उपायाः शिक्षमाणानां बालानामुपलालना. ।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते"
इत्यादिरीत्यैव सर्वत्रत्यो व्यवहारः,

एवमाधिभौतिकत्वनान्तरीयकधर्मतादात्म्यप्रयुक्तो व्यवहार आधिदैविकेऽपि यथा गङ्गापदस्य शक्तिस्तावद् भगीरथखातावच्छिन्नप्रवाहविशेष एव तादृशप्रवाहत्वस्यैव गङ्गापदप्रवृत्तिनिमित्तत्वे लाघवादन्यथा शक्यताऽवच्छेदकनानात्वे गङ्गाऽऽदिपदानां नानाऽर्थताऽऽपत्त्यादिदोषाः स्यु,

एवं प्रकृतेऽपि खल्वक्षरसंख्याऽवच्छिन्ने छन्द.पदस्य शक्तिस्तद्देवताबोधस्तु-त्काध्यासनिबन्धन एव, इत्थमेवानादिप्रसिद्धेः,

एतेन योगार्थाश्रयेणार्थान्तरकल्पन छन्द.शब्दस्याप्रामाणिकमेव, अवयवशक्तिज्ञानाधीनबोधं प्रति समुदायशक्तिज्ञानजिष्ठप्रतिबन्धकताया आनुभविकत्वेन सर्ववादिसंमतत्वात्, "छन्द" इति महर्षिपिङ्गलाचार्यसूत्रस्वारस्याच्च,

यद्यपि च्छन्द शास्त्रस्य वेदाङ्गतया वेदोक्तच्छन्दांस्येव विवेचनीयतामर्हन्ति तथाऽपि लौकिकानामपि च्छन्दसां प्रसङ्गायत्तनिरूपणीयताकतया श्रीमत्पिङ्गलाचार्येण तृतीयाध्याये वेदागतच्छन्दांसि निरूप्य, "अथ लौकिकमि"त्यादिना परस्ताल्लौकिकान्यपि तानि व्यरूपिषत,

प्रकृतग्रन्थस्य च पाणिनीयेतरव्याकरणवत् केवललोकपरत्वेन लौकिकच्छन्द.संबद्धविषयकविचारप्रवणत्वेनास्माभिरपि स एवानुसृत. पन्थाः,

लोके च—

"आदौ तावद् गणच्छन्दो मात्राच्छन्दस्ततः परम् ।
तृतीयमक्षरच्छन्दश्छन्दस्त्रेधा तु लौकिकम् ॥
आदार्याऽऽद्युद्गीतिपर्यन्तं गणच्छन्द प्रकीर्त्तितम् ।
वैतालीयादिचूलिकाऽन्तं मात्राच्छन्दः समीरितम् ॥
समान्याद्युत्कृति यावदक्षरच्छन्द एव च"

इत्याद्यभियुक्तोक्तदिशा च्छन्दस्त्रैविध्यं दृश्यते,

गणश्च द्विविध —मात्रागणो वर्णगणश्च, तत्र "लः समुद्रा गणः," इति पैङ्गलसूत्रेण लघुपदस्य मात्रोपलक्षकत्वेन मात्राचतुष्टत्वेनैव मात्रागणो लिलक्षयिषितः, स च पञ्चविध· "गौ गन्तमध्यादिर्न्लश्चे"ति सूत्रान्तरेणोक्त·,

वर्णगणाश्च—"धीश्रीस्त्री म्" १ "वरा सा य्" २ "का गुहा र्" ३ "वसुधा

सू" ४ "सा ते क त्" ५ "कद्रा स ज्" ६ "किं वद भ्" ७ "न हसन्" ८ इति पारमर्षसूत्राष्टकेन वर्णत्रिकत्वेन पर्यवसितलक्षणाः सूचिता.,

अत एवाभियुक्तैः—

"मयरसतजभनसंज्ञाश्छन्दस्यष्टौ गणास्त्रिवर्णाः स्यु"-

रित्यादिनोक्ताः,

सूत्रनिर्दिष्टगणस्वरूपानुसारेणैव च

"सर्वगुरुर्मः कथितो भजसा गुर्वादिमध्यान्ताः ।

छन्दसि न. सर्वलघुर्यरता लघ्वादिमध्यान्ताः"

इत्येवं प्रातिस्विकरूपेण लक्षिताः,

अत्र यद्यपि गणानामक्षरघटितत्वेन गणच्छन्द एवाक्षरच्छन्दोऽपि वक्तुं सुशकं-तथाऽप्यनारब्धगणानामप्यक्षराणां पार्थक्येन छन्द प्रयोजकत्वं "ग्लौ"विति सूत्रयित्वा "ग्लिति समानी" इत्यादि सूत्रयत आचार्य्यस्य तात्पर्य्येणानुमीयते, गुरुलघुस्वरूप-लक्षणे त्वाचार्यनागराजेनोक्तं—

(१)दीहो संजुत्तपरो बिन्दुजुओ पाडिओ अ चरणान्ते ।

स गुरू बङ्कु दुमत्तो अण्णो लहु होइ सुद्ध एककलो ॥

-इति सूत्रे,

गुरुलघ्वोर्लक्षणे"गृ ल्" "लौ स." इति पारमर्षसूत्राभ्यां स्फुटीकृते,

एवमवस्थाविशेषे लघोर्गुरुत्वं चोभयत्रातिदिष्टं "हे" "प्रादिपर" "गन्ते" इति सूत्रैः, सूत्रद्वयेऽपि "बिन्दुजुओ""आदि"पदाभ्यां गृहीतानामनु(२)स्वारविसर्गजि-ह्वामूलीयोपध्मानीयव्यञ्जनानां स्वीकारादेभिः सहितोऽपि लघुस्तथा, पादान्तस्थो-लघुश्च विकल्पेन गुरुर्भवति सकलकविच्छान्दससमयानुसाराद् अत एव लक्ष्मीधरोऽ-प्युक्तसूत्रव्याख्याने "पातितश्चे"त्यत्रत्यचकारं विकल्पार्थकं व्याचष्टे स्म,

केदारभट्टश्च रत्नाकरे "वा पादान्ते" इत्यनेन व्यचीक्लृपद्,

एतेन "विकल्पस्याप्रस्तुतत्वादिति वृत्तिकारोक्तिरसमञ्जसैव,

न चैवं सर्वत्र पादान्ते लघोर्वैकल्पिकगुरुत्वविधाने प्रमाण्यादावन्ते गुरुत्वनि-यमो विरुध्येतेति वाच्यम् ?

---

(१) दीर्घस्संयुक्तपरो बिन्दुयुत पातितश्च चरणान्ते ।

स गुरुर्वक्रो द्विमात्रोऽन्यो लघुर्भवति शुद्ध एककलः ॥

(२) अत्र दीर्घसंयुक्तपूर्वानुस्वारविसर्गिणामुदाहरणानि प्रसिद्धानि, जिह्वामूलीयोपध्मानीयवतोर्लघ्वोस्तु-

"मन्दᳵ कवियशᳵप्रार्थी,"

व्यञ्जनपूर्वस्य लघोश्च

"रघूणामन्वय वक्ष्ये तनुवाग्विभवोऽपि सन्"

क्रमेण ज्ञेयानि,

पादान्ते लघोर्वैकल्पिकगुरुत्वस्योदाहरण तु तदेव बोध्य यत्र पादान्ते गुरुत्वलघुत्वयोरन्यतरस्य नियमो नानुशासनिक, तन्नियमे च नियामकस्यापवादकत्वैवेति,

शास्त्रद्वयप्रामाण्यरक्षणायोत्सर्गशास्त्रीयोद्देश्यताऽवच्छेदककोटावपवादशास्त्रीयोद्देश्यताऽवच्छेकातिरिक्तत्वेन संकोचस्य सर्वतन्त्रसिद्धान्तिसंमतत्वात् प्रकृतेऽपि "विक्लति प्रमाणी" इत्यादिशास्त्रोद्देश्यस्थलानि विहायैवोत्सर्गप्रवृत्ते., क्व चित्पुनरति दिष्टगुरुत्वकेऽपि लघौ लद्युत्व प्रतिप्रसूयते यथोक्तं नागराजेन—

(१)"कत्थवि सजुत्तपरो वण्णो लहु होइ दंसणेण जहा ।
परिहसइ चित्तधिज्जं तरुणिकडक्खम्मि णिव्वुत्त" इति,

एतत्सूत्रस्वारस्येन्वैव क्रमत्वेन परिभाषितात् पादादिसयोगात् पूर्वस्य प्राप्तगौरवस्यापि लघिमा रत्ना(२)करे प्रतिप्रसूतः, प्राकृते तु तेनैव विशेष उक्तः,

"इ(३)हिकारा बिन्दुजुआ एओ सुद्ध अ वर्णमिलिता वि लहू ।
रहवञ्जणसंजोए परे असेस वि सविहास" इति,

एतत्सूत्ररीत्या सानुस्वारत्वादिका(४)रहकारयोर्गुर्वोर्व्य(५)अनेन मिलितयोरमिलितयोरेओवर्णयोर्दीर्घत्वेन गुर्वो रे(६)फहकाराभ्यां मिथो व्यञ्जनान्तरेण संयुक्ताभ्यां पूर्वत्वेन गुरुभूतस्य लघाश्च प्रामाणिकलक्ष्यानुरोधेनाभिमतं गुरुत्व लघुत्वं वा व्यवतिष्ठते, किंच—

"ज(७)इ दीहो विअ वण्णो लहु जीहो पढइ सोवि लहु ।

---

(१) कुत्रापि सयुक्तपरो वर्णो लघुर्भवति दर्शनेन यथा,
परिस्खलति चित्तधैर्य तरुणीकटाक्षे निर्वृत्तम्"

(२) पादादाविह वर्णस्य सयोग क्रमसज्ञकः ।
पुरःस्थितेन तेन स्याल्लघुनाऽपि क्व चिद् गुरो ॥

(३) इकारहिकारौ बिन्दुयुतावेओ शुद्धौ च वर्णमिलितावपि लघू ।
रेफहकारौ व्यञ्जनसयोगे परे अशेषमपि सविभाषम् ॥

(४) माणिणि माणहिं काइ फल ए(५)ओ जे चरण पडु कन्त ।
सहजे भुअगम जइ णमइ किं करिए मणिमन्त ॥
मानिनि ! मानेन किं फलमेष यदि चरणयो पतित कान्त ।
सहजेन भुजङ्गमो यदि नमति किं कुरुतो मणिमन्त्रौ ॥

(६) चेज सहज तुहु चचला सुन्दरिह्लदाहि बलन्त ।
पअड ण घल्लसि खुल्लणा कीलसि उण उह्लसन्त ॥
चेतः ! सहजेन त्व चञ्चलं सुन्दरीह्लदे बलत ।
पदमपि न ददास्यधम ! क्रीडसि पुनरुल्लसत् ॥

(७) यदि दीघमपि वर्णं लघु जिह्वा पठति सोऽपि लघु ।
वर्णा अपि त्वरितपठिता द्वौ त्रयो वा एक जानीत ॥

यथा—

अरे रे वाहहि कान्ह णाव छोटि डगमग कुगति ण देहि ।
तइ इथि णदिहि सँतर देइ जो चाहिसि सो लेहि ॥
अरेरे वाहय कृष्ण ! नाव सूक्ष्मां डगमगकुगतिं न देहि ।
त्वमस्यां नद्यां सतार दत्वा यदपेक्षसे तद् गृहाण ॥

वण्णो वि तुरिअपढिओ दोत्तिण्णि वि एक्क जाणेहु"

इति सूत्रेणान्यथाऽपि दीर्घस्य लघुतोक्ता ।

निर्दिष्टगुरुलघुघटित वस्तुगत्या छन्दोमात्रमेव भवति, तस्य च पादयोगात पद्यत्वं तच्च पद्यं जातिवृत्तभेदाद् द्विविधं--

"पद्यं चतुष्पदं तच्च जातिर्वृत्तमिति द्विधा"

इत्यभियुक्तोक्तेः, तच्च वृत्तं "सममर्धसमं विषमं चे"ति सूत्रानुसारेण त्रिधा, तदुक्तं—

"सममर्धसमं वृत्त विषमं च तथा परम्" इति,

लक्षितानि चैतानि—

अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः ।
तच्छन्दःशास्त्रतत्त्वज्ञाः सम वृत्तं प्रचक्षते ॥
प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत् ।
द्वितीयस्तुर्यवद् वृत्तं तदर्धसममुच्यते ॥
यस्य पादचतुष्केऽपि लक्ष्म भिन्न परस्परम् ।
तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः ॥

तत्र समत्व (१)श्री–तनु(२)मध्याऽऽदिषु, अर्धसमत्वमुपचित्र(३)कादिषु, विषमत्व पदचतु(४)रूर्ध्वादिषु,

इह यद्यपि समादिभेदा अक्षरच्छन्दःस्वेवानुशिष्टाः किन्तु युक्तिसाम्याद् मात्राच्छन्दस्स्वपि यथासम्भवं सन्तो न निवार्यन्ते यथा--गणच्छन्दसि किलार्धसमत्वं-

---

(१) एतल्लक्षण रत्नाकरे 'गु श्री" लक्ष्य यथा—

विष्णु वन्दे,

यद्यप्युक्ताऽऽदिसुप्रतिष्ठाऽन्तानां जातीनामुद्देश सूत्रे नास्ति तथाऽपि सूत्रकारानुमोदितानि; कथमन्यथा प्रस्तारप्रदर्शने "द्विकौ ग्लौ" सूत्र सङ्गच्छेतेति निर्मूलताशङ्कैव निर्मूला,

(२) "तनुमध्या त्यौ"इति सूत्रेण लक्षिता, लक्ष्य यथा—

कृष्णसनाथा तर्णकपङ्क्ति । यामुनकूले चारु चचार,

(३) "उपचित्रक सौ स्लौग्, भौ भौ ग्" इति सूत्रेणोक्त, लक्ष्य तु—

उपचित्रकमत्र विराजते चूतवन कुसुमैर्विकसद्भि ।
परपुष्टविघुष्टमनोहर मन्मथकेलिनिकेतनमेतत् ॥

(४) "प्रतिपाद चतुर्वृद्ध्या पदचतुरूर्ध्वम्" इति लक्षणसूत्र, लक्ष्य यथा—

तस्या कटाक्षविक्षेपै
कम्पिततनुरतिकुटिलैर्दीर्घै ।
तक्षकदष्ट इवेन्द्रियशून्य क्षतचैतन्य
पदचतुरूर्ध्वं न चलति पुरुष पतति सहसैव ॥

(१)गीत्यादिषु, विषमत्वं पथ्याऽऽ(२)दिषु, समत्वं चात्रानुदाहृतमाकरादिषु तथाऽपि प्रस्तारप्रक्रिययाऽऽवि.सद्वेतदपि दुर्वारमेव, मात्राच्छन्दसि समत्वं (३)चारुहासिन्यादिषु, अर्धसमत्वं (४)वैतालीयादिषु, विषमत्वं च पादा(५)कुलकादिषु,

अयमत्र विशेषः—यद्यपि पादचतुष्टये मिथो विजातीयसंख्यकाक्षरकत्वनिबन्धनं विषमत्वं प्रसिद्धं तथाऽप्यनुभवानुरोधेन समसंख्यकाक्षरकेष्वपि पादेषु गुरुलघुविन्यासक्रमव्यत्यासेनापि विषमत्वप्रसक्तिर्दुरवरोधा ततश्चैतादृशमपि वैषम्यं ईयमेव, एवमर्ध समत्वमपि, सर्वथैव साम्ये तु समत्वमेव, एषां सद्भावश्चानुष्टुब्जातौ व्यक्तः—यथा समा(६)न्यादौ समत्वं, चपला(७)वक्त्रादावर्धसमत्व, पथ्या(८)वक्त्रादौ विषमत्वम् इति ।

समत्वादीनामुपजीव्य पादत्वं च—"पादश्चतुर्भाग." "यथावृत्तसमाप्तिर्वा" इति सूत्राभ्यां समवृत्तेष्वर्धसमविषमवृत्तेषु च क्रमेण लक्षितं, चतुर्भाग इत्यस्य चतुर्थभाग- इत्यर्थं, चतु.पूरणो भागश्चतुर्भाग इति मध्यमपदलोपात् कथं चित्सूत्रं संगमनीयम् ।

---

( १ ) "आयर्धसमा गीति" इति सूत्र, लक्ष्य च—
मधुर वीणारणित पञ्चमसुभगश्च कोकिलालाप ।
गीति पौरवधूना सुत कुसुमायुध प्रबोधयति ॥

( २ ) "त्रिषु गणेषु पाद पथ्याऽऽद्ये च" इति सूत्रलक्षिता, लक्ष्य —
पथ्याशी व्यायामी स्त्रीषु जितात्मा नरो न रोगी स्यात् ।
यदि वचसा मनसा वा द्रुह्यति नित्य न भूतेभ्य ॥

( ४ ) "अयुक् चारुहासिनी" सूत्रेणोक्ता, लक्ष्य—
मनाक् प्रसृतदन्तदीधिति स्मरोल्लासितगण्डमण्डला ।
कटाक्षललिता तु कामिनी मनो हरति चारुहासिनी ॥

( ३ ) "वैतलीय द्विस्वरा अयुक्पादे युग्वसवोऽन्ते र्ला इति सूत्रलक्षित, लक्ष्य यथा—
क्षुत्क्षीणशरीरसञ्चया व्यक्तीभूतशिरास्थिपञ्जरा ।
केशै. परुषैस्तवारयो वैतालीयतनु वितन्वते ॥

( ५ ) 'शभि पादकुलकम्" एतत्सूत्रेणोक्त, लक्ष्य यथा—
अलिवाचालितविकसितचूते काले मदनसमागमदूते ।
स्मृत्वा कान्तां परिहृतसार्थ पादाकुलक धावति पान्थ. ॥

[ ६ ] "ग्लिति समानी" लक्षणसूत्र लक्ष्य—
ओं नमो जनार्दनाय पापसङ्कमोचनाय ।
दुष्टदैत्यमर्दनाय पुण्डरीकलोचनाय ॥

[ ७ ] "चपलाऽयुजो न्" लक्षणसूत्रमिद, लक्ष्य च—
क्षीयमाणाग्रदशना वक्रनिर्मांसनासाग्रा ।
कन्यका वाक्यचपला लभते धूर्तसौभाग्यम् ॥

[ ८ ] "पथ्या युजो ज्" सूत्रोक्तलक्षण, लक्ष्य यथा—
नित्य नीतिनिषण्णस्य राज्ञो राष्ट्र न सीदति ।
न हि पथ्याशिन काये जायन्ते व्याधिवेदना ॥

संप्रति व्याख्यभूतया पादसमाप्त्या स्मारिता व्यापिका यतिर्विचारणीया, एषा च "यतिर्विच्छेद" इति सूत्रेण लक्षिता, विच्छेदनिर्वचने तु बहुभिर्बहुविधाभिः पटिमाटोप. प्रसारितः, वस्तुतस्तु यथा—स्वररागलयतालानुभूतिपरिपचेलिमसंस्कारपरिकर्मितश्रवणेन्द्रियकजनैरनेकविधमपि तदाययाथार्थ्यं निर्धार्य्यते तथैव नानास्थानोचिताऽरुन्तुदहृद्ययतिरपि तदनुगुणसंस्कारसध्रीचीनकर्णसाक्षिकैव प्रमीयते, तद्व्यवस्थापनदिगपि कियतीवाभियुक्तैः प्रादर्शि-यथा—

"यति सर्वत्र पादान्ते श्लोकार्धे तु विशेषतः ।
समुद्रादिपदान्ते च व्यक्ताव्यक्तविभक्तिके ॥
क्वचित्तु पदमध्येऽपि समुद्रादौ यतिर्भवेत् ।
यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ ॥
पूर्वान्तवत् स्वरः सन्धौ क्वचिदेव परादिवत् ।
एष्टव्यो यतिचिन्तायां यणादेश परादिवत्" ॥
नित्यं प्राक्पदसम्बद्धाश्चादयः प्राक्पदान्तवत् ।
परेण नित्यसम्बद्धाः प्रादयश्च परादिवत् ॥

१ व्यक्तविभक्तिके पादान्ते यथा—वागर्थाविव सम्पृक्तौ,

२ अव्यक्तविभक्तिके पादान्ते यथा—
नमस्तुङ्गशिरश्चुम्बि-चन्द्रचामरचारवे,

३ अधिकार्य्याभावस्पष्टविभक्तिकत्वान्यतरविशेषप्रयुक्ता श्लोकार्धे यथा—
अथ प्रजानामधिप. प्रभाते जायाप्रतिग्राहितगन्धमाल्याम् ,

४ व्यक्तविभक्तिके चतुरादिसंख्यकवर्णकपदान्ते यथा—
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु,

५ अव्यक्तविभक्तिके तादृशे पदे यथाऽत्रैव तनयापदान्ते,

६ पूर्वापरभागयोरेकवर्णात्मकत्वाभावे पदमध्येऽपि यथा—
वैरिञ्चानां तथोच्चा—रितरुचिरऋचामाननानां चतुर्णाम् ,

७ पूर्वापरभागयोरेकवर्णात्मकत्वाभावे संहितैकादेशे प्रायः पूर्वान्तवद्भावे यथा—
जम्भारातीभकुम्भो—द्भवमिव दधतः सान्द्रसिन्दूररेणुम् ,

८ तत्रैव श्रुतिकाटवाभावे परादिवद्भावेऽपि यथा—
अन्तेवासिदयालुरुज्झितनये—नासादितो जिष्णुना,
व्यञ्जनस्यापि गौणत्वेनात्र स्वरानुरोधात पराङ्गत्वम् ,

९ यणादेश· परादिवद् यथा—
विततघनतुषारक्षोदशुभ्रासु दूर्वा—
स्वविरलपदमालां श्यामलामुल्लिखन्तः,

१० चादीनां पूर्वसम्बन्धनित्यत्वे यथा—

स्वादु स्वच्छ सलिलमपि च प्रीतये कस्य न स्याद् ,

११ प्रादीनां परसम्बन्धनित्यत्वे यथा—

दूरारूढप्रमोदं हसितमिव परिस्पृष्टमाशासखीभिः,

"इत्याद्यौचित्यतो ज्ञेया यतिः श्रुतिसुखा बुधैः"—

रित्यादिकाव्यकल्पलताऽऽद्युक्तेरौचित्यायत्ता हि यतेः कर्त्तव्यतेति फलितम् ।

इदानी छन्दःशास्त्रे विविधप्रयोजनाः केचन प्रत्ययपदव्यवहृताः परमर्षिपिङ्गला चार्य्यैः प्रदर्शितदिगनुसारेण च्छान्दसाभिरूपनिबन्धकारैर्विस्तारश्य वर्णिता विषयाः सन्ति,

ते च रत्नाकरे—

"प्रस्तारो नष्टमुद्दिष्टमेकद्व्यादिलगक्रियाः ।

संख्यानमध्वयोगश्च षडेते प्रत्ययाः स्मृताः" ॥

इत्युक्ताः, तथाऽन्यत्रापि—

"पूर्णं खण्डो मेरुर्बृहती लघ्वी पताका च ।

मर्कटिकाऽपि च तादृक् पातालं सूचिका चैव" ॥

एतेऽधिकारास्ते प्रोक्ताः,

प्रत्ययत्वं चैषां संख्याऽऽदिप्रतीतिकरणत्वात् सम्भावनाऽऽस्पदविषयेषु विश्वासापरनामकप्रत्ययोत्पादकत्वाद्वा ज्ञेयम् ,

एते च सर्वे प्रत्यया मात्राऽऽदिभेदवतां समार्धसमविषमप्रभेदानां यावच्छन्दसामेव भवन्ति यथासम्भवम्

तत्र तत्तन्मात्रावर्णजातिघटकव्यक्तीनां स्वरूपादिज्ञानं यत्र प्रस्तीर्य्यतेऽसौ प्रस्तारः, अयं च योग्यताऽनुसारेण सर्वगुरुकव्यक्तिमारभ्य, सर्वलघुकव्यक्त्यवसानो वामपार्श्वतः सम्प्रदायानुरोधेनोपरिष्टात् प्रदर्श्यते परन्तु दक्षिणपार्श्वतोऽप्यधस्ताच्चापि भवितुमर्हति,

प्रस्तारपरिशोधनफलकं नष्टं, तदर्थमेव चोद्दिष्टं, विशेषश्चैवः—

संख्येयविशेषधर्मिणि स्वरूपं यत्र जिज्ञास्यते तन्नष्टम् ,

स्वरूपविशेषं प्रदर्श्य, कतिथोऽयं भेद इति यत्र जिज्ञास्यते तदुद्दिष्टम् ,

अस्यां जातौ कियद्गुरुकाः कति कियल्लघुकाश्च कति व्यक्तय इति जिज्ञासाऽपनोदनानुगुणो व्यापार एकद्व्यादिलगक्रिया,

जातिघटकव्यक्तिसंख्याबोधकः प्रत्ययः संख्यानम् ,

अध्वयोगस्तु प्रस्तारलिखनरीतिप्रदर्शनमार्गः,

यत्र 'मेरुसदृशाकृतिकचित्रेऽनेकजात्यन्तर्गतव्यक्तिघटकगुरुलघुसंख्याज्ञापनं यौगपद्येन क्रियते स मेरुः,

यत्र पताकाऽऽकृतिके चित्रे पार्थक्येनैव द्व्यादिगुरुलघुकव्यक्तीनां संख्यानियमनं सा पताका,

स्यापि 'कर्णिकारमङ्ख' इति नामान्तर प्रसिद्धि प्रापदित्यस्य श्रीकण्ठ-
यस्य व्याख्यात्रा द्वितीयराजतरङ्गिणीकारेण राजानकजोनराजेन
-१४६७ ख्रि )—

'विवृण्वता सौरभरोरदोष
बन्दिव्रत वर्णगुणे स्पृशन्त्या ।
विकस्वरे कस्य न कर्णिकारे
घ्राणेन दृष्टेर्ववृधे विकार ॥' ( श्रीकण्ठच ६।१२ )

श्लोकव्याख्याने स्पष्टीकृतम् । अस्य ज्यायान् सहोदरोऽलङ्कारापरनामा जयसिंहराज्ञ सामन्तो विख्यातगुणगौरवश्चासीदित्यस्यैव काव्यस्य र्गाद्वगम्यते । तथाहि—

'य सामन्तशिखामणेऽत्र भवतालङ्कारनित्य सता-
मानीतोऽनवकाशतां हृदि हृताशेषाद्भुतापद्धियि ।
तेषा श्रोत्रविलिह्यमानगहनत्वत्सूक्तिचर्वोत्सवै
राशीभूत इवाविशीर्षमधुना कम्प स संपद्यते ॥
एक श्रीजयसिंहपार्थिवपति काश्मीरमीनध्वज
तस्योपासितमन्त्रिविग्रहमलङ्कार द्वितीय स्तुम ।
भूभार प्रथमेन पन्नगपते क्षमा रक्षता वारितो
नीतोऽन्येन कृतार्थता प्रवचनैर्भाष्योपदेशश्रम ॥' इति
( श्रीकण्ठच. २५।४०, ६१ )

प्रथम श्लोको लोष्टकस्येति जोनराज । आरोहक-भगदत्तस्य सू-
क्तीसग्रहे श्लोकान्तरमपि लोष्टकस्य लभ्यते । तेन स एवाय भवेत् ।
( भागवताचार्यदेवधरस्य । लङ्ककस्यालङ्कारेति नाम राजतरङ्गिण्या-
ते । तथाहि—

'अलङ्काराभिधो बाह्यराजस्थानाधिकारभाक् ।
अधृष्यो मानुषैर्युद्धे विरुद्धान् बहुधावधीत् ॥'
( राजत ८।२६, ५८ )

। मङ्खवृत्तमनायासेन बोद्धु शक्यम् । अस्य श्रीकण्ठचरितमनेकार्थको-
निद्वयमेवाद्यावधि ज्ञातम् ॥

त्र सर्वेस्वे स्मृताना केषाचनालङ्कारनिबन्धकाराणा प्रसङ्गत समय

एवं च निबन्धारमुद्दिश्य "मङ्गलमहर्षिचरित"नाम्नः काव्यस्यान्ते कविवंश-वर्णनप्रसङ्गे वृत्तयुगलं वर्णितं तदेवोद्धृत्येह प्रदर्श्यते—

"साहित्यं सकलाः कला हयवयःखड्गादिशास्त्रं वर-
सङ्गीतं च षडङ्गदर्शनमतादर्शं परामर्शितम् ।
आलङ्कारिककारिकाऽवतरणं चाद्वैततत्त्वादरं-
ब्रह्मानन्दसहोदरं पररसास्वाद प्रसादं गुरो. ॥
सिद्धान्तं गणितद्वयं च करणं तत्ताजिकं जातकं-
मौहूर्तं स्वरशास्त्रपद्धतिगती सत्संहितां शाकुनम् ।
यन्त्रं यामलकेरलं च रमलं तन्त्रं विचारं नय-
मायुर्वेदमथागमं च निगमं विस्पष्टमाचष्ट य. ॥

वाग्वल्लभस्य चानुरूपा "वरवर्णिनी"नामिका टीका;

मूलकर्तृपुत्रेण महामहोपाध्यायेन श्रीदेवीप्रसादशर्मणा कृता,

टीकाकारश्चैषः—अष्टवर्षायुष्कः पित्रोपनीतो व्याकरणे लघुकौमुदीमध्यापित, किन्तु दैवदुर्विपाकेण साधारणज्वरादिनैव रुग्णोऽस्य जनकः पञ्चत्वं प्राप्तः, तदानीमे वामयावितायां निजायु.शेषं विज्ञायैवमुक्त छत·—

"वत्स ! मम जीवनं द्वित्राहैरेव नङ्क्ष्यति नाहं त्वा पाठयितुं प्राभूवं, किन्तु त्वां प्रति मदादेशोऽयं यत्त्वयाऽन्यत्रत्यगुरोरलाभे काममज्ञेनैव जीवनयात्रा समापनीया, न तु जातु-चिदपि काशीस्थादध्यापकादेकमप्यक्षरमध्येतव्यम् , अन्यथा कर्माधीनतया यत्र कुत्रापि गतेन मया कष्टमनुभविष्यते",

माता चास्य बालकस्यार्थात् स्वपत्नी चोक्तादेशपालनाय बाढमन्वरुध्यत,

अनन्तर च स्वर्गतेऽस्मिन् किञ्चिदून वर्षद्वयमतीयाय, प्राक्तनसंस्कारवशाद् बालोऽपि देवीप्रसादोऽध्ययनान्नाग्लासीत् प्रत्युत स्वतो मातु. प्रेरणातश्चाधिजिगांसया ताद्दशमध्यापकमनुसन्दधदवर्त्तत,

अहं तु तदानीमधीत्य सिद्धान्तकौमुदी साधारण्येनावासकाव्यबोध· श्रावृन्दा [illegible]मध्ययनायागत्य भगवत्कृपया स्वमनोऽनुरूपान् गुरून् वाग्देव्या. पुम. श्री ६ गङ्गाधरशास्त्रिपादानाश्रित्य, तदिच्छाऽनुसारेण तत एवाध्येतुं-

चाल्पीयस्येवानेहसि नव्यन्यायेऽनुमानखण्डाध्ययनारम्भमसंपादक [illegible]दासन्यायरत्नभट्टाचार्य्यमहाशयेभ्योऽकार्षं, तदनु तत्परादिव ज्यौतिषागमात् श्री६मदुदितनारायणशर्ममिश्रमहोदयाज्ज्यौतिषाध्ययनमारभे स्म,

अस्मिन्नेवान्तरे देवीप्रसादोऽपि समध्येतुं मामुपसद्य, सिद्धान्तकौमुदीमारब्धवान् , अहं च तत्तदध्यापितविषये श्री६ गुरुभि. काशिकराजकीयसंस्कृतविद्याऽऽलये परीक्षा दातुमाज्ञापिषि,

देवीप्रसादोऽपि मेधावी क्रमेणानेकविषयानवगाढुमैच्छत्, तदनुरूपं प्रावर्त्तिष्ट च,

एवमेकादशवर्षाण्यविच्छेदेनाधीयन् व्याकरणप्राचीनन्यायसांख्ययोगमीमांसाद्वय-धर्मशास्त्रसाहित्यशास्त्रेषु प्रशंसनीयां वैदुषीमधिगतवान्, ससारयात्रौपयिकाध्यापन च बहुषु पाठशालासु व्यधासीद्,

अहमपि पाठ्यान्तराणि यथाशक्ति समाप्य नव्यन्यायानुमानविभागावशिष्टांशाधिगतये पूर्वाध्यापकमहाशयेऽप्रतीकार्यहतशोकाकुलत्वेन स्वाभिजन गतवति, नवद्वीपे कणभुगवतारान् श्री६ यदुनाथन्यायसार्वभौमभट्टाचार्यमहाशयानुपासीदम्,

वर्षषट्केन तत्रत्याध्ययनपरीक्षाऽन्तकार्यं प्रपूर्य्य पुनरधिकाशि समागताद् मद् देवीप्रसादोऽपि नव्यन्याये शब्दखण्डग्रन्थानधीतवान् प्रकारान्तरेणाध्ययनमेव समापिपद्,

अनुमानखण्ड ज्यौतिषं चैनमधिजिगापयिषन्नप्यहं कुटुम्बभरणानुगुणवृत्तिसम्पादनवैयग्र्येणानुकूलसमयानुपलम्भात् शिथिलादरमेनं तथा कारयितुं नापारयम्,

एव चैनेन मद्विन्नादेकमप्यक्षरं नाधीतम्,

इत्थंकारं बहुतिथे समये गते महामहोपाध्यायपदमेनेन सम्राजोऽधिगत, राजसभाविशेषे च कविचक्रवर्त्तिपदवी लब्धा, काशीस्थविश्वविद्याऽऽलये चाध्यापितम्,

प्रतिवर्षं भूयांसश्छात्रा नानाविषयेषु बहुत्राचार्यतीर्थान्तपरीक्षासूदतारिषत, कामं यशोऽर्जितं परन्तु कर्मायत्तालपायुष्कतया १९८८ वैक्रमवर्षेऽतीसारेण पीडित. फाल्गुनसितैकादश्यामेष यशोमात्रशेषतामगमत्,

एतस्य जीवनवृत्तान्तः, तत्कृतसंस्कृतभाषाऽऽदिपुस्तकवृत्तं चैतदीयग्रन्थान्तरप्रकाशनसमयेऽवगत भावीति सम्भाव्यते,

दुःखस्यावसरोऽस्त्येष.—अध्याप्य विशिष्टयोग्यतासम्पन्नीकृतेन येन स्वारब्धग्रन्थादिसमाप्तिरस्माभिराशासिता, तदारब्धप्रकाशनस्यास्य ग्रन्थस्य भूमिकाऽस्माभिरेव लेखनीयतामासादयिष्यतीति विधिमन्तरेण केन समभाव्यपि,

शेषसमये तेनापि स्वावस्था पश्यताऽहं तदर्थं प्रार्थितः,

भगवत्कृपया तदग्रे प्रतिश्रुतमेतत्कार्यमद्य पूर्त्तिमलब्धेति विशिष्टस्नेहास्पदं वत्सः श्रीमान् देवीप्रसादोऽपि सन्तुष्टो भूयाद् यत्र कुत्रापि स्थित इति जगदीश्वरं साञ्जलिः

प्रार्थयते—

व० सं० १९९० विजयदशम्यां—
वाराणस्याम्।

श्रीमन्माध्वसंप्रदायाचार्य्य-
दार्शनिकसार्वभौमसाहित्य-
दर्शनाद्याचार्यतर्करत्नन्यायरत्न—
**गोस्वामिदामोदरशास्त्री।**

श्रीः ।

श्रीमद्दुःखभञ्जनकवीन्द्रप्रणीतो–

# वाग्वल्लभः ।

## वरवर्णिनीव्याख्यासंवलितः ।



अथ खलु सकलकलातिकुशलोऽगाधसाहित्याकूपारपारगोऽखण्डमहीमण्डलमण्डनायितयशोराशिभासिताशावलयो विद्यावनविहारकेसरी विनताऽनेकनरपतिमौलिमालिकामिलिन्दकुललालितचरणकमलयुगलो विदितप्रभावो भावोपहितमानसो ज्योतिर्विद्वरो निगमागमविचारचातुरीचणोऽगणितगुणगणः कान्यकुब्जवंशावतंसो वाराणसीनिवासी तत्रभवान् श्रीमान् दुःखभञ्जनो नाम कवीन्द्रः 'शिक्षाकल्पो व्याकरणं निरुक्तं ज्यौतिषं तथा। छन्दसां विचितिश्चैव षडङ्गो वेद इष्यते' इति वचनाद्वेदाङ्गत्वेन प्रतिपादितस्य षडङ्गो वेदोऽध्येतव्यो ज्ञातव्यश्चेति वचनान्निश्चितोचिताध्ययनविषयीकृतस्य च्छन्दश्शास्त्रस्य परमोपयोगितामिह विचिन्त्य सत्स्वपि बहुषु च्छन्दोग्रन्थेषु न कश्चिदीदृशो ग्रन्थोऽस्ति य एकाकितया बालानामुपकारी भवेदिति सुपठ पल्वलीकृतवृत्तरत्नाकरं छन्दोमञ्जरीमञ्जिमापहारमञ्जुलं निर्जितप्रस्तारपत्तन संतर्जितेतरतत्तन्निबन्ध सम्पूर्णमात्रावर्णप्रस्तारादिविस्तारसारसमन्वितमखिलोपलब्धमात्रावर्णवृत्तगद्यनामलक्षणविशिष्ट शुभाशुभगणाक्षरनिर्णयालङ्कृतं विरतिविवेकप्रवेकमुत्तमतमं वाग्वल्लभाभिधानं छन्दोग्रन्थञ्चिकीर्षुर्ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते मङ्गलमाचरणीयमिति शिष्टाचारान्मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्तीत्यादि महाभाष्यवाक्याच्चाऽऽशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुखमिति शास्त्रानुरोधेन त्रिविधमङ्गलमध्ये स्वान्तर्वर्त्तिब्रह्मभूतानिर्वाच्यचिन्मयपरमज्योतिःप्रकाशरूपवस्तुनिर्देशात्मक मङ्गलमन्तरायविध्वंसपूर्वकचिकीर्षितार्थपरिपूर्त्त्यर्थमादौ तावन्निबध्नाति—

सर्वज्ञप्रीतिपात्रं प्रणयपरिणतप्राणिविश्राणिताश्रि ।
स्वात्मारामाभिरामं किल निखिलजगन्मोहनं नोहनीयम् ॥

चञ्चच्चैतन्यचिद्रूपमनुपममुपज्ञापरिज्ञाततत्त्व ।
नित्य निश्छद्महृत्सद्मनि किमपि महो मेचक मे चकास्ति ॥ १

या जननी विबुधाना गिरीशनारायणादीनाम् ।
मञ्जुलमङ्गलमूल तस्या देव्या प्रसादोऽस्तु ॥ २ ॥

चञ्चच्चञ्चलरश्मिकाञ्चनमहामञ्चस्थितामञ्चिता
काञ्चीकञ्चुकरोचितामनिलसन्नेत्राञ्चलाञ्चिन्मयीम् ॥
देवीमञ्जनजावसञ्चयहरामपञ्चद्विपञ्चीधरा
मपञ्चास्यप्रणुतामकिञ्चनधन काञ्चित्परा चिन्तये ॥ २ ॥

साहित्यविद्वरमुदारतर शरण्य गुण्य कलासु कुशल विलसन्मनीषम् ।
विद्वन्नुत स्वपितर चितरम्यकीर्त्ति श्रीदु खभञ्जनकवीन्द्रमह नमामि ॥ ३

श्रीदु खभञ्जनकवीन्द्रवरेण पित्रा स्वीयेन निर्मितमिम रुचिर निबन्धम् ।
वाग्वल्लभं सकलवृत्तविशिष्टमिश्रप्रस्तारसारसहित विवृणोमि यत्नात् ॥४॥

वाग्वल्लभ प्रबन्धश्चित्तविनोदी सुवृत्तवित्तोऽयम् ।
निवृति प्राप्य विजयता रुचिराम्बरवर्णिनी नाम ॥ ५ ॥

चञ्चदिति । किमपि अनिर्वाच्यम् मह तेज मे मम निश्छद्महृत्सद्मनि निर्गत छद्म कपट यस्मात् एवम्भूत यत् हृत् हृदयम् तदेव सद्म भवनम् मयूरव्यंसकादित्वात्समास । तस्मिन् चकास्ति शोभते । कीदृश मह । सर्वज्ञप्रीतिपात्रम् । सर्वं जानन्ति ते सर्वज्ञा यद्वा सर्वे च ते ज्ञा विद्वास । यद्वा सर्वज्ञ शिव तेषा तस्य वा प्रीतिपात्रम् प्रेमभाजनम् । पु० की० । प्रणयपरिणतप्राणिविश्राणितश्रि । प्रणये प्रश्रये परिणता ये प्राणिन तेषु विश्राणिता दत्ता श्री सम्पत्ति शोभा वा येन तत् । पुन की० । स्वात्मारामाभिरामम् । आरमन्ते यत्र स आराम । अकर्त्तरि च कारके सज्ञायाम् हलश्चेति घञ् । स्वात्मैव आराम येषाम् ते स्वात्मारामा । यद्वा आरमणम् आराम । भावे घञ् । स्वात्मनि आराम येषाम् ते स्वात्मारामा तेषाम् अभिरामम् सुखदमिति यावत् । पुन की० । निखिलजगन्मोहनम् । निखिलस्य सर्वस्य जगत मोहनम् । मोहनमित्यत्र कर्त्तरि ल्युट् । पुन की० । नोहनीयम् । न ऊहितु योग्यम् । सुप्सुपेति समास । अतर्क्यमिति यावत् । पुन कीदृशम् । चञ्चत् । परिस्फुरत् । पुन की० । चैतन्यचिद्रूपम् । स्वप्रकाशमिति यावत् । पुनः कीदृ० । अनुपमम् । पुन कीदृशम् । उपज्ञापरिज्ञाततत्त्वम् । उपज्ञया आद्यज्ञानेन परिज्ञातम् तत्त्वम् यस्य तत् । पुन की० । नित्यम् । त्रिकालाबा ।

म् । पुन' कीदृशम् । मेचकम् कृष्णम् । यद्वा। अमेचकम् शुक्लम् । यद्वा । नित्यमिति क्रियाविशेषणम् । चकास्तीत्यत्र चकासृ दीप्तौ कर्त्तरि लट् । धीरो मनीषी ज्ञः प्राज्ञ. इति । कृशानुरेताः सर्वज्ञः इति । प्रणयप्रश्रयौ समौ इति । आद्यज्ञानमुपज्ञा स्यात् इति । स्वान्त हृन्मानस मन' इति । कृष्णे नीलासितश्यामकालश्याममलमेचका' इति । सम्पत्तिः श्रीश्च लक्ष्मीश्चे-ति महस्तूत्सवतेजसोः इति । नित्यानवरताजस्रम् इति सर्वत्र चाऽमर' । किलेति निश्चये ॥ १ ॥

सम्प्रति ग्रन्थनिर्माणनिदर्शपूर्वक कतिपयै श्लोकैः स्वसामर्थ्यमादिशात—

ब्राह्मीचारुचरित्रचित्रितमतिश्चेतश्चमत्कारकृत्
व्याहारव्यवहारभृद्व्यवहृताऽऽसंसारसारस्वतः ॥
सालङ्काररसावदातकवितावीरुद्वितानद्रुमो·
ग्रन्थं श्रीयुतदुःखभञ्जनकविर्ग्रथ्नाति वाग्वल्लभम् ॥ २ ॥

ब्राह्मीति । श्रीयुतदुःखभञ्जनकविः वाग्वल्लभम् । वाचाम् वल्लभम् । वाग्वल्लभाख्यमिति यावत् । ग्रन्थम् । ग्रथ्नाति गुम्फति । निर्मातीत्यर्थः । कीदृशः श्रीयुतदु'खभञ्जनकविः । ब्राह्मीचारुचरित्रचित्रितमति. । ब्राह्मयाः सरस्वत्याः चारुणा चरित्रेण चित्रिता मतिर्यस्य सः । पुन कीदृशः । चेतश्चमत्कारकृत् । चेतसि जनानामिति यावत् चमत्कारम् करोति । इति । पुनः कीदृशः । व्याहारव्यवहारभृत् । व्याहारस्य उक्ते. व्यवहारम् बिभर्त्ति इति । यद्वा । चेतश्चमत्कारकृद्व्याहारव्यवहार-भृत् इत्येकमेव पदम् । चेतश्चमत्कारकृच्चासौ व्याहार. तस्य व्यवहार-भृत् । पुनः कीदृशः । व्यवहृतासंसारसारस्वत. । व्यवहृतम् । व्यव-हारविषयीकृतम् आसंसारम् संसारात् आ अभिव्याप्य आङ् मर्यादाभिविध्योः इति समास. सारस्वतम् सरस्वतीसम्बन्धि । शास्त्रजातमिति यावत् येन सः । यद्वा । व्यवहृतश्चासौ आ सामस्त्येन संसार. तस्मिन् सारस्वतः सरस्वतीसम्बधी व्यक्तिविशेषः । यद्वा । व्यवहृतस्य आ सामस्त्येन संसारस्य सारे स्थिरांशे स्वता आत्मी-यत्वम् यस्य सः । पुनः कीदृशः । सालङ्काररसावदातकवितावीरु-द्वितानद्रुमः । सालङ्कारा अलङ्कारैः अनुप्रासोपमादिभिः सहिता रसैः शृङ्गारादिभिः अवदाता उज्ज्वला या कविता सैव वीरुत् प्रतानिनी लता तस्याः वितानस्य द्रुम. विस्तारार्थं वृक्ष इति यावत् । अश्वघा-सादिवत् षष्ठीसमासात् तादर्थ्यलाभ. । ग्रथ्नातीत्यत्र ग्रन्थसन्दर्भे

इति क्र्यादि गणान्तरिताद्धातोः कर्तरि लट् । ब्राह्मी तु भारती भा इति । सारो बले स्थिरांशे चेति । व्याहार उक्तिर्लपितम् इति । लता तानिनी वीरुत् इति चामरः ॥ २ ॥

प्रतिभा प्रतिभाति भारतीप्रतिभासप्रतिभासिता सती ।
जगतीह बभार भारती कुतुकं यस्य ललत्कलावती ॥ ३ ॥

प्रतिभेति । इह जगति यस्य श्रीयुतदुःखभञ्जनकवेः । प्रतिभा । नवनवोन्मेषशालिनी बुद्धिः । प्रतिभाति । शोभते । कीदृशी प्रतिभा । भारतीप्रतिभासप्रतिभासिता । भारत्याः वाग्देवतायाः प्रतिभासेन प्रतिस्फुरणेन प्रकाशेनेति यावत् । प्रतिभासिता प्रकाशिता । पुनः कीदृशी । सती समीचीना विदुषी वा । तथा यस्य भारती । वाणी । कुतुकम् । कुतूहलम् । बभार । परोक्षेऽपि अभार्षीत् इति यावत् । कीदृशी भारती । ललत्कलावती चञ्चच्चतुःषष्टिकलोपेता । पुनः कीदृशी । सती । यद्वा । यस्य प्रतिभा । तथा भारती । कुतुकम् । बभार । कीदृशी प्रतिभा । प्रतिभातिभारतीप्रतिभासप्रतिभासिता । प्रतिभाम् दीप्तिम् अतति सातत्येन गच्छति प्राप्नोति इति यावत् तच्छीला प्रतिभातिनी । अत सातत्यगमने इत्यतः सुप्यजातौ णिनिस्ताच्छील्ये इति णिनिः । यद्वा । प्रतिभातम् प्रतिभानम् अस्ति यस्या सा प्रतिभातिनी । प्रतिपूर्वाद् भादीप्तौ इत्यतः भावे क्तः । ततः अत इनि ठनौ इति इनिः । सा चासौ भारती स्त्रियाः पुंवदित्यादिना प्रतिभातिन् शब्दस्य पुंवद्भावः । तस्याः प्रतिभासेन प्रतिभासिता । भारतीपक्षेऽपि इदम् विशेषणम् योज्यम् । अन्यत्पूर्ववत् । यद्वा । यस्य प्रतिभा । भारतीकुतुकम् । भारत्याः वाग्देवतायाः । कुतुकम् । बभार । कीदृशी प्रतिभा । प्रतिभातिभारतीप्रतिभासप्रतिभासिता । प्रतिभातिन्याः भारत्याः वाण्याः प्रतिभासेन प्रतिभासिता । अन्यत्पूर्ववत् । प्रतिभाति इत्यत्र प्रतिपूर्वाद् भादीप्तौ इत्यस्माद्धातोः कर्तरि लट् । बभार इत्यत्र भृञ् भरणे इत्यतः कर्त्तरि लिट् । बुद्धि नवनवोन्मेषशालिनीप्रतिभाविदुः इति । ब्राह्मी तु भारती भाषेति । कौतूहलं तु कुतुकं कौतुकं च कुतूहलम् इत्यमरः ॥ ३ ॥

निगमार्थकलापकौतुकं कविताकल्पलताचितानभूः ।
कलयाऽखिलया किल क्षमावलयान्तः कलयाञ्चकार यः ॥४॥

निगमेति । यः श्रीदुःखभञ्जनकविः । क्षमावलयान्तः । पृथ्वीमण्डल-

मध्ये । अखिलया । सकलया । चतुः षष्टिसङ्ख्यया इति यावत् । कलया उपलक्षितम् । निगमार्थकलापकौतुकम् । वेदार्थसमूहकुतूहलम् । यद्वा । निगमार्था एव निगमार्थकाः स्वार्थे क. । तेषाम् । लापः लपनम् । लप व्यक्तायाम् वाचि । भावे घञ् । तत्कौतुकम । यद्वा । निगमायाऽयम् निगमार्थः । अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यमिति समासः। यद्वा। निगमा एव अर्थाः प्रयोजनानि यस्य सः । निगमार्थ एव निगमार्थकः स चासौ लापः तत्कौतुकम् कलयाञ्चकार । अजानात् इति यावत् । अत्र चित्तस्य प्रतिक्षणमस्थिरतया सम्भावितेन विक्षेपेण पारोक्ष्यमनुसन्धेयम् । तटस्थोक्त्या वा । कीदृशः यः । कविताकल्पलतावितानभूः । कवितैव कल्पलता तस्याः वितानभूः विस्तारार्थभूमिः । कलयाञ्चकारेत्यत्र चुरादिगणान्तरितात्कलसंख्याने इत्यतः धातोः कर्तरि लिट् । किलेति निश्चये । क्षिति क्षान्त्योः क्षमा इत्यमरः ॥ ४ ॥

सम्प्रति कृतिकर्तृकस्वकृतिनिरीक्षणमर्थयते—

सकलवृत्तविवृत्ततनुस्तनुः सदनुनीतमतेरिह तस्य सा ॥
लसदलङ्कृतिसूक्तिसुधामयी कृतिरियं कृतिभिः परिवीक्ष्यताम् ॥५॥

सकलेति । इह लोके तस्य श्रीदुःखभञ्जनकवेः । सा । इयम् वाग्वल्लभाख्यग्रन्थनिर्माणरूपा । कृतिः । कृतिभिः । विज्ञैः । परिवीक्ष्यताम् । अवलोक्यताम् । कीदृशस्य तस्य । सदनुनीतमतेः । सद्भिः विद्वद्भिः अनुनीता सम्मानिता मतिर्यस्य सः तस्य । कीदृशी कृतिः । सकलवृत्तविवृत्ततनुः । सकलानाम् वृत्तानाम् छन्दसाम् विवृत्ता सम्पादिता तनुः यस्याम् यया वा सा । यद्वा । सकलैः वृत्तैः विवृत्ता तनुः यस्याः सा । पुनः की० । तनुः । अल्पा । पुनः की० ॥ लसदलङ्कृतिसूक्तिसुधामयी । लसन्त्यः अलङ्कृतयः यस्याम् एवम्भूता या सूक्तिः शोभना उक्तिः सैव सुधा तन्मयी तत्प्रचुरा । प्राचुर्यार्थे मयट् । टित्त्वात् ङीप् । परिवीक्ष्यताम् इत्यत्र परि विपूर्वात् ईक्ष दर्शनाङ्कनयोः इत्यतः कर्मणि लोट् ॥ ५ ॥

सम्प्रति नमस्कारात्मकमङ्गलादेशपूर्वकं प्रस्तारप्रारम्भम्प्रतिजानीते—

श्रीमन्मङ्गलमूर्त्तिमर्थविवृतिप्रस्फूर्त्तिपूर्त्तिप्रदं ।
नत्वा प्रापयते यतेन मनसा योऽनेनसा संस्मृतः ॥

सौभाग्याधिकसौमनस्यमनघनश्श्लील सलीलं जनम्
प्राप्यः पैङ्गलमाकलय्य सकलं प्रस्तार आरभ्यते ॥ ६ ॥

श्रीमन्निति। मया। श्रीयुतदुःखभञ्जनकविना। इति यावत्‌सकलम्। सम्पूर्णम्। पैङ्गलम्। पिङ्गलेन प्रोक्तम्। तेन प्रोक्तम् इत्यण्। छन्दःशास्त्रमिति यावत्। आकलय्य विचार्य्य। प्रस्तारः आरभ्यते। किम् कृत्वा। श्रीमन्मङ्गलमूर्त्तिम्। श्रीमती मङ्गलरूपा मूर्त्तिर्यस्य तम् गणेशम् इति यावत्। नत्वा। कीदृशम् श्रीमन्मङ्गलमूर्त्तिम्। अर्थविवृतिप्रस्फूर्त्तिपूर्त्तिप्रदम्। अर्थानाम् विवृतिः विवरणम् तस्याः प्रस्फूर्त्तिः प्रस्फुरणम् तस्याः पूर्त्तिम् प्रददाति इति तम्। प्रेदाज्ञः इति कप्रत्ययः। कम् श्रीमन्मङ्गलमूर्त्तिम्। यः श्रीमन्मङ्गलमूर्त्तिः। यतेन। स्थिरीकृतेन। अनेनसा। अनघेन। मनसा। सस्मृतः सन्। अमनश्श्लीलम्। न मनसि श्लील तम्। यद्वा। न मनसा श्लीलः तम् अपि जनम्। सौभाग्याधिकसौमनस्यम्। सौभाग्येन सौभाग्याद्वा अधिकम् यत्सौमनस्यम्। शोभनचित्तत्वम् तत्। सलीलम् यथा तथा। प्रापयते। आरभ्यते। इत्यत्र आङ्पूर्वात् रभराभस्ये इत्यतः कर्मणि लट्। प्रापयते इत्यत्र णिजन्तात् प्रपूर्वात् आप्लृ व्याप्तौ इत्यतः कर्त्तरि लट् ॥६॥

सम्प्रति गुरुलघुस्वरूपमाह—

संयुक्ताद्यम्भवति यद् गुरु सानुस्वारश्च।
सविसर्गं द्वैमातृकं दीर्घस्वरसहितश्च ॥ ७ ॥

चरणचरमगं प्रह्रमुखगतं विभाषाऽवेहि ॥
अक्षरमिह बुधवर तथा वक्ररूपमभिधेहि ॥ ८ ॥ युग्मम्

सयुक्तेति। हे बुधवर! इह। छन्दःशास्त्रे। यत् अक्षरम् संयुक्ताद्यम् सयुक्तस्यआदौ भवम् भवति तत् गुरु अवेहि। च पुनः। सानुस्वारम् अनुस्वारेण सहितम् अक्षरम् गुरु अवेहि। च पुनः। सविसर्गम् विसर्गेण सहितम् अक्षरम् गुरु अवेहि। च पुनः। द्वैमातृकम् अक्षरम् गुरु अवेहि। च पुनः। दीर्घस्वरसहितम् अक्षरम् गुरु अवेहि ॥ तथा। चरणचरमगम् पादान्तस्थम् अक्षरम्। विभाषा। विकल्पेन। गुरु अवेहि। तथा। प्रह्रमुखगतम् प्रश्च ह्रश्च तयोः मुखगतम् आद्यम् अक्षरम्। विभाषा। विकल्पेन। गुरु अवेहि। तथा गुरु अक्षरम् वक्ररूपम्। वक्रम् रूपम् यस्य

तत् अभिधेहि । गुरोः रूपम् वक्रम्भवति । इति कथनेनैव लघोः रूपम् ऋजु भवति इत्यायातम् । तत्र संयुक्ताद्यम् यथा—"नाराय णस्य चरणौ सतत स्मरामि ।" इत्यत्र स्यपूर्वकस्य णकारस्य गुरुत्वम् । सानुस्वारम् यथा—कं खम् इत्यादि । सविसर्गम् यथा—कः खः । इत्यादि । द्वैमात्रकम् यथा—काश्कीकू इत्यादि । दीर्घस्वरसहितम् यथा—केकैकोकौ इत्यादि । चरणचरमगम् यथा "नारायणस्य सदृशो जगतीह कोऽस्ति ।" इत्यत्र चरणान्त्यस्य स्ति इत्यस्य गुरुत्वम् । "श्री-हरिः सनोऽद्य पातु" इत्यत्र चरणान्त्यस्य तु इत्यस्य लघुत्वम् । प्रह्वमुख गतम् यथा—"गुरुप्रसादात्सुलभैव विद्या ।" इत्यत्र प्रपूर्वगस्य रु इत्यस्य-गुरुत्वम् । "शिष्टंसमादेशयप्राड्विवाकम्" इत्यत्र प्रपूर्वगस्य य इत्यस्य लघुत्वम । शतह्रदानामिव वारयोषिताम् इत्यत्र ह्रपूर्वगस्य य इत्यस्य गुरुत्वम् । "भवति ह्रीः सहजा कुलयोषिताम् ।" इत्यत्र पूर्वगस्यति इत्यस्य लघुत्वम । गुरोः रूपम् यथा-(ऽ) लघोः रूपम् यथा-(।) ॥७-८॥

सम्प्रति मात्राप्रस्तारप्रकारमाह—

आद्यगुरोरधरे लघु दत्वा शेषसमानमिहाऽन्यदवेहि ।
शिष्टतरं गुरु वा लघु लेख्यं यावदशेषलघुत्वमुदीयात् ॥ ९ ॥

आद्येति । त्वम् । इह मात्राप्रस्तारे । आद्यगुरोः। प्रथमगुरोः । अधरे। अधो भागे लघु दत्वा । अन्यत् । शेषसमानम् । अवेहि । शिष्टतरम् । गुरु लेख्यम् । वा अथवा लघु लेख्यम् । यावत् । अशेषलघुत्वम् । सर्वल घुत्वम । उदीयात् । उत्पद्येत । तावत् अयम् विधिः । इति भावः ॥ ९ ॥

मात्राप्रस्तारः ।

१

| | |
|---|---|
| । | १ |

२

| | |
|---|---|
| ऽ | १ |
| ।। | २ |

३

| | |
|---|---|
| ।ऽ | १ |
| ।ऽ | २ |
| ।।। | ३ |

४

| | |
|---|---|
| ऽऽ | १ |
| ।।ऽ | २ |
| ।ऽ। | ३ |
| ऽ।। | ४ |
| ।।।। | ५ |

५

| | |
|---|---|
| ।ऽऽ | १ |
| ऽ।ऽ | २ |
| ।।।ऽ | ३ |
| ऽऽ। | ४ |
| ।।ऽ। | ५ |
| ।ऽ।। | ६ |
| ऽ।।। | ७ |
| ।।।।। | ८ |

६

| | |
|---|---|
| ऽ ऽ ऽ | १ |
| । । ऽ ऽ | २ |
| । ऽ । ऽ | ३ |
| ऽ । । ऽ | ४ |
| । । । । ऽ | ५ |
| । ऽ ऽ । | ६ |
| ऽ । ऽ । | ७ |
| । । । ऽ । | ८ |
| ऽ ऽ । । | ९ |
| । । ऽ । । | १० |
| । ऽ । । । | ११ |
| ऽ । । । । | १२ |
| । । । । । । | १३ |

७

| | |
|---|---|
| । ऽ ऽ ऽ | १ |
| ऽ । ऽ ऽ | २ |
| । । । ऽ ऽ | ३ |
| ऽ ऽ । ऽ | ४ |
| । । ऽ । ऽ | ५ |
| । ऽ । । ऽ | ६ |
| ऽ । । । ऽ | ७ |
| । । । । । ऽ | ८ |
| ऽ ऽ ऽ । | ९ |
| । । ऽ ऽ । | १० |
| । ऽ । ऽ । | ११ |
| ऽ । । ऽ । | १२ |
| । । । । ऽ । | १३ |
| । ऽ ऽ । । | १४ |
| ऽ । ऽ । । | १५ |
| । । । ऽ । । | १६ |
| ऽ ऽ । । । | १७ |
| । । ऽ । । । | १८ |
| । ऽ । । । । | १९ |
| ऽ । । । । । | २० |
| । । । । । । । | २१ |

८

| | |
|---|---|
| ऽ ऽ ऽ ऽ | १ |
| । । ऽ ऽ ऽ | २ |
| । ऽ । ऽ ऽ | ३ |
| ऽ । । ऽ ऽ | ४ |
| । । । । ऽ ऽ | ५ |
| । ऽ ऽ । ऽ | ६ |
| ऽ । ऽ । ऽ | ७ |
| । । । ऽ । ऽ | ८ |
| ऽ ऽ । । ऽ | ९ |
| । । ऽ । । ऽ | १० |
| । ऽ । । । ऽ | ११ |
| ऽ । । । । ऽ | १२ |
| । । । । । । ऽ | १३ |
| । ऽ ऽ ऽ । | १४ |
| ऽ । ऽ ऽ । | १५ |
| । । । ऽ ऽ । | १६ |
| ऽ ऽ । ऽ । | १७ |
| । । ऽ । ऽ । | १८ |
| । ऽ । । ऽ । | १९ |
| ऽ । । । ऽ । | २० |
| । । । । । ऽ । | २१ |
| ऽ ऽ ऽ । । | २२ |
| । । ऽ ऽ । । | २३ |
| । ऽ । ऽ । । | २४ |
| ऽ । । ऽ । । | २५ |
| । । । । ऽ । । | २६ |
| । ऽ ऽ । । । | २७ |
| ऽ । ऽ । । । | २८ |
| । । । ऽ । । । | २९ |
| ऽ ऽ । । । । | ३० |
| । । ऽ । । । । | ३१ |
| । ऽ । । । । । | ३२ |
| ऽ । । । । । । | ३३ |
| । । । । । । । । | ३४ |

ओद्दिष्टप्रकारमाह—

दत्वादौ युग्माङ्कं गुरुशीर्षाङ्कमपास्य ।
शेषाङ्के शिष्टाङ्कैः सङ्ख्योद्दिष्टस्याऽस्य ॥ १० ॥

वेति ॥ आदौ युग्माङ्कम् दत्वा गुरुशीर्षाङ्कम् शेषाङ्के अन्त्याङ्के
ा त्यक्त्वा शिष्टाङ्कैः अवशिष्टैः अङ्कैः इति यावत् अस्य
य सङ्ख्या ज्ञेया । इति शेषः ॥ १० ॥

मात्रायुगलाङ्काः ॥

| ङ्कम् | | युग्माङ्कम् | | युग्माङ्कम् ॥ | |
|---|---|---|---|---|---|
| | १ | ३७७ | १३ | १२१३९३ | २५ |
| | २ | ६१० | १४ | १९६४१८ | २६ |
| | ३ | ९८७ | १५ | ३१७८११ | २७ |
| | ४ | १५९७ | १६ | ५१४२२९ | २८ |
| | ५ | २५८४ | १७ | ८३२०४० | २९ |
| ३ | ६ | ४१८१ | १८ | १३४६२६९ | ३० |
| १ | ७ | ६७६५ | १९ | २१७८३०९ | ३१ |
| ३ | ८ | १०९४६ | २० | ३५२४५७८ | ३२ |
| १ | ९ | १७७११ | २१ | ५७०२८८७ | ३३ |
| २ | १० | २८६५७ | २२ | ९२२७४६५ | ३४ |
| ३४ | ११ | ४६३६८ | २३ | १४९३०३५२ | ३५ |
| ३ | १२ | ७५०२५ | २४ | २४१५७८१७ | ३६ |

ङ्कम् । पूर्वयुग्माङ्कम् । युगलाङ्कम् । पूर्वयुगलाङ्कम् । उद्दिष्टाङ्कम् । एते-
पर्य्यायशब्दाः ॥

| | | | | | |
|---|---|---|---|---|---|
| १ १३ २१<br>ऽ । ऽ<br>८ ३४<br>प कियत्स<br>म् इति प्रश्ने<br>ाङ्कम् ३४ | सङ्क<br>लितम्<br>गुरुशी-<br>र्षाङ्कम्<br>२७ | ३४<br>२७<br>तत्र अपास्ते-<br>सति<br>निष्पन्नम्<br>संख्याङ्कम् ७ | इदंरूप कियत्सङ्ख्या<br>१ ३ ५ ८ कम्<br>ऽ । । ऽ इति<br>२ १३ प्रश्ने<br>अन्त्याङ्कम् १३ | सङ्कलि-<br>तम्<br>गुरुशी<br>र्षाङ्कम् ९ | १३ तत्राऽ<br>९<br>पास्ते सति<br>निष्पन्नम्-<br>सङ्ख्याङ्कम्<br>४ |

ानष्टप्रकारमाह—

नष्टे कुर्याः कलास्ता बुधवर सकलाः पूर्वयुग्माङ्कयुक्ताः ।
प्रश्नाङ्कैस्तत्पमन्त्याङ्कमिदमपरतः पूर्यते येन येन ॥
तं जानीया त्यक्त्वा गुरुमपि कलामग्रिमां तत्र तत्र ।

नष्ट इति । हे बुधवर त्वम् इह नष्टे सकलाः कलाः पूर्वयुग्माङ्कयुक्ताः कुर्याः ॥ तथा प्रश्नाङ्कैः अन्त्याङ्कम् तष्टम् ॥ अथ इदम् अन्त्याङ्कम् अपरतः अपरेण तसेःसार्वविभक्तिकत्वात् तृतीयार्थे तसिः येन येन अङ्केन पूर्येत ॥ तत्र तत्र अग्रिमाम् कलाम् उपादाय गुरुम् जानीया ॥ हेधीमन् शेष· इदम् नष्टम् आचष्ट । कीदृशम् नष्टम् । धीमन्दतायाः बुद्धिमान्द्यस्य अपकरणम् निवारकम् ॥ ११ ॥

यथा षण्मात्राप्रस्तारे चतुर्थं रूपम् कीदृक् इति केनचित्पृष्टे सति ।

प्रश्नाङ्कम् ४
अन्त्याङ्कम् १३
१३
४
तष्टे
सति ९
पुनस्तष्टे ९ कलाद्वयसंयोगेन
सति ८ गुरु जातम्
पुनस्तष्टे १ — १ कलयोस्संयोगेन
सति १ ० गुरु जातम्
१ २ ३ ५ ८ १३

ऽ।।ऽ
इदं रूपं निष्पन्नम्

यथा अष्टमात्राप्रस्तारे सप्तमं रूपम् कीदृशम् इति प्रश्ने सति

प्रश्नाङ्कम् ७
अन्त्याङ्कम् ३४ ३४
७
तष्टे सति २७
२७
२१ कलयोस्संयोगेन
पुनस्तष्टे सति ६ गुरु जातम् ।
६
पुनस्तष्टे सति ५ — १ कलाद्वयसंयोगेन
१ गुरु जातम्
पुनस्तष्टे सति १ ० कलयोस्संयोगेन
गुरु जातम्

ऽ । ऽ । ऽ

मात्रामेरुप्रकारमाह—

समिमिह कुरु कोष्ठं युग्ममेकादिपूर्वं प्रथमचरमयोरेकैकमङ्कं विधेहि ।
तदितरतरकोष्ठं शीर्षशीर्षाङ्कैरलमिति कुरु मात्रामेरुरेषोऽहिपोक्तः ॥ १२ ॥

सममिति ॥ त्वम् इह एकद्विपूर्वम् समम् युग्मम् कोष्ठम् कुरु ॥ तथा प्रथमचरमयोः आद्यन्तयोः कोष्ठयोरिति यावत् एकैकम् अङ्कम् विधेहि ॥ तथा तदितरतरकोष्ठम् शीर्षशीर्षापराङ्कैः अलम् कुरु ॥ इति । एषः मात्रामेरु अहिपोक्त. शेषोक्तः इति ॥ १२ ॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| मेरुः | | | | | | | |
| १ | | | | | | | १ |
| १ | १ | | | | | | २ |
| २ | १ | | | | | | ३ |
| १ | ३ | १ | | | | | ४ |
| ३ | ४ | १ | | | | | ५ |
| १ | ६ | ५ | १ | | | | ६ |
| ४ | १० | ६ | १ | | | | ७ |
| १ | १० | १५ | ७ | १ | | | ८ |
| ५ | २० | २१ | ८ | १ | | | ९ |
| १ | १५ | ३५ | २८ | ९ | १ | | १० |
| ६ | ३५ | ५६ | ३६ | १० | १ | | ११ |
| १ | २१ | ७० | ८४ | ४५ | ११ | १ | १२ |
| ७ | ५६ | १२६ | १२० | ५५ | १२ | १ | १३ |

मात्रापताकाप्रकारमाह—

क्रमादङ्कमुद्दिष्टवद्देहि शेषे समस्तांश्च पूर्वाङ्ककान्सम्विहाय ॥
ततश्चैकगुर्वादिमेकद्विपूर्वैर्विजानीहि वा वर्णमात्रापताकाम् ॥ १३ ॥

क्रमादिति ॥ त्वम् क्रमात् उद्दिष्टवत् अङ्कम् देहि ॥ च पुनः एकद्विपूर्वैः समस्तान् पूर्वाङ्ककान् शेषे अन्त्याङ्के सम्विहाय ततः एकगुर्वादिम् वर्णमात्रापताकाम् वा वर्णमात्रयोः पताकाम् वर्णपताकाम्मात्रापताकाञ्चा इति यावत् विजानीहि ॥ १३ ॥

**२१ सर्वलघु** सप्तमात्रापताका

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २० | १९ | १८ | १६ | १३ | ८ | एकगुरव । | | | | |
| २ | १७ | १५ | १२ | ७ | १४ | ११ | ६ | १० | ५ | ३ | द्विगुरव । |
| ३ | २ | ४ | ९ | १ | त्रिगुरव. । | | | | | | |
| ५ | | | | | | | | | | | |
| ८ | | | | | | | | | | | |
| १३ | | | | | | | | | | | |
| २१ | | | | | | | | | | | |

**३४ सर्वलघु** अष्टमात्रापताका

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | ३३ | ३२ | ३१ | २९ | २६ | २१ | १३ | एकगुरव. | | | | | | | |
| २ | ३० | २८ | २५ | २० | १२ | २७ | २४ | १९ | ११ | २३ | १८ | १० | १६ | ८ | ५ द्विगुरवः |
| ३ | ७ | ९ | १७ | २२ | ३ | २ | १५ | १४ | ४ | ६ | त्रिगुरवः | | | | |
| ५ | १ | चतुर्गुरुः | | | | | | | | | | | | | |
| ८ | | | | | | | | | | | | | | | |
| १३ | | | | | | | | | | | | | | | |
| २१ | | | | | | | | | | | | | | | |
| ३४ | | | | | | | | | | | | | | | |

लघुमात्रामर्कटीप्रकारमाह—

सख्याङ्कं पूर्वपङ्क्तौ परिलिख युगलाङ्कं द्वितीयालिमध्य
आदौ सर्वासु चैकं गुरुनिलयमृतेऽथो द्वितुर्याङ्कयोगम् ॥
षष्ठे तत्पूर्वगाङ्कं तदुपरि च तयोर्योगमस्योपरिष्ठम् ।
तद्योगं तस्य चोर्द्ध्वं मुहुरिति करणान्मर्कटी साधनीया ॥१४॥

सख्याङ्कमिति ॥ त्वम् पूर्वपङ्क्तौ सख्याङ्कम् परिलिख द्वितीयालिमध्ये द्वितीयपङ्क्तौ युगलाङ्कम् परिलिख ॥ च पुनः गुरुनिलयम् पञ्चमस्थानम् ऋते विना सर्वासु पङ्क्तिषु आदौ एकम् अङ्कम् परिलिख। अथो द्वितुर्याङ्कयोगम् षष्ठे परिलिख ॥ तदुपरि तत्पूर्वगाङ्कम् परिलिख । अस्य उपरिष्ठम् तयोः योगम् परिलिख ॥ तस्य ऊर्ध्वम् तद्योगम् परिलिख । इति मुहुः पुनः पूनः करणात् मर्कटी साधनीया ॥ १४ ॥ इति ॥

लघुमात्रा मर्कटी ।

| वृत्ति | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ |
|---|---|---|---|---|---|---|---|---|---|---|---|
| भेदाः | १ | २ | ३ | ५ | ८ | १३ | २१ | ३४ | ५५ | ८९ | १४४ |
| मात्राः | १ | ४ | ९ | २० | ४० | ७८ | १४७ | २७२ | ४९५ | ८६० | १५८४ |
| वर्णाः | १ | ३ | ७ | १५ | ३० | ५८ | १०९ | २०१ | ३६५ | ६५१ | ११६४ |
| गुरवः | ० | १ | २ | ५ | १० | २० | ३८ | ७१ | १३० | २३५ | ४२० |
| लघवः | १ | २ | ५ | १० | २० | ३८ | ७१ | १३० | २३५ | ४२० | ७४४ |

वृहतीम्मात्रामर्कटीमाह—

ऊर्ध्वाधो नन्दकोष्ठं विरचय वितत चक्रमेतद्यथेच्छ-
माद्यालौ वृत्तिसंख्याम्परिलिख युगलाङ्कं द्वितीयावलौ च ॥
आदावेकं विलिख्योपरितनभवनात्पूर्वकोष्ठाङ्कमग्रे ।
तार्त्तीयीकालिमध्येप्रथममथ चतुर्थावलौ खं लिखित्वा ॥१५॥

स्वोर्ध्वप्राक्कोष्ठगाङ्कं तदनु शुभमते पञ्चमालावथादा
वेकं च द्वे च तस्मात्तदनु निजगृहात्पूर्वकोष्ठद्वयाङ्कम् ।
द्वैतीयीकालिगाङ्कं द्वयमपि च तथा मेलयित्वा लिखाऽऽशु ।
षष्ठ्यामादौ च शून्यं तत उपरिगृहात्पूर्वकोष्ठाङ्कमस्याम् ॥१६॥
द्वैतीयीकाद्यपङ्क्त्योर्गुणनमिहमिथ सप्तमालौ लिखित्वा ।
चाष्टम्यामेतदर्धम्बुधवर सुमते पञ्चमालिस्थमङ्कम् ॥
षष्ठालिस्थाङ्कमेतद्द्वयमभिविलिखेर्मेलयित्वा नवम्याम् ।
वृत्तिम्भेदं लगान्तौ च लघुगुरुकलापिण्डवर्णान् वधेहि ॥१७॥
त्रिभिर्विशेषकमिति ॥

ऊर्ध्वाध इति ॥ त्वम् ऊर्ध्वाधो नन्दकोष्ठम् ऊर्ध्वाधः उपर्यधः नन्दसंख्यानिकोष्ठानि नवकोष्ठानि यत्र तत् यथेच्छम् विततम् विस्तृतम् एतत् चक्रम् विरचय तत्र आद्यालौ प्रथमपङ्क्तौ वृत्तिसंख्याम् परिलिख ॥ च पुनः द्वितीयावलौ द्वितीयपङ्क्तौ युगलाङ्कम् परिलिख ॥ तार्त्तीयीकालिमध्ये तृतीयपङ्क्तौ आदौ एकम् विलिख्य अग्रे उपरितनभवनात् पूर्वकोष्ठाङ्कम् परिलिख ॥ अथ चतुर्थावलौ चतुर्थपङ्क्तौ प्रथमम् खम् शून्यम् लिखित्वा तदनु स्वोर्ध्वप्राक्कोष्ठगाङ्कम् परिलिख ॥ अथ हे शुभमते पञ्चमालौ पञ्चमपङ्क्तौ आदौ एकम् च द्वे च लिख । तदनु तस्मात् निजगृहात् पूर्वकोष्ठद्वयाङ्कम् द्वैतीयीकालिगाङ्कम् च द्वयम् अपि मेलयित्वा तथा पूर्ववत् आशु लिख ॥ च पुनः षष्ठ्याम् पङ्क्तौ इति यावत् आदौ शून्यम् लिख तत. अस्याम् षष्ठपङ्क्तौ उपरिगृहात् पूर्वकोष्ठाङ्कम् लिख । अथ इह सप्तमालौ सप्तमपङ्क्तौ द्वैतीयीकाद्यपङ्क्त्योः प्रथमद्वितीयपङ्क्त्योः इति यावत् मिथः परस्परम् गुणनम् लिखित्वा च पुनः अष्टम्याम् पङ्क्तौ इति यावत् एतदर्धम् सप्तमालिस्थाङ्कार्धम् लिखित्वा नवम्याम् पङ्क्तौ पञ्चमालिस्थम् अङ्कम् तथा षष्ठालिस्थाङ्कम् एतत् द्वयम् मेलयित्वा अभिविलिखेः ॥ ततः हे बुधवर हे सुमते वृत्तिम् भेदम् लगान्तौ लघ्वन्तम् गुर्वन्तम् इति यावत् चकारात् लघ्वादिम् गुर्वादिम् लघुगुरुकलापिण्डवर्णान् लघवश्च गुरवश्च कलाश्च पिण्डाश्च वर्णाश्च तान् वधेहि अवधेहि जानीहि इति यावत् । वधेहि इत्यत्र वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः इत्यल्लोपः ॥ इति ॥ १५ । १६ । १७ ॥

वृहती मात्रामर्कटी ।

| | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | वृत्ति॰ |
| | १ | २ | ३ | ५ | ८ | १३ | २१ | ३४ | ५५ | ८९ | १४४ | २३३ | भेदाः |
| लादय | १ | १ | २ | ३ | ५ | ८ | १३ | २१ | ३४ | ५५ | ८६ | १४४ | लान्ता. |
| गादय | ० | १ | १ | २ | ३ | ५ | ८ | १३ | २१ | ३४ | ५६ | ८९ | गान्ताः |
| | १ | २ | ५ | १० | २० | ३८ | ७१ | १३० | २३५ | ४२० | ७४४ | १३०८ | लघवः |
| | ० | १ | २ | ५ | १० | २० | ३८ | ७१ | १३० | २३५ | ४२० | ७४४ | गुरवः |
| | १ | ४ | ९ | २० | ४० | ७८ | १४७ | २७२ | ४९५ | ८९० | १५८४ | २७९६ | मात्रा॰ |
| | ॥ | २ | ४॥ | १० | २० | ३९ | ७३॥ | १३६ | २४७॥ | ४४५ | ७९२ | १३९८ | पिण्डा॰ |
| | १ | ३ | ७ | १५ | ३० | ५८ | १०९ | २०१ | ३६५ | ६५५ | ११६४ | २०५२ | वर्णाः |

लघ्वन्तगुर्वन्तज्ञानार्थम्प्रकारान्तरमाह—

मात्रोद्दिष्टाङ्कमाधायोपान्त्याङ्केन समा इह ।
लघ्वन्तास्तदुपान्त्याङ्कैर्गुर्वन्ताः पिङ्गलोदिताः ॥१८॥

मात्रेति ॥ इह मात्रोद्दिष्टाङ्कम् आधाय लिखित्वेति यावत् उपान्त्याङ्केन अन्त्यसमीपवर्त्तिना अङ्केन समा॰ लघ्वन्ताः पिङ्गलोदिता॰ पिङ्गलाचार्येण उदिताः उक्ताः तदुपान्त्याङ्क तस्य उपान्त्याङ्कस्य समीपवर्त्तिभिः अङ्कै. समा. गुर्वन्ता॰ पिङ्गलोदिताः ज्ञेया. इति ॥ १८ ॥

पातालप्रकारमाह—

तदेतत्पातालं गुरुलघुपरिज्ञप्तिकृदलम् ।
विलिख्यादौ संख्यां तदनु युगलाङ्कं च तदधः ।
ततोऽधस्त्वेकं द्वे निजभवनतः पूर्वसदन-
द्वयाङ्कं शीर्षाङ्कं तदनु लिख संयोज्य पुरतः ॥१९॥
गुरुलघ्वात्मकं सर्वं लघुपश्चिमगं गुरु ।
पातालेऽत्र विजानीयाद्व्युत्क्रमेण लघून्गुरून् ॥२०॥

॥ युग्ममिदम् ॥

तदिति । तत् एतत् पातालम् ज्ञेयम् इति यावत् कीदृशम् पातालम् अलम् अत्यर्थम् गुरुलघुपरिज्ञप्तिकृत् गुरुलघुपरिज्ञानकारणम् तत् किम् आदौ संख्याम् विलिख्य तदनु तदधः तस्याः संख्यायाः अधोभागे युगलाङ्कम् विलिख्य ततः तस्य अधोभागे एकम् द्वे च विलिख्य तदनु

निजभवनतः पूर्वसदनद्वयाङ्कम् शीर्षाङ्कम् च सयोज्य पुरतः अग्रे लिख ॥१९॥ गुर्विति । अत्र पाताले गुरुलघ्वात्मकम् सर्वं ज्ञेयम ॥ तथा लघुपश्चिमगम् गुरु ज्ञेयम् तथा व्युत्क्रमेण वैपरीत्येन लघून् गुरून् च विजानीयात् जिज्ञासुरिति शेषः ॥ २० ॥

मात्रापातालम् ।

| | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ |
| १ | २ | ३ | ५ | ८ | १३ | २१ | ३४ | ५५ | ८९ | १४४ | २३३ | ३७७ | ६१० | ९८७ |
| १ | २ | ५ | १० | २० | ३८ | ७१ | १३० | २३५ | ४२० | ७४४ | १३०८ | २२८५ | ३९७० | ६८६५ |

मात्रागणभेदानाह—

टठडढणगणास्स्युर्ये च षट्पञ्चवेद-
त्रिकयुगलकलानां तत्प्रभेदा भवन्ति ।
अतिरविवसुवाणत्रिद्वितुल्याः क्रमेण
फणिपतिभणितांस्त्व सन्मते तानवेहि ॥२१॥

टठेति । षट्पञ्चवेदत्रिकयुगलकलानाम् ये टठडढणगणाः स्युः तत्प्रभेदा तेषाम् प्रभेदाः अतिरविवसुवाणत्रिद्वितुल्याः क्रमेण भवन्ति ॥ हे सन्मते त्वम् तान् अवेहि । कीदृशान् तान् । फणिपतिभणितान् । शेषोक्तान् । तथाहि । षण्णाम् कलानाम् त्रयोदश भेदाः भवन्ति । ते च सर्वे टगणाः कथ्यन्ते ॥ पञ्चानाम् कलानाम् अष्टौ भेदाः ते सर्वे ठगणाः कथ्यन्ते ॥ चतसृणाम् कलानाम् पञ्च भेदाः ते सर्वे डगणाः प्रोक्ताः । तिसृणाम् कलानाम् त्रयः भेदाः ते सर्वे ढगणाः प्रोक्ताः । द्वयोः कलयोः द्वौ भेदौ स्तः तौ णगणौ प्रोक्तौ ॥ ३१ ॥

मात्रागणनामान्याह—

शिवः शशीदिनेश्वरस्सुरेशशेषसंज्ञका
वहिस्सरोजधातरौ कलिश्च चन्द्रमाः क्रमात् ।
ध्रुवाख्यधर्मनामकौ च शालिपूर्वकः करः
प्रकीर्त्तिताः फणीशपिङ्गलेन षट्कलेऽभिधाः ॥२२॥

शिव इति । शिवः १ शशी २ दिनेश्वरः ३ सुरेशशेषसंज्ञको सुरेशः ४ शेषः ५ अहिः ६ सरोजः ७ धाता ८ कलिः ९ चन्द्रमाः १० ध्रुवाख्य-

धर्मनामकौ ध्रुवः ११ धर्मः १२ शालिपूर्वक करः शालिकरः १३ इति अभिधाः संज्ञा क्रमात् षट्कले षट् कला यत्र तस्मिन् प्रस्तारे इति यावत् फणीशपिङ्गलेन प्रकीर्त्तिताः ॥ २२ ॥

॥ तत् यथा ॥

| | |
|---|---|
| हरः | S S S |
| शशी | I I S S |
| दिनेश्वरः | I S I S |
| सुरेशः | S I I S |
| शेषः | I I I I S |
| अहिः | I S S I |
| सरोजम् | S I S I |
| धाता | I I I S I |
| कलिः | S S I I |
| चन्द्रमाः | I I S I I |
| ध्रुवः | I S I I I |
| धर्मः | S I I I I |
| शालिकर | I I I I I I |

इन्द्रासनाह्वयस्सूरश्चापो हीरश्च शेखरः ।

कुसुमाहिगणौ पापगणः पञ्चकलेऽभिधाः ॥ २३ ॥

इन्द्रेति । इन्द्रासनाह्वयः इन्द्रासनः १ सूरः २ चापः ३ हीरः ४ शेखरः ५ कुसुमाहिगणौ कुसुमम् ६ अहिगणः ७ पापगणः ८ इति अभिधाः पञ्चकले पञ्च कलाः यस्मिन् तस्मिन् प्रस्तारे इत्यभिप्रायः ज्ञेयाः ॥२३॥

| | |
|---|---|
| I S S | इन्द्रासनः |
| S I S | सूरः |
| I I I S | चापः |
| S S I | हीरः |
| I I S I | शेखरः |
| I S I I | कुसुमम् |
| S I I I | अहिगणः |
| I I I I I | पापगणः |

ऐरावतोऽधिपनरेन्द्रपयोददन्ता दन्तावलः शरकलादिलघोश्च संज्ञाः ।

वीणामृतौ तु मृगराजखगेशपक्षियक्षाश्च मध्यलघुपञ्चकलेऽभिधास्स्युः ॥

ऐरावत इति । ऐरावतः अधिप नरेन्द्रः पयोददन्तः पयोदः दन्त इति पृथगपि केचिदिच्छन्ति, तच्चिन्त्यम्, फणिपानुक्तत्वात् सर्वत्र पयोदशब्देन मध्यगुरुचतुष्कलगणस्यैव ग्रहणाच्च । दन्तावलः इति शरकलादिलघोः शरकलश्चासौ आदिलघुः तस्य (ISS) संज्ञाः ज्ञेयाः तथा वीणा।

अमृतः । मृगराजः । खगेशः । पक्षी । यक्ष इति मध्यलघुपञ्चकले (ऽ।ऽ) अभिधाः स्युः । अत्र खगेशादिशब्दाः उपलक्षणानि । तेन गरुडादिशब्दानामपि सङ्ग्रहः ।। २४ ।।

कर्णः करतलाख्यश्च पयोधराभिधो वसुः ।
तथा द्विजवरश्चेति चतुर्मात्रगणेऽभिधाः ॥ २५ ॥

कर्ण इति । कर्णः १ करतलाख्यः करतलम् २ पयोधराभिधः पयोधरः ३ वसुः ४ तथा द्विजवरः द्विजवर इत्युपलक्षणम् तेन भूसुरधरणिसुरविप्रादिपर्यायशब्दानामपि संग्रहः इति चतुर्मात्रगणे अभिधाः ज्ञेयाः ॥ २५ ॥

| | |
|---|---|
| ऽ ऽ | कर्णः |
| । । ऽ | करतलम् |
| । ऽ । | पयोधरः |
| ऽ । । | वसुः |
| । । । । | द्विजवरः |

पयोधृद्गोपालौ मनुजपतिभूपौ गजपतिः ।
तथा चक्राधीशस्तुरगपतिसंज्ञश्च पवनः ॥
अथो रज्जुर्वर्षः फणिगणपतिश्चैतदभिधाः ।
चतुर्मात्रस्येति प्रवदतितराम्मध्यगगुरोः ॥ २६ ॥

पयोधृदिति । पयोधृत् पयोधर इति यावत् पयोधृत् इत्युपलक्षणमात्रम् । तेन पयोद जलद जलधर वारिद इत्यादिपर्यायवाचिशब्दानामपि संग्रहः । एवमन्यत्राऽपि बोध्यम् । गोपालः मनुजपतिः भूपः गजपतिः तथा चक्राधीशः तुरगपतिः नायक इति यावत् पवनः अथो रज्जुः वर्षः इति चतुर्मात्रस्य मध्यगगुरोः (।ऽ।) अभिधाः सन्ति । फणिगणपतिः एतत् प्रवदतितराम् ॥ २६ ॥

पितापितामहो हलायुधश्च गण्डपावकौ ।
पदोऽभिधाः पुरो गुरोश्चतुष्कलस्य कीर्तिताः ॥ २७ ॥

भेदः । उभयविकल्पानां परस्परगुणनेऽष्टौ कोटयः एकोनविंशतिर्लक्षाणि विंशतिः सहस्राणि भवन्ति ।

अङ्कतः ८१९२०००० इयमार्याणां भेदसंख्या बोध्या । तदुक्तम्—

जगणविहीना विषमे चत्वारः पञ्च युजि जगणनलौ ।
षष्ठे द्वाविति च गणास्तथान्तगः प्रथमदलसंख्या ॥१॥
एव परार्धसंख्या षष्ठे स्याल्लघुनि चैकस्मिन् ।
आर्यासंख्योभयदलसंघाताः किल विनिर्दिष्टाः ॥ २ ॥

इति ।

## ॥ अथार्यासु उद्दिष्टप्रकारः प्रदर्श्यते ॥

श्रीदुःखभञ्जनाख्यं तात विख्यातभूरितरकीर्त्तिम् ।
प्रणमामि सद्गुणगण विद्वद्वन्द्यं कविं नित्यम् ॥१॥

यदा कश्चिज्जिज्ञासेत इयमार्या किंसंख्याकेति । तदाऽस्या गणान्स्थापयेत् गुरुगणाधश्चतुःपञ्चादिकं संख्याविकल्पं यथासंख्यं स्थापयेत् । तत उपान्त्यमन्त्येन हत्वेष्टाद्विकल्पाधस्तनाङ्कशेषान्विकल्पसंख्यापूरकान्विकल्पानपनीय शेषया संख्यया तदाद्यगुणकविकल्पाङ्कं हत्वेष्टविकल्पाधस्तनविकल्पान् राशेरपनीय शेषाङ्कं पूर्वपूर्वेण गुणयित्वेष्टविकल्पाधस्तनविकल्पाङ्कं पातयेत् । एव यावदर्धं गुणं कुर्यात् । शेषसंख्यया आर्यासंख्यां जानीयात् । अत्र सर्वान्तगुरुमध्यगुर्वादिगुरुसर्वलघुक्रमेणाऽवस्थाने अधस्तनत्वं ज्ञेयम् । अत्र न्यासः ॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| SS | ISI | SS | SS | SS | ISI | IIS | S |
| ४ | ५ | ४ | ५ | ४ | २ | ४ | १ |
| IIS | ISI | IIS | SS | SS | I | SS | S |
| ४ | ५ | ४ | ५ | ४ | १ | ४ | १ |

अत्रान्ते न्यस्तस्यार्धगणस्य विकल्पाभावादधस्तनैकाङ्कस्य द्वितीयेऽर्धे समाप्तेऽधस्तनैश्चतुर्भिर्गुणने जाताश्चत्वारः । सप्तमस्येष्टस्य सर्वगुरुत्वात्तस्याधस्तना जगणव्यतिरिक्तानन्तगुर्वादिगुरुसर्वलघूंस्त्रीन् चतुर्षु पातयेत् । शेष एकः । षष्ठस्य लघुमात्ररूपत्वाद्विकल्पाभावः । पञ्चमाधःस्थचतुर्भिरेकगुणनं कृत्वापि पूर्ववत्त्रयाणां त्यागे शेषस्यैकस्य चतुर्थाधःस्थपञ्चमहतौ चतुर्षु त्यक्तेषु शेषस्यैकस्य तृतीयाधःस्थैश्चतुर्भिर्हतौ शेषयोर्द्वयोस्त्यागे शेषद्वयस्य द्वितीयस्थैः पञ्चभिर्गुणने द्वये त्यक्ते शेषाः अष्टौ । तेषां प्रथमस्थैश्चतुर्भिर्गुणने द्वये त्यक्ते त्रिंशत् । एवमुत्तरार्धम् । पूर्वार्धान्त्यगणार्धन्त्वविकल्पम् । ततः सप्तमस्थैश्चतुर्भिस्त्रिंशतो गुणने द्वये त्यक्ते अष्टादशाधिकं शतम् । तस्य षष्ठाधस्तनाभ्यां द्वाभ्यां हतौ एकस्य त्यागे पञ्चत्रिंशदधिकं शतद्वयं शिष्टम् । तस्य पञ्चमस्थैश्चतुर्भिर्हतौ

त्रिषु त्यक्तेषु शिष्टा सप्तत्रिंशदधिका नवशती । तस्याश्चतुर्थस्थैः पञ्चभिः गुणने चतुर्णां त्यागे एकाशीत्यधिकानि षट्चत्वारिंशच्छतानि । तेषु तृतीयस्थैश्चतुर्भिर्हतेषु त्रिषु त्यक्तेषु अष्टादश सहस्राणि एकविंशत्यधिकानि सप्तशतानि च । तेषु द्वितीयस्थैः पञ्चभिः गुणितेषु द्वये त्यक्ते सहस्राणां त्रिनवतिः द्व्यधिका षट्शती च । तस्यां च प्रथमस्थैश्चतुर्भिर्गुणितायां त्रये त्यक्ते सिद्धोऽङ्कः लक्षत्रय चतुःसप्ततिसहस्राणि नवाधिकानि चत्वारि शतानि । अङ्कतोऽपि ३७४४०९ एतावत्संख्याकेयमार्या पूर्वोक्ता ज्ञेया । तदुक्तम्—

गणानुद्दिष्टगाथायाः संस्थाप्य तदधो लिखेत् ।
चतुःपञ्चादिकां संख्यां स्थानस्थानोचितां ततः ॥ १ ॥
हत्वा हत्वाद्यमन्त्येन चोपरिस्थाद्गणादधः ।
पृथग्घातगणेभ्योऽथ गणसंख्यां विकल्पयेत् ॥ २ ॥
हताद्धार्योचिता तावद् यावदाद्याङ्कसंभवः ।
तत्संख्यामुद्दिशेद्गाथामुद्दिष्टप्रत्यये बुधः ॥ ३ ॥

इत्यार्योद्दिष्टप्रकारः ।



## ॥ अथार्यानष्टप्रकारः ॥

अथ यदि कश्चित् "यदा नष्ट लक्षत्रय चतुःसप्ततिसहस्राणि चत्वारि शतानि नव चेति' तदेतत्संख्याकाऽऽर्या किंस्वरूपेति" जिज्ञासेत । तर्हि नष्टाङ्कान् विलिख्यादिभूतगणविकल्पैर्भाग हरेत् । भागे हृते योऽङ्कः शिष्टः तत्समितं तद्गणविकल्पेषु गण लिखेत् । भागहारे यल्लब्धं तत्सैककं कृत्वा पुनः पुनरुत्तरगणविकल्पैर्भागे हृते भाज्यशेषसंख्याङ्को गणस्तत्तद्गणविकल्पेषु पूर्वस्थापितगणानन्तर स्थाप्यः । इत्येव यावत्पूर्त्ति कार्यम् । यत्र तु गणविकल्प एवेष्टः तत्र तत्सख्य एव गणो ग्राह्यः । परं तु लब्धं सैकन्न कार्यम् । शिष्टं पूर्ववत् । तथा हि प्रथमगणस्य चतुर्विकल्पत्वाच्चतुर्भिःपूर्वोक्ते नष्टाङ्के भाजिते लब्ध त्रिनवतिसहस्राणि द्व्यधिकानि षट्शतानि । शेष एकोऽङ्कः । प्रथमगणविकल्पेषु प्रथमः सर्वगुरुः स्थापनीयः । लब्धे सैके कृते द्वितीयगणस्य पञ्चविकल्पत्वात्पञ्चभिर्भक्ते लब्धं सहस्राण्यष्टादशविंशत्यधिकसप्तशती च । शेषास्त्रयः । तद्विकल्पेषु तृतीयो मध्यगुरुः स्थापनीयः । लब्धे सैके तृतीयस्य चतुर्विकल्पत्वाच्चतुर्भिर्भक्ते लब्धमशीत्यधिकषट्चत्वारिंशच्छती । शेष एकः । तद्विकल्पेषु आद्यः सर्वगुरुः स्थाप्यः । लब्धे सैके चतुर्थस्य पञ्चविकल्पत्वात्पञ्चभिर्भागे हृते लब्धं षट्त्रिंशदधिका नवशती । शेषः एकः । तद्विकल्पेष्वाद्यः सर्वगुरुः स्था-

पनीयः । लब्धे सैके 'पञ्चमस्य चत्वारो विकल्पाः सन्ति' इति पञ्चभि र्भक्ते लब्धं चतुस्त्रिंशदधिक शतद्वयम् । शेष एकः । तद्विकल्पेषु सर्वगुरुः प्रथमगणः स्थापनीयः । लब्धे सैके षष्ठस्य द्विविकल्पत्वाद् द्वाभ्यां भागे कृते लब्धं सप्तदशाधिकं शतम् । शेष एकः । तद्विकल्पयोराद्यो मध्यगुरु-गण· स्थाप्यः । लब्धे सैके सप्तमस्य चतुर्विकल्पत्वात्तैर्भागे दत्ते लब्धम् एकोनत्रिंशत् । शेषं द्वयम् । तद्विकल्पेषु द्वितीयो गणोऽन्तगुरुः स्थाप्यः । ततः सर्वार्यानियतं गुरुमन्ते न्यसेत् । एवं पूर्वार्धं सिद्धम् । ततो लब्धे सैके आर्योत्तरार्धगणस्य चतुर्विकल्पत्वात्तैर्भागे दत्ते लब्ध सप्त । शेषौ द्वौ । तद्विकल्पेषु द्वितीयोऽन्तगुरुः स्थाप्यः । लब्धे सैके द्वितीयस्य पञ्च-विकल्पत्वात्पञ्चभिर्भक्ते लब्धमेकम् । शेषं त्रयम् । तद्विकल्पेषु तृतीयो मध्यगुरुः स्थाप्य· । लब्धे सैके तृतीयस्य चतुर्विकल्पत्वात्तैर्भागे दत्ते लब्धम् शून्यम् । शेषं द्वयम् । तद्विकल्पेषु द्वितीयोऽन्तगुरुः स्थाप्यः । लब्धे शून्ये सैके चतुर्थस्य पञ्चविकल्पतया पञ्चभिर्भक्ते लब्ध शून्यम् । शेषः एकः । तद्विकल्पेषु प्रथमः सर्वगुरुः स्थाप्यः । लब्धे शून्ये सैके पञ्चमस्य चतुर्वि-कल्पतया तैर्भक्ते लब्धं शून्यम् । शेषः एकः । तद्विकल्पेषु प्रथमः सर्वगुरुः स्थाप्यः । षष्ठे लघुरेव नियतत्वात्स्थापनीयः । लब्धे शून्ये सैके सप्तमस्य चतुर्विकल्पत्वात्तैर्भक्ते लब्धं शून्यम् । शेषः एकः । तद्विकल्पेषु प्रथमः सर्वगुरुः स्थाप्यः अन्ते त्वेको गुरुर्नियतत्वात्स्थाप्यः । एवं सति ईदृक्स्व-रूपामेतामार्यां वदेत् । तदुक्तम्—

नष्टाङ्के प्रथमं भक्ते गणाङ्कैश्चतुरादिभिः ।
शेषसंख्यो गणा ज्ञेयो लब्धं कुर्यात्सरूपकम् ॥१॥
पुनर्भजेत्पुनर्लब्धं सरूपं शेषसंख्यया ।
गणान्दद्याद्गणे शेषे गाथाऽथ प्राग्गणक्रमः ॥२॥ इति ।

इत्यार्यानष्टप्रकारः ॥

## ॥ अथो आर्यागीतेर्भेदाः ॥

स्कन्धकम् ।

डगणाष्टकपरिरचितं पूर्वार्धं तादृशं परार्धं यदि चेत् ॥
वृत्तं फणिगणपतिरिति निगदति तत्स्कन्धकं तदा नाम्ना स्यात् ॥१॥

डगणेति । यदि पूर्वार्धम् डगणाष्टकपरिरचितम् अष्टचतुष्कल-गणनिर्मितम् भवेत् । चेत् परार्धम् अपि तादृशम् अष्टचतुष्कलगण-निर्मितम् भवेत् । तदा तत् वृत्तम् नाम्ना स्कन्धकम् स्यात् । इति फ-णिगणपतिः निगदति । आर्यागीतौ चतुःषष्टिः मात्रा एव, गणानां त्वनि-यमः । अत्र तु गणाः नियताः इत्यनयोर्भेदः ॥ १ ॥

| भेदाः | नामानि । | गुरवः | लघवः | वर्णाः |
|---|---|---|---|---|
| १ | नन्दः | २८ | ८ | ३६ |
| २ | भद्रः | २७ | १० | ३७ |
| ३ | शेषः | २६ | १२ | ३८ |
| ४ | सारङ्गः | २५ | १४ | ३९ |
| ५ | शिवः | २४ | १६ | ४० |
| ६ | ब्रह्मा | २३ | १८ | ४१ |
| ७ | वारणः | २२ | २० | ४२ |
| ८ | वरुणः | २१ | २२ | ४३ |
| ९ | नीलः | २० | २४ | ४४ |
| १० | निशङ्कः | १९ | २६ | ४५ |
| ११ | मदनः | १८ | २८ | ४६ |
| १२ | तालः | १७ | ३० | ४७ |
| १३ | शेखरः | १६ | ३२ | ४८ |
| १४ | शरः | १५ | ३४ | ४९ |
| १५ | गगनम् | १४ | ३६ | ५० |
| १६ | सरभः | १३ | ३८ | ५१ |
| १७ | विमतिः | १२ | ४० | ५२ |
| १८ | क्षीरम् | ११ | ४२ | ५३ |
| १९ | नग्नम् | १० | ४४ | ५४ |
| २० | नरः | ९ | ४६ | ५५ |
| २१ | स्निग्धम् | ८ | ४८ | ५६ |
| २२ | स्नेहः | ७ | ५० | ५७ |
| २३ | मदकलः | ६ | ५२ | ५८ |
| २४ | भूपालः | ५ | ५४ | ५९ |
| २५ | शुद्धः | ४ | ५६ | ६० |
| २६ | सरित् | ३ | ५८ | ६१ |
| २७ | कुम्भः | २ | ६० | ६२ |
| २८ | शशी । | १ | ६२ | ६३ |

( *अथैतस्याऽष्टाविंशतिगुरूनष्टलघूनारभ्यैकैकगुरुह्रासेनैकैकान्तरितलघुवृद्ध्या भेदानाह । )

इत्यार्य्यागीतेर्भेदाः २८ एतेषामुदाहरणान्यूह्यानि ॥ इत्यार्याप्रकरणम् ॥६८॥

॥ इति शम् ॥

## ॥ अथ मात्रासमवृत्तानि ॥

पादाकुलकम् ।

अनियतगुरुलघुराहितविषाद षोडशकला यदा प्रतिपादम् ।
फणिपतिपिङ्गलभणिताविभेदम् पादाकुलकवृत्तमत्रेदम् ॥ १ ॥

अनियतेति । यदा प्रतिपादम् चतुर्षु चरणेषु प्रत्येकम् षोडश कलाः मात्राः स्युः । तदा अत्र इदम् पादाकुलकवृत्तम् भवति । कीदृशम् पादाकुलकवृत्तम् । अनियतगुरुलघु, न नियताः गुरवः लघवश्च यत्र तत् । पुनः कीदृशम् । रहितविषादम्, त्यक्तखेदम् । पुनः की०। फणिपतिपिङ्गलभणितविभेदम् । फणिपतिना पिङ्गलेन भणितः विशिष्टः भेदः यस्य तत् । इदमवृत्तं लोके "चौपाई" इति नाम्ना प्रसिद्धम् ॥ १ ॥

पद्धतिका ।

पादाकुलके चेदलघुर्नवमे । अष्टादश मात्रा गुरुरथ चरमे ॥
पवनाविरहिता स्याद्यदि भवति तदा।पद्धतिका फणिपोक्ता ललितपदा२

पादाकुलक इति । अथ चेत् प्रतिपादम् पादाकुलके वृत्ते नवमे नवममात्रास्थाने दशमीम्मात्रामाश्रित्येति यावत् अलघुः गुरुः स्यात् । यदि प्रतिपादम् अष्टादश मात्राः स्युः । चरमे अन्ते प्रतिपादमिति यावत् गुरुः स्यात् । तदा सा पद्धतिका भवति । कीदृशी सा । पवनविरहिता, मध्यगुरुचतुष्कलगणशून्या । पुनः की० । फणिपोक्ता । पुनः की० । ललितपदा, ललितानि पदानि यस्यां सा ॥ २ ॥

पज्झटिका ।

फणिपतिशेषेणोपनिगदिता । सुकविकुलमृदुलमा पहिता ॥
भवति सुविरचितषोडशकलिका । नवमे च गुरुरजा पज्झटिका ॥३॥

फणीति । यत्र प्रतिपादम् नवमे नवममात्रास्थाने दशमीम्मात्रामाश्रित्येति यावत् गुरुः भवति । सा पज्झटिका फणिपतिशेषेण उपनिगदिता उक्ता । कीदृशी सा । सुविरचितषोडशकलिका, सुविरचिताः प्रतिपादमिति यावत् षोडश कलिकाः मात्राः यस्यां सा । पुनः कीदृशी । सुकविकुलमृदुलमानसमहिता, सुकविकुलस्य मृदुल-

---

* ९६ पृष्ठस्थकोष्ठकस्योपरितनः प्रतीकोऽयं भ्रमवशादत्रायातः । तच्छोधनीयः पाठकैः ।

मानसेन महिता पूजिता। पुनः की०। अजा, जलदहीना अर्थात् मध्यगुरुचतुष्कलगणरहिता। इमां केचिज्जलदान्तां केचिल्लघ्वन्तामिच्छन्ति तन्मन्दम् फणिपानुक्तत्वात्॥ ३॥

रोला।

अर्कच्छाया त्रिपदा इयमेव काव्यपदभाक्॥
वसुभीरामैर्यत्र वसुभिर्वाणैस्सर्वदा।
प्रभवति विरतिश्चेति चतुर्विंशतिकलं यदा॥
निगदति फणिपतिरेष पिङ्गलनागः खलु तदा।
रोलानामकवृत्तमिदं हृष्टमतिरतिमुदा॥ ४॥

वसुभिरिति। यदा यत्र वसुभिः अष्टभिः मात्राभिः इति यावत् तथा रामैः तिसृभिः तथा वसुभिः अष्टाभिः तथा वाणैः पञ्चभिः सर्वदा विरतिः प्रभवति। तदा तत् इद् रोलानामकवृत्तम् भवति। इति एषः हृष्टमति फणिपतिः पिङ्गलनाग. अतिमुदा निगदति॥ कीदृशम् इदम् वृत्तम्। चतुर्विंशतिकलम्, चतुर्विंशतिः प्रतिपादमिति यावत् कलाः मात्रा यत्र तत्। खलु निश्चये॥ ४॥

अथकाव्यपदभाग्भेदानाह। तत्र ११ गुरूनारभ्यैकैकगुरुह्रासेन नामानि।

| गु. | भे | नामानि। |
|---|---|---|
| ११ | १ | कुन्दः |
| १० | २ | कर्णांसलः |
| ९ | ३ | मेघः |
| ८ | ४ | तालाङ्कः |
| ७ | ५ | कालरुद्रः |
| ६ | ६ | कोकिलः |
| ५ | ७ | कमलः |
| ४ | ८ | चन्द्र. |
| ३ | ९ | शम्भुः |
| २ | १० | चामर· |
| १ | ११ | गणेश्वरः |

अथेति। अयमभिप्रायः। यत्र प्रथमपादे एकादश गुरवः स्युः द्वौ लघू च स्याताम् द्वितीयतृतीयचतुर्थचरणानि तु यथेच्छम् गुरुलघुनिर्मितानि प्रत्येक चतुर्विशतिमात्रात्मकानि स्यु। सा काव्यपदभाक् कुन्दः। एवम् यत्र प्रथमपादे दश गुरव स्युः चत्वारः लघवः स्युः द्वितीयतृतीयचतुर्थ चरणानि तु पूर्ववत् स्युः। सा काव्यपदभाक् कर्णांसलः। एवमेवाऽग्रेऽपि बोध्यम्॥

अथाऽर्कच्छायाभेदानाह। तत्र चतुर्गुरुवृद्ध्याऽष्टलघुह्रासेन नामानि। तत्र षट्षष्टिलघूनेकादशगुरूनारभ्य। तद्यथा। एकादश गुरून् द्वौ लघू धृत्वा प्रथमं पादं समाप्य यत्र षट्षष्टिलघवस्स्युः। सा लोहाङ्गी। एव-

म्प्रथमं पादं समाप्य अष्टपञ्चाशल्लघवः चत्वारः। गुरवस्स्युः सा हंसिनी। एवं चक्रस्था बोध्याः। शेषाऽर्कच्छाया काव्यपदभाक् ॥

| भेद | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |
|---|---|---|---|---|---|---|---|---|
| नाम | लोहाङ्गी | हसिनी | रेखा | तालाङ्की | कम्पी | गम्भीरा | काला | कालरुद्राणी |
| ल० | ६६ | ५८ | ५० | ४२ | ३४ | २६ | १८ | १० |
| गु० | ० | ४ | ८ | १२ | १६ | २० | २४ | २८ |

अथेति। अयमभिप्रायः। यत्र प्रथमे पादे एकादश गुरवः स्युः द्वौ लघू स्याताम् द्वितीयतृतीयचतुर्थचरणेषु प्रत्येकमन्त्ये एकः गुरुःस्यात् षट्षष्टिलघवः स्युः। सा अर्कच्छाया लोहाङ्गी। एवम् प्रथमपादे एकादश गुरवः द्वौ लघू तथा द्वितीयतृतीयचतुर्थचरणेषु प्रत्येकमन्त्ये एकः गुरुःस्यात् तथा अष्टपञ्चाशल्लघवः चत्वारः गुरवश्च स्यु। सा अर्कच्छाया हंसिनी ज्ञेया। एवमेवाऽन्येऽपि बोध्यम् ॥

त्रिभङ्गी।

द्वात्रिंशन्मात्राविरचितगात्राऽमितरसपात्राकृतिललितम्।
दशवसुवसुविरतिर्भवति रसयतिर्यत्र सनियतिर्धृतिकलितम् ॥
अपि जलदविरहितं लघुगुरुसहितं नियमविरहितं संवलितम्।
फणिगणपतिसङ्गीतं शुभभङ्गीमिह त्रिभङ्गीवृत्तमितम् ॥ ५ ॥

द्वात्रिंशदिति। इह यत्र सनियतिः सनियमा दशवसुवसुविरतिः दशभिः मात्राभिरिति यावत् तथा वसुभिः अष्टभिः पुनः वसुभिः अष्टभिः विरति स्यात्, तथा रसयतिः, रसैः षड्भिः यतिः स्यात्। तत् त्रिभङ्गीवृत्तम् भवति। कीदृशम्। द्वात्रिंशन्मात्राविरचितगात्राऽमितरसपात्राकृतिललितम्। द्वात्रिंशन्मात्राभिः प्रतिपादमिति यावत् विरचितं यत् गात्रम् तेन अमितरसस्य पात्रभूता या आकृतिः तया ललितम् रम्यम्। पुनः की०। धृतिकलितम्। पुनः कीदृशम्। जलदविरहितम्। मध्यगुरुचतुष्कलगणशून्यम्। पुनः की०। नियमविरहित यथातथा सम्वलितम्मिलितम् यथातथा लघुगुरुसहितम्, न केवलैर्लघुभिर्गुरुभिर्वा युतमितिभावः। पुनः की०। फणिगणपतिसगीतम्। पुनः की०। शुभभङ्गीम् शुभा चासौ भङ्गी रचनाताम् इतम् प्राप्तम् ॥ ५ ॥

आन्दोलिता ।

यत्र दशदशकला अनुविरतिरुज्ज्वला तदनु मुनिमितकला यर्हिजाता ।
सप्तगुणसम्मिताः पादमात्राः स्थिता ललितपदराजिता याऽवदाता ॥
रसिकजनमानिता सपदि मुदमाहिता वितरति विगाहितालोकजाता
भुजगपतिनोदिता कविकुलविनोदिता छन्द आन्दोलिताऽयातपाता ६

यत्रेति । यत्र सप्तगुणसम्मिताः सप्तत्रिंशत्संख्याः पादमात्राः स्थिताः स्युः, तथा च यर्हि दशदशदश कलाः अनु लक्षीकृत्य उज्ज्वला स्पष्टा विरति. जाता, दशभि मात्राभिः पुनः दशभिः पुनः दशभिः विरतिः स्यात् इति भावः । तदनु मुनिमितकलाः अनुविरतिः जाता, अर्थात् तदनन्तरम् सप्तभिः विरतिः स्यात् । तर्हि सा आन्दोलिता नाम छन्दः भवति । कीदृशी आन्दोलिता । ललितपदराजिता । पुनः की० । अवदाता शुद्धा । पुनः की० ।। रसिकजनमानिता । पुनः की० । भुजगपतिना शेषेण उदिता उक्ता । पुनः की० कविकुलविनोदिता, कवीनाम् कुलैः विनोदिता । पुनः की० । अयातपाता न यात. पातो यस्या. सा । सा का । या अन्दोलिता आहिता सती सपदि मुदम् वितरति । कीदृशी या । विगाहितालोकजाता, विगाहितम् आलोकजातम् प्रकाशसमूह. यया सा ॥ ६ ॥

अरिल्लम् ॥

पादाकुलकम्भवति जलदेन । युक्तं चरमे यदि च नियमेन ॥
अरिल्लनामकवृत्तमिदमेष । पिङ्गलनामा फणिपतिरियेष ॥ ७ ॥

पादाकुलकमिति । यदि च पादाकुलम् वृत्तम् चरमे अन्ते प्रतिपादमिति यावत् नियमेन कृत्वा जलदेन मध्यगुरुचतुष्कलगणेन युक्तम् भवति । तर्हि एषः पिङ्गलनामा फणिपतिः इदम् अरिल्लनामकवृत्तम् इयेष इच्छतिस्म । अत्र पादान्त्यवर्णानां लघुत्वमेव ॥ ७ ॥

चतुष्पदी जयकरी च ॥

फणिपतिना सपदि पिङ्गलेन । परिभणिताऽगुरुलघुनियमेन ॥
चरमे यदि भवति लघुमती च । तिथिकलतनुरिह चतुष्पदी च ॥८॥

फणिपतिनेति । इह या छन्दोजातिः तिथिकलतनुः तिथयः पञ्चदश कलाः प्रतिपादम् इति यावत् यस्याम् एवंभूता तनुः यस्याः सा तथाभूता भवति, तथा च चरमे अन्ते प्रतिपादम् यदि लघुमती भवति । तर्हि सा चतुष्पदी फणिपतिना पिङ्गलेन सपदि परिभणिता । कीदृशी । अगुरुलघुनियमेन गुरुलघुनियमाभावेन उपलक्षिता । अत्र पादान्त्यवर्णानां लघुत्वमेव ॥ ८ ॥

अत्रोपकरणाद्यनेकक्रियाकर्तृत्वेन कुतूहलविशिष्टं मनो निर्दिष्टम् । छायान्तरेण तु मालादीपकं प्रस्तावान्तरे लक्षयिष्यते ।

**वाक्यार्थगतत्वेन सामान्यस्य वाक्यद्वये पृथङ्निर्देशे प्रतिवस्तूपमा ।**

पदार्थारब्धो वाक्यार्थ इति पदार्थगतालंकारानन्तरं वाक्यार्थगतालंकारप्रस्तावः । तत्र सामान्यधर्मस्येवाद्युपादाने सकृन्निर्देशे उपमा । वस्तुप्रतिवस्तुभावेनासकृन्निर्देशेऽपि सैव । इवाद्यनुपादाने सकृन्निर्देशे दीपकतुल्ययोगिते । असकृन्निर्देशे तु शुद्धसामान्यरूपत्वं बिम्बप्रतिबिम्बभावो वा । आद्यः प्रकारः प्रतिवस्तूपमा । वस्तुतः

कलाशेषश्चन्द्रः सुरतमृदिता बाललनना । मदक्षीणो नागः शरदि सरिदाश्यानपुलिना तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु जनाः ॥' अत्र शाणोल्लीढत्वादीनां बिम्बप्रतिबिम्बभावः । शुद्धसामान्यरूपत्वं यथा— 'फणरअणराइअङ्गो[1] भुअगणाहो वरं समुव्वहइ । णहदप्पणोवसोहिअसिहो अ तुह णाह भुअदण्डो ॥' अत्र राजितत्वशोभितत्वयोः शुद्धसामान्यरूपत्वम् । नन्वेतदनन्तरमेव मालादीपकमन्यैर्लक्षितं तदिहापि किं न लक्ष्यत इत्याशङ्क्याह—**छायेत्यादि** । छायान्तरेणेति शृङ्खलारूपेण । प्रस्तावान्तर इति शृङ्खलान्यायोपचितरूपत्वात् । **वाक्यार्थेत्यादि ।** एतदेव व्याख्यातुमलंकारान्तरैः सहास्या विभागं दर्शयति—**तत्रेत्यादिना ।** 'तया स पूतश्च विभूषितश्च' इत्यत्रोपमायाः सकृन्निर्देशः । 'पाण्ड्योऽयमंसार्पितलम्बहारः' इत्यादावपि चासकृन्निर्देशः । तदेवमिवाद्युपादाने साधारणधर्मस्य यथासंभवं स्वरूपं निरूप्येवाद्यनुपादानेऽपि निरूपयति—**इवादीत्यादिना ।** यद्यपि दीपकतुल्ययोगितयोः सामान्यस्यासकृन्निर्देशोऽपि संभवति तथापि सकृन्निर्देशं विना तयोरनुत्थानात्तदेवेह प्राधान्येनोक्तम् । असकृन्निर्देशश्च द्विधा भवतीत्याह—**असकृदित्यादि ।** आद्य प्रकार इति शुद्धसामान्यरूपत्वम् । यदि चात्र

१ 'फणरत्नराजिताङ्गो भुजङ्गनाथो वरं समुद्वहति । नखदर्पणोपशोभितशिखश्च तव नाथ भुजदण्डः ॥' इतिच्छाया. २ 'साम्यस्य' ख.

द्वादशके यदि विरतिश्चरमे गरुडविभूषितम् ॥
अलघुगुरुवर्णनियमं सज्जनमानसरञ्जनम् ।
फणिपतिपिङ्गलभणित वृत्तमिद गगनाङ्गनम् ॥ १२ ॥

पञ्चेति । यत्र पञ्चाधिकविंशतिकलचरणम् पञ्चविंशतिमात्रात्मकम् चरणम् विनिर्मितम्, तथा द्वादशमात्रान्ते प्रतिपादम् विरतिः यदि स्यात्, तथा चरमे अन्ते प्रतिपादम् गरुडविभूषितम् मध्यलघुपञ्चकलगणयुक्तम् स्यात् । तर्हि इदम् वृत्तम् गगनाङ्गनम् नाम भवति । कीदृशम् । फणिपतिपिङ्गलभणितम् । पु० कीदृशम् । अलघुगुरुवर्णनियमम्, लघुगुरुवर्णनियमरहितम् । पुनः कीदृशम् । सज्जनमानसरञ्जनम् ॥ १२ ॥

आभीरम् ।

रुद्रकलाकलितेन । पादचतुष्टयकेन ॥
आभीर जलदेन । युक्तं चरमगतेन ॥ १३ ॥

रुद्रेति । रुद्रकलाकलितेन एकादशमात्रात्मकेन पादचतुष्टयकेन तथा चरमगतेन अन्त्येनजलदेन मध्यगुरुचतुष्कलगणेन युक्तम् आभीरम् नाम छन्द भवति । यत्र प्रतिपादमेकादश मात्राः तथा प्रतिपादमन्ते मध्यगुरुचतुष्कलगणः, तत् आभीरम् इति भावः । अत्र पादान्त्यवर्णानां लघुत्वमेव ॥ १३ ॥

दीपकम् ।

राजति दशकलेन । वृत्तमिदम्पदेन ॥
श्रुतिशरशशियतेन । दीपकमिह कृतेन ॥ १४ ॥

राजतीति । इह दशकलेन श्रुतिशरशशियतेन कृतेन पदेन चरणेन इदम् दीपकम् नाम वृत्तम् राजति । यत्र प्रतिपादम् दशमात्राः तथा प्रतिपादम् चतसृभिर्मात्राभिः पञ्चभिः मात्राभिः एकमात्रान्ते च विरतिः, तत् दीपकम् वृत्तम् इति भावः । अत्र पादान्त्यवर्णानां लघुत्वमेव ॥ १४ ॥

सिंहविलोकितम् ।

फणिना भणितं रचितं च यदा । किल वेदचतुष्कलकलितपदा ॥
राजति परमाधिवरविबुधसदः । इति सिंहाविलोकितवृत्तमदः ॥ १५ ॥

फणिनेति । यदा यत् वृत्तम् वेदचतुष्कलकलितपदा वेदैः चतुर्भिः चतुष्कलैः गणैरिति यावत् कलितेन नियमितेन पदा चरणेन रचितम् । तदा तत् अदः इदम् सिंहविलोकितवृत्तम् अधिवरविबुधसद' वरविबुधसदसि राजति । इति फणिना भणितम् । कीदृशम् । परम्

उत्कृष्टम् । पादाकुलके प्रतिपादम् षोडशमात्रा एव, गणनियमस्तु न । अत्र नियताः चत्वारश्चतुष्कलगणाः प्रतिपादमित्यनयोर्भेदः ॥ १५ ॥

प्लवङ्गमः ।

इहैकविंशतिकलाकलापविनिर्मितम् ।
रसपञ्चचतूरसकलाविरतिशोभितम् ॥
फणिगणपतिना यदि चरमगुरुनियोजितम् ।
भवति पदं प्लवङ्गमवृत्तमिदमीरितम् ॥ १६ ॥

इहेति । इह यदि एकविंशतिकलाकलापविनिर्मितम् रसपञ्चचतूरस कलाविरतिशोभितम् चरमगुरुनियोजितम् पदम् भवति । तर्हि इदम् प्लवङ्गमवृत्तम् फणिगणपतिना ईरितम् । यत्र प्रतिपादम् एकविंशतिमात्राः, तथा प्रतिपादम् षड्भिः पञ्चभिः चतसृभिः षड्भिः मात्राभिः विरतिश्च, प्रतिपादमन्त्यो वर्ण॰ गुरुश्च भवति । तत् प्लवङ्गमनामकम्वृत्तमिति भावः ॥ १६ ॥

हरिगीतकम् ।

अष्टाधिका किल विंशतिश्च कला भवेयुरथो पदे ।
इषुषट्शराशुगपञ्चमात्रिकनिर्मितायतयातिपदे ॥
चरमोपगेन तथा भवेद् गुरुणैककेन नियोजिते ।
हरिगीतवृत्तमिदम्फणीश इति प्रवक्ति विशेषिते ॥ १७ ॥

अष्टेति । अथो यदि पदे चरणे अष्टाधिका विंशतिः कलाः भवेयुः । तर्हि इदम् हरिगीतवृत्तम् भवेत् । इति फणीशः प्रवक्ति । कीदृशे पदे । इषुषट्शराशुगपञ्चमात्रिकनिर्मितायतयतिपदे, इषुभिः षड्भिः शरैः आशुगैः पञ्चभिः मात्रिकै॰ निर्मिता आयता यतिः यत्र एवम्भूतानि पदानि सुप्तिङन्तरूपाणि इति यावत् यस्मिन् तस्मिन् । पुनः कीदृशे । तथा चरमोपगेन अन्त्येन एककेन गुरुणा नियोजिते । पुनः कीदृशे । विशेषिते सञ्जातविशेषे । यत्र प्रतिपादमष्टाविंशतिकलाः, प्रतिपादम् पञ्चभिः षड्भि पञ्चभिः पञ्चभिः पञ्चभिश्च विरतिः, प्रतिपादमन्त्यो वर्णो गुरुरेव । तद्धरिगीतकम् वृत्तम् इति भावः ॥ १७ ॥

दुर्मिला ।

डगणाष्टकराचित रासिकपरिचितं फणिगणपतिना परिभणितम् ।
अनुदिग्वसुमनुकलमिह विरतिरमलमविरलकविकुलपरिगणितम् ॥

विलसति यच्चरणं शुभमतिवरणं सहृदयहृदयाह्लादकरम् ।
वसुरविमितमात्रं किल यद्गात्रं वृत्तदुर्मिलानाम वरम् ॥ १८ ॥

डगणेति । इह यच्चरणम् यस्य वृत्तस्य चरणम् डगणाष्टकरचितम् विलसति, तथा यत्र अनुदिग्वसुमनुकलम् दशकलाः तथा अष्टकला॰ तथा चतुर्दशकलाः अनु लक्षीकृत्य प्रतिपादमिति यावत् विरतिः विल॰ सति, तथा यद्गात्रम् यस्य गात्रम् वसुरविमितमात्रम् वसुरविमिताः अ॰ ष्टाविंशत्यधिकशतसंख्याः मात्राः समुदिताश्चरणचतुष्टयगताः इति यावत् यत्र तत् एवम्भूतम्विलसति। तत् वृत्तदुर्मिलानाम वृत्तञ्च तत् दुर्मिलानाम उद्देश्यतया वृत्तशब्दस्य पूर्वनिपातः विधेयतया दुर्मिलानामशब्दस्य परनि॰ पातश्च वृत्तेषु दुर्मिलानामेति सप्तमीतत्पुरुषसमासो वा दुर्मिलानाम वृत्तम् इति यावत् फणिगणपतिना परिभणितम्। कीदृशम् वृत्तम् । रसिकप रिचितम् । पुन॰ कीदृशम् । अमलम् । पुनः की॰ । अविरलकविकुलपरिग॰ णितम् । पुनः की॰। शुभमतिवरणम्।शुभाया मत्याः वरणम्। यद्वा शुभा मतिर्यस्य तस्य वरणम् । यद्वा शुभम् तथा अतिवरणम् । पुनः की॰ । सहृदयहृदयाह्लादकरम् । पुन की॰ । वरम् श्रेष्ठम् । किलेति निश्चये । त्रिभङ्गीवृत्ते प्रतिपादम् द्वात्रिंशन्मात्रा एव, गणानान्त्वनियमः, दश॰ वसुवसुरस विरतिश्च, मध्यगुरुचतुष्कलगणाभावश्च। अत्र तु प्रतिपादम् नियमतोऽष्टडगणाः, तथा अनुदिग्वसुमनुकलम् विरति, मध्यगुरुचतुष्क॰ लगणाभावस्तु न नियतः। इत्यनयोर्भेदः ॥१८॥

मदनगृहम् ।

इह चत्वारिंशत्कलसकलचरणकलितमखिलपदललिततरं कविकदनहरम्
दशवसुमनुविरतिर्वसुभिश्च यतिर्भवति निखिलजनमोदकरं रसरभसधरम्
फणिपतिपरिभणितं जलदविरहितं प्रतिपदमन्ते गुरुसहितं भुवने महितम्
अगुरुलघुनियमितं यमकविलसितं मदनगृहं वृत्तम्प्रस्तुतवररसिकहितम्

इहेति । चत्वारिंशत् कलाः प्रत्येकमिति यावत् येषु एवम्भूतानि यानि सकलानि चत्वारि चरणानि तैः कलितम् युक्तम् मदनगृहम् वृत्तम् भव॰ ति । कीदृशम् । अखिलपदललिततरम् । पुनः कीदृशम् । कविकदनहरम् । पुनः की॰ । निखिलजनमोदकरम् । पुनः की॰ । रसरभसधरम् । पुनः की॰ । फणिपतिपरिभणितम् । पुनः की॰ । जलदविरहितम् । मध्यगुरुचतुष्कल॰ गणशून्यम् । पुनः की॰ । प्रतिपदम् प्रतिपादम् अन्ते गुरुसहितम् । पुनः की॰ । भुवने महितम् । पुनः की॰। अगुरुलघुनियमितम्, गुरुलघुनियमही॰ नम् । पुनः की॰ । यमकविलसितम् । पुनः की॰ । प्रस्तुतवररसिकहितम् ।

अत्र बोधयन्निति णिचस्तत्समर्थाचरणे प्रयोगात्संभवति वस्तुसंबन्धः । असंभवद्वस्तुसंबन्धा यथा—

'अव्यात्स वो यस्य निसर्गवक्रः स्पृशत्यधिज्यस्मरचापलीलाम् ।
जटापिनद्धोरगराजरत्नमरीचिलीढोभयकोटिरिन्दुः ॥'

अत्र स्मरचापसंबन्धिन्या लीलाया वस्त्वन्तरभूतेनेन्दुना स्पर्शनमसंभवल्लीलासदृशीं लीलामवगमयतीत्यदूरविप्रकर्षात्प्रतिबिम्बकल्पनमुक्तम् । एषापि पदार्थवाक्यार्थवृत्तिभेदाद्द्विविधा । पदार्थवृत्तिः समनन्तरमुदाहृता । वाक्यार्थवृत्तिर्यथा—

'त्वत्पादनखरत्नानां यदलक्तकमार्जनम् ।
इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः ॥'

---

जात इत्येवमात्मिकाया प्रतिपत्तेरभावात् । अतश्च मलसति वा सवन्धे निदर्शनेति वाच्यम् । तेन यथोक्तमेव भेदद्वय स्यात् । **असंभवदिति** । धर्म्यन्तरसबन्धिनो धर्मस्य धर्म्यन्तरेऽन्वयायोगात् । **अदूरविप्रकर्षादिति** । धर्ममुखेन सादृश्यस्य किंचित्प्रत्यासन्नत्वात् । यथा वा—'अद्दे पुलअ अहर सवेपिअ जपिअ ससिक्कार । सव्व सिसिरेण कअ ज काअव्व पिअअमेण ॥' अत्र वल्लभकार्यस्य पुलकादेर्धर्मस्य वस्त्वन्तरभूतेन शिशिरेण करणमसभवत्तस्य साम्यमवगमयतीति शिशिरस्य वल्लभतुल्यताप्रतीतेरौपम्यम् । अतश्चात्र धर्माणामसबन्धाभावान्न निदर्शनेत्युक्त्वा प्रतिमालंकारत्व न वाच्यम् । प्रतिमायाश्चान्योदाहरणेष्वलंकारान्तरादियोग स्फुट एवेति न पृथगलंकारत्व वाच्यम् । एवमन्येषामपि समग्राणामभिनवालंकाराणा चान्यैरन्यालंकारयोगो योजयितु शक्य एवेति ग्रन्थविस्तरभयादस्मद्दर्शने तद्दूषणोद्धारस्यैव च प्रतिज्ञातत्वादस्माभि प्रतिपदे(न) दूषितम् । न पुनरेतावतैव परमतमप्रतिषिद्धमनुमतमेवेति ईदृशा एषामपि पृथगलंकारत्व युक्तं मन्तव्यम् । एषैलसभवद्वस्तुसबन्धनिबन्धना । न केव

१. 'वाले' क. २ 'प्रतिपाद्य तेन' ख. ३ 'पुनस्तावतैव' ख. ४ 'अद्दे षणामपि' ख

लीलावतिका ।

अष्टचतुष्कलगणनिर्मितपदमिह लघुगुरुवर्णनियमरहितम् ।
द्वात्रिंशत्कलललितं कविकुलकलितामोदभरं भुवि विदितम् ॥
दर्वीकरनरपतिपिङ्गलपरिलपितं सुललितपदततिकलितम् ।
लीलावतिकानामकवृत्तं हृतजनचित्तं विभ्रमसहितम् ॥ २२ ॥

अष्टेति । इह अष्टचतुष्कलगणनिर्मितपदम् अष्टभिः चतुष्कलैः गणैः प्रत्येकमिति यावत् निर्मितानि पदानि यत्र तत् लीलावतिकानामकवृत्तम् भवति । कीदृशम् वृत्तम् । द्वात्रिंशत्कलललितम् द्वात्रिंशत् कलाः प्रतिपादम् इति यावत् यस्मिन् तच्च तत् ललितम् । पुनः कीदृशम् । लघुगुरुवर्णनियमरहितम् । पुनः कीदृशम् । कविकुलकलितामोदभरम् कविकुलैः कलितः आमोदभरः हर्षातिशयः यत्र तत् । पुनः कीदृशम् । भुवि विदितम् । पुनः की० । दर्वीकरनरपतिपिङ्गलपरिलपितम् । दर्वीकराः सर्पाः तेषाम् नरपतिः अधीशः स चासौ पिङ्गलः शेषापरपर्य्यायः तेन परिलपितम् उक्तम् । पुनः की० । सुललितपदततिकलितम् । पुनः की० । हृतजनचित्तम् मनोहरम् । पुनः की० । विभ्रमसहितम् सविलासम् लोकभ्रान्त्युपयोगि वा इति । त्रिभङ्गीवृत्ते गणानान्नियमो नास्ति, मध्यगुरुचतुष्कलगणाभावस्तु नियतः, प्रतिपादम् दशवसुवसुरसैः विरतिश्च । अत्र तु न तथा, इत्यनयोर्भेदः । दुर्मिलावृत्ते तु दशभिः अष्टभिः चतुर्दशभिः विरतिः नियता । अत्र तु विरतिविचार एव नास्ति, इत्युभयोर्भेदः ॥ २२ ॥

चौपैया ।

इह सप्तचतुष्कलकगणानादावेकं गुरु कुरु चरमे ।
त्रिंशत्कलचरणं हृदयावरणं यमकसहितमिति चकमे ॥
यद् दशवसुरविभिः किल वरकविभिर्विहितविरति भवति यदा ।
चौपैयावृत्तं फणिपतिवृत्तं तदिदं सत् सपदि तदा ॥ २३ ॥

इहेति । इह आदौ प्रतिपादमिति यावत् सप्त चतुष्कलकगणान् कुरु, तथा चरमे एकं गुरु कुरु, एवम् यदा यत् वृत्तम् त्रिंशत्कलचरणम् त्रिंशत् कलाः प्रत्येकम् येषु एवम्भूतानि चरणानि यत्र एवम्भूतम् भवति । तदा तत् इदम् चौपैयावृत्तम् भवति । इति वरकविभिः चकमे । कीदृशम् वृत्तम् । दशवसुरविभिः विहितविरति दशभिः अष्टभिः द्वादशभिः मात्राभिरति यावत् प्रतिपादम् विहिता विरतिः यत्र तत् । पुनः कीदृशम् ।

सपदि हृदयावरणम्। पुन० की०। यमकसहितम्। पुनः की०। फणिप-विवृत्तम्। पुनः की०। सत् समीचीनम्। चकमे इत्यत्र कमुकान्तावित्यतः कर्मणि लिट्, किलेति निश्चये॥ २३॥

मत्तचञ्चरीकम्।

षट्चत्वारिंशन्मितमात्राविलसन्निश्चितमतिसरसं नूतनरसविवशं ननु चरणम्॥दशदशदशदशभिर्भवति च यदि षड्भिर्विरतिश्च महद्भिर्यत्र विबुधसद्भिर्धृतवरणम्॥ कविकण्ठाभरणं रसिकमनोहरणं जनहृदयावरणं चेतोमदकरणं सुविहृतिदम् । फणिनायकपिङ्गलनिगदितमतिमङ्गलमवहृतसमलीकं मत्तचञ्चरीकम्वृत्तमिदम् ॥ २४॥

षडिति। यत्र षट्चत्वारिंशन्मात्राविलसत् षट्चत्वारिंशन्मात्राभिः विलसतीति विलसत् तथा निश्चितम् तथा अतिसरसम् तथा नूतनरसविवशम् चरणम् भवति। तथा यदि दशदशदशदशभिः तथा षड्भिः मात्राभिः प्रतिपादम् विरतिः भवति। तर्हि इदम् वृत्तम् मत्तचञ्चरीकम् नाम भवति। कीदृशम् वृत्तम्। महद्भिः विबुधसद्भिः धृतवरणम्। पुनः की०। कविकण्ठाभरणम्। पुनः की०। रसिकमनोहरणम्। पुनः की०। जनहृदयावरणम्। पुनः की०। चेतोमदकरणम्। पुनः की०। सुविहृतिदम् शोभनविहारप्रदम्। पुनः की०। फणिनायकपिङ्गलनिगदितम्। पुनः की०। अतिमङ्गलम्। पुनः की०। अवहृतसमलीकम् अवहृतम् सम्यक् अलीकम् येन तत् इति॥ २४॥

रविरुचि।

एकत्रिंशत्कलको यत्र च नियमकृतयमकपरिचितो यदि।
षोडशतिथिमात्राभिर्विरचितविरतिः पादो विलसति सपदि॥
प्रतिपदमेतल्ललितपदविततिरसिकविरतिकृत्सुगणवृत्तम्।
भुजगपतिपिङ्गल इति प्रवदति भवति रविरुचिनामकवृत्तम्॥२५॥

एकेति। यत्र एकत्रिंशत्कलकः एकत्रिंशत् कलाः यत्र सः तथा नियमकृतयमकपरिचितः नियमेन कृतैः यमकैः परिचितः युक्तः तथा षोडशतिथिमात्राभिः षोडशभिः पञ्चदशभिः च मात्राभिः विरचिता विरतिः यत्र सः पादः यदि विलसति। तर्हि एतत् रविरुचिनामकवृत्तम् भवति। इति भुजगपतिपिङ्गलः प्रवदति। कीदृशम् वृत्तम्। प्रतिपदम्प्रतिचरणम् ललिता पदानाम् सुप्तिङन्तानाम् विततिः यत्र तत्। पुनः की०

दृशम् । रसिकविरतिकृत् । पुनः की० । सुगणवृत्तम् शोभनगणनिर्मितम् अत्र प्रथमद्वितीयपादान्त्यवर्णयोर्लघुत्वम् ॥ २५ ॥

जलहरणम् ।

दशवसुभुवनयतिः सयमकनियतिः किल रदमितकलपदविततिः ।
सततं यत्र भवति परमिति निगदति पिङ्गलनामा भुजगपतिः ॥
वसुरविमितमात्रं स्याद्यद्गात्रं वरकविकुलचेतोहरणम् ।
वृत्तं जलहरणं हृदि मदकरणं प्रभवति मृदुलपदाचरणम् ॥ २६ ॥

दशेति । यत्र दशवसुभुवनयतिः दशभिः चतुर्दशभिश्च मात्राभिः यतिः प्रतिपादमिति यावत् भवति । तथा सयमकनियतिः यमकनियमसहिता रदमितकलपदविततिः रदमिताः द्वात्रिंशत् संख्या कलाः यत्र एवम्भूता पदानाम् चरणानाम् विततिः सततम् भवति । तथा यद्गात्रम् वसुरविमितमात्रम् अष्टाविंशत्युत्तरशतमात्रात्मकम् स्यात् । तत् वृत्तम् जलहरणम् नाम प्रभवति । इति पिङ्गलनामा भुजगपति परम् निगदति । कीदृशम् वृत्तम् । वरकविकुलचेतोहरणम् । पुन की० । हृदि मदकरणम् । पुनः की० । मृदुलपदाचरणम् मृदुलानाम् पदानाम् सुप्तिङन्तानाम् आचरणम् यत्र तत् । त्रिभङ्गीवृत्ते दशभिः वसुभिः वसुभिः रसैश्च विरतिः, मध्यगुरुचतुष्कलगणाभावश्च । अत्र तु दशभिः वसुभिः चतुर्दशभिश्च यतिः, मध्यगुरुचतुष्कलगणाभावस्तु न विवक्षित, इत्यनयोर्भेदः । दुर्मिलावृत्ते तु अष्ट डगणाः प्रतिपादम् नियताः। अत्र तु गणनियमो नास्तीत्युभयोर्भेदः। लीलावतिकावृत्ते तु विरतिविचारो नास्ति, अष्टौ डगणाः प्रतिपादम् नियताश्च । अत्र तु नियमतो विरतिः गणनियमाभावश्चेति द्वयोर्भेदः ॥ २६ ॥

श्रीमती ।

रसैः रसैश्शरैश्शरैर्यदि विरतिरिह भवति ।
द्वाविंशतिमात्रावति पदे सति परिलसति ॥
फणिनरपतिरिति निगदति यमकवति सुपदतति ।
श्रीमतीयमर्थनीयतनुररातिहृद्भवति ॥ २७ ॥

रसैरिति । इह यदि द्वाविंशतिमात्रावति द्वाविंशतिमात्रात्मके पदे चरणे सति रसै. षड्भि. रसैः षड्भिः शरैः पञ्चभिः शरैः पञ्चभिश्च विरतिः भवति । तर्हि इयम् श्रीमती नाम सुपदतति यथा तथा भवति । इति फणिनरपतिः निगदति । कीदृशे पदे । परिलसति शोभमाने । पुनः

कीदृशे। यमकवति यमकयुक्ते। कीदृशा इयम्। अर्थनीयतनुः अर्थनीया तनुः यस्याः सा। पुनः कीदृशी। अरतिहृत्। अत्र पादान्त्यवर्णानां लघुत्वम्॥२७॥

सपादी।

मात्राश्शशिरामामिताश्चेत्प्रतिचरणं यस्याः किल विलसन्ति।
षोडशतिथिमितकलाभिर्यदा विरतिश्चेति बुधा निगदन्ति॥
ललितपदा भवतीह यथागणविरचिततनुरियं च सपादी।
फणिनायकसंलपिता रसिको यां श्रुत्वा भवेदविषादी॥ २८॥

मात्रा इति। इह यस्याः प्रतिचरणम् शशिराममिता एकत्रिंशत्संख्याः मात्राः चेत् विलसन्ति, तथा प्रतिचरणम् षोडशतिथिमितकलाभि॰ षोडशभिः पञ्चदशभिः मात्राभि॰ विरतिः यदा भवति। तर्हि इयम् सपादी नाम भवति। इति बुधाः निगदन्ति। कीदृशी इयम्। ललितपदा। पुन॰ की॰। यथा गणविरचिततनुः। पुन की॰। फणिनायकसंलपिता। इयम् का। रसिको यां श्रुत्वा अविषादी भवेत्। रविहरिवृत्ते सुगणवृत्तत्वम् नियमकृतयमकपरिचितत्वच। अत्र तु न तथा। इत्यनयोर्भेदः। वस्तुतस्तु नानयोः कश्चिद्भेदः प्रतीयते। प्राचीनानुरोधादेव केवलम्पृथङ्निर्देशः। अत्र प्रथमद्वितीयपादान्त्ययोर्वर्णयोर्लघुत्वम्। किलेति निश्चये॥ २८॥

अपरासपादी।

पादे यदीये भवेयुः कलाः किल यत्र चेदब्धिगुणप्रमिताः।
द्वाविंशतिश्चैव वर्णास्तथा नगणानाम्विवेक इह प्रथिता॥
पिङ्गलेनाहिराजेन सा स्यादियं रसविश्वकलात्मशरीरा।
सपादीति नाम्नाऽपरा गदिताऽनल्पितभावैरसैरनधीरा॥२९॥

पाद इति। यदीये पादे अब्धिगुणप्रमिता चतुस्त्रिंशत्संख्या कलाः भवेयुः। तथा यत्र च द्वाविंशतिः एव वर्णा॰ प्रतिपाद चेत् भवेयुः। तथा इह मात्रावर्णेषु गणानाम विवेक न स्यात्। तर्हि सा इयम् अपरासपादी इति नाम्ना अहिराजेन पिङ्गलेन गदिता उक्ता। कीदृशी इयम्। प्रथिता प्रसिद्धा। पुनः की॰। रसविश्वकलात्मशरीरा षट्त्रिंशदुत्तरशतमात्रामयतनुः। पुनः की॰। अनल्पितभावैः रसैः अनधीरा धीरविशिष्टेति यावत्। किलेति निश्चये॥ २९॥

मत्ता ।

अपयोधरशरपरिमितडगणै रचितम् ।
चरणं भवति यदा चरमे हारचितम् ॥
मत्तानामकवृत्तं निखिलरसहितम् ।
वदति फणाभृदधीशो यमकैस्सहितम् ॥ ३० ॥

अपयोधरेति । यदा अपयोधरशरपरिमितडगणैः मध्यगुरुचतुष्कलगणेतरैः पञ्चभिः चतुष्कलगणैः रचितम् तथा चरमे अन्ते हारचितम् हारेण गुरुणा वर्णेनेति यावत् चितम् युक्तम् चरणम् भवति । तदा फणाभृदधीशः शेषः मत्तानामकवृत्त वदति । कीदृशम् । निखिलरसहितम् । पु० की० । यमकैः सहितम् । चरमे हारो नाभिलषितः क्वापि॥३०॥

एला ।

भवति टकारष्ठश्च पुनरपि तौ चेद्यदा ।
विरतिस्ताभ्यामेव यदि जायेत च तदा ॥
फणिनायक इति निखिलरसिकसुहृत्तमेला ।
पिङ्गल एष निगदति तत्स्याद्वृत्तमेला ॥३१॥

भवतीति। चेत् प्रतिपादम् पूर्वम् टकारः टगणः षट्कलगणः इति यावत् भवति। ततः ठः ठगणः पञ्चकलगणः इति यावत् भवति। यदा पुनरपि तौ टगणठगणौ भवतः। यदि ताभ्याम् टगणठगणाभ्याम् एव विरतिः जायेत। तदा तत् एला नाम वृत्तम् स्यात्। इति एषः फणिनायकः पिङ्गलः निगदति। कीदृशी एला। निखिलरसिकसुहृत्तमा। पुनः की०। ईला ईः लक्ष्मीः ताम् लाति इति। ला आदाने आतोऽनुपसर्गे कः ॥ ३१ ॥

दण्डी ।

कर्णद्विजवरकर्णद्विजवरकर्णा इह यदि ।
सन्ति द्विजवर इत्थं प्रतिचरणं यत्र सपदि ॥
वृत्तं कृतरतिनाम्ना प्रविरति दण्डी प्रभवति ।
सर्पाधिप इति शेषो निजमतिपूर्वं निगदति ॥ ३२ ॥

कर्णेति। इह यदि कर्णद्विजवरकर्णद्विजवरकर्णाः सन्ति। ततो द्विजवरः भवति। अर्थात् पूर्वम् गुरुद्वयम् ततो लघुचतुष्टयम् पुनः गुरुद्वयम् ततः लघुचतुष्टयम् पुनः गुरुद्वयम् ततः लघुचतुष्टयम् स्यात्। इत्थम् यत्र प्रतिचरणम् नियमः स्यात् इति शेषः। तर्हि इदम् वृत्तम् नाम्ना

दण्डी प्रभवति । इति सर्पाधिपः शेषः निजमतिपूर्वम् यथातथा निगदति । कीदृशम् वृत्तम् । कृतरति कृता रतिः विदुषामिति यावत् येन तत्। पुनः की० प्रविरति । प्रकृष्टा विरतिः यतिः यत्र तत । अत्र पादान्त्यवर्णानां लघुत्वमेव । नियतकर्णादिनियमादिदं वृत्तम्वर्णप्रस्तावे लेख्यम् । परन्तु मात्रावृत्तोपयोगित्वादत्र फणिना धृतम् । एतद्वृत्तम् वर्णप्रस्तावे सगणान्तम्भवति, तत्र दण्डिशब्दः पुल्लिङ्गः । अत्र तु दण्डीशब्दः स्त्रीलिङ्गः । दण्डानां समाहारोऽस्यामिति व्युत्पत्तिः इति ॥ ३२ ॥

शुद्धध्वनिः ।

आदौ षण्मात्रा यदि चरमेऽत्राऽलघुरिति मध्ये वदतितराम् ।
दण्डीकृतमोहा रचितजनोहा रसिकमनोहारि च नितराम् ॥
भुजगाधिपशेषो विहितविशेषो नियतमशेषोपहृतमदः ।
शुद्धध्वनिवृत्तं सुकविविवृत्त हृतजनचित्तं सततमदः ॥ ३३ ॥

आदाविति । अत्र यदि प्रतिपादम् आदौ षट् मात्राः स्युः । तथा मध्ये दण्डी दण्डीवृत्तचरणम् इति यावत् स्यात । तथा चरमे अन्ते अलघुः एकः गुरु स्यात् । तर्हि अदः इदम् शुद्धध्वनिवृत्तम् नियतम् भवति । इति भुजगाधिपशेषः वदतितराम् । कीदृशी दण्डी । कृतमोहा । पुनः की० । रचितजनोहा रचितः जनानाम् ऊहः यथा सा । कीदृशम् वृत्तम् । नितराम् रसिकमनोहारि । पुनः की० । सुकविविवृत्तम् । पुनः की० । सततम् हृतजनचित्तम् । कीदृशः भुजगाधिपशेषः । विहितविशेषः । पुनः की० । अशेषोपहृतमदः अशेषः अशेषम् यथातथा वा उपहृतःमदः येन सः । यद्वा, अशेषाणाम् उपहृतः मदः येन सः । अस्मिन् वृत्ते षण्मात्रानन्तरं दण्डीचरणन्ततश्चैको गुरुरिति प्रतिपादं नियमः । त्रिभङ्गीदुर्मिला-लीलावतिकाजलहरणवक्ष्यमाणपद्मावतिकावृत्तेषु तु नायं नियम इति भेदः ॥ ३३ ॥

पद्मावतिका ।

दशवसुमनुयतिका रदमितकलिका प्रतिपदमन्ते करतलिता ।
वसुरविमितमात्राविरचितगात्रा प्रतियतियमकितसुगणचिता ॥
हर्षितकविमतिका पद्मावतिका ललितपदवितातिरिति नितराम् ।
सन्ततमपनायकमहिगणनायक उदितरसिकरति वाञ्छितराम् ॥३४॥

दशेति । प्रतिपदम् दशवसुमनुयतिका दशभिः वसुभिः अष्टभिरिति

या वत् मनुभिः चतुर्दशभिरिति यावत् मात्राभिः यतिः यस्याम् सा, तथा प्रतिपदम् रदमितकलिका रदमिताः द्वात्रिंशत्संख्याः कलाः मात्राः यस्यां सा, तथा प्रतिपदम् अन्ते करतलिता सञ्जातकरतला अन्त्यगुरुचतुष्कलगणवतीति यावत् , तथा वसुरविमितमात्राविरचितगात्रा अष्टाविंशत्यधिकशतमात्रामयतनुः, तथा प्रतियतियमकितसुगणचिता, यमकयुक्तशोभनगणविशिष्टा, तथा हर्षितकविमतिका, तथा नितराम् ललितपदविततिः,पद्मावतिका नाम वृत्तम्, अपनायकम् अपगतः नायकः मध्यगुरुचष्कलगणः यस्मिन् कर्मणि तत् यथा तथा भवतीति शेषः । इति अहिगणपतिः उदितरसिकरति यथातथा सन्ततम् वष्टितराम् इच्छुतितराम् । त्रिभङ्गीवृत्ते दशवसुरसैः विरतिः। अत्र दशवसुमनुभिः यतिरित्यनयोर्भेदः। दुर्मिलावृत्ते गणनियमः। अत्र तु नेत्यनयोर्भेदः। लीलावतिकावृत्तेऽपि गणनियमः, विरतिविवेकाभावश्च। अत्र तु न तथेत्यनयोर्भेदः।अत्र प्रतिपदमन्तेऽन्त्यगुरुचतुष्कलगणो भवति। मध्यगुरुचतुष्कलगणाभावश्च नियतः। जलहरणवृत्ते तु न तथेति द्वयोर्भेदः । शुद्धध्वनिवृत्तादस्य वृत्तस्य भेदस्तु पूर्वमेवोक्तः ।। ३४ ।।

अलिला ।

**श्रुतिमितडगणाः प्रतिचरण यदि । लघुद्वयं चरमे भवति सपदि ॥**
**नियतं पिङ्गलनामा फणिपतिरलिलानामकवृत्तमिति गदति ।। ३५ ॥**

श्रुतीति । यदि प्रतिचरणम् श्रुतिमितडगणाः चत्वारश्चतुष्कलगणाः स्युः ।तथा प्रतिचरणम् चरमे अन्ते लघुद्वयम् नियतम् स्यात् । तर्हि इदम् अलिलानामकवृत्तम्भवति । इति पिङ्गलनामा फणिपतिः सपदि गदति । अस्मिन्वृत्ते प्रतिचरणमन्तेलघुद्वयं नियतम् । सिहविलोकितवृत्ते तु नायं नियम इत्युभयोर्भेदः । अत्र पादान्त्यवर्णानां लघुत्वमेव ॥ ३६ ॥

वसुकला ।

**चरमजलदानि । वसुमितकलानि ।**
**इति वसुकला च । फणिपतिरुवाच ॥ ३६ ॥**

चरमेति । यत्र चरमजलदानि चरमे अन्ते जलदः मध्यगुरुचतुष्कलगणः येषां तानि, वसुमिताः अष्टौ कलाः येषु तानि, पदानि स्युरिति शेषः । सा वसुकला नाम भवति । इति फणिपतिः उवाच । अत्र चरमे जलदो नाऽभिलषितः क्वापि । तन्मते यत्र च पदानि इति पाठः । अत्र पादान्त्यवर्णानां लघुत्वमेव ॥ ३६ ॥

मधुरा ।

रसशरमिताश्चरणे कलाश्चेत्स्युर्यदा सुललितपदा कृतसम्मदा बुद्धाश्विभिः परिसम्मितास्सकलाः कलाः ॥ सप्तभिः किल सप्तभिः किल भवति विरतिर्नगणानियतिर्यमकसहिता भुवनमहिता कौशलगमकगतिरविकला ॥ उदितमङ्गल एष पिङ्गल उचितकोमलजल्पकोऽमलमृदुलकाया ऽऽरसनिकाया सुरसन्मतिश्रुतसम्मतिः ॥ निगदतितरामिति जनितरागरसिकपराऽऽमोदनपरा नाम मधुरा श्रवणमधुरा फणिनरपतिः कृतगुरुमतिः ॥ ३७ ॥

रसेति । चेत् यदि चरणे प्रतिचरणम् रसशरमिताः षट्पञ्चाशन्मिताः कला स्युः । तथा च यदा सकलाः चरणचतुष्टयगताः कलाः बुद्धाश्विभिः परिसम्मिताः चतुर्विंशत्युत्तरशतद्वयसंख्याः स्युः । तथा च यदा सप्तभिः पुनः सप्तभिः पुनः सप्तभि पुनः सप्तभिः पुनः सप्तभिः पुनः सप्तभिः पुनः सप्तभिः पुनः सप्तभिः मात्राभिरिति यावत् विरतिः स्यात् । तथा च यदा गणनियतिः गणानाम् नियमः न स्यात् । तर्हि मधुरा नाम छन्दो भवति । इति उदितमङ्गलः उचितकोमलजल्पकः कृतगुरुमतिः फणिनरपतिः एषः पिङ्गलः निगदतितराम् । कीदृशी मधुरा । सुललितपदा । पुनः की० । कृतसम्मदा उत्पादितहर्षा । पुनः की० । यमकसहिता । पुनः की० । भुवनमहिता । पुनः की० । कौशलगमकगतिः, दक्षत्वसूचनकारिपरिज्ञानहेतुरिति यावत् । पुनः की० । अविकला वैकल्यहीना । पुनः की० । अमलमृदुलकाया । पुनः की० । आरसनिकाया आ सामस्त्येन रसनिकायः रससमूहः यस्यां सा । पुनः की० । सुरसन्मतिश्रुतसंमतिः, सुराणाम् सती या मतिः तया श्रुता सम्मतिः यस्यां सा । पुनः की० । जनितरागरसिकपरामोदनपरा, जनितः रागः येषान्ते एवम्भूताः ये रसिका तेषाम् परम् यत् आमोदनम् तस्मिन् परा तत्परा । यद्वा तदेव परम् प्रधानम् यस्यां सा । पुनः की० । श्रवणमधुरा कर्णप्रिया ॥ ३७ ॥

मात्रासमकम् ।

षोडशकालिकाः प्रतिपदं यदा । नवमीलघुर्गुरुरन्ते तदा ।
शेषेऽनियमो भणति फणिपतिर्मात्रासमकं तथैव विरतिः ॥ ३८ ॥

मात्रेति । यदा प्रतिपदम् षोडश कलिकाः मात्राः स्युः । तथा प्रतिपदम् नवमी मात्रा लघुः स्यात् । तथा प्रतिपदमन्ते गुरुः स्यात् । तथा शेषे अनियम: स्यात् । तथैव विरतिः स्यात् । तदा मात्रासमकम् नाम

विश्लोक. ।

मात्राचतुष्कतः स्याज्जलदः । प्रतिपदमिहाऽष्टिमात्रिकासदः ।
शेषश्च पूर्ववद् भुवि लोके । नियमोऽयमेव किल विश्लोके ॥३९॥

मात्रेति । इह प्रतिपदम् मात्राचतुष्कतः मात्राचतुष्टयान्तरम् जलदः मध्यगुरुचतुष्कलगणः स्यात् । तथा प्रतिपदम् अष्टिमात्रिकासद् षोडश मात्राः इति यावत् स्यात् । शेष च पूर्ववत् स्यात । भुवि लोके पृथिव्यामिति यावत् विश्लोके विश्लोकनामके वृत्ते अयम् एव नियमः उक्त इति शेषः । किलेति निश्चये ॥ ३९ ॥

नवासिका ।

वसुमात्रातो भवेत्पयोदः । शेषे पूर्ववदिति प्रमोदः ।
नवासिकानामके च वृत्ते । शेषेणाऽहिपतिना विवृत्ते ॥ ४० ॥

वस्विति । नवासिकानामके वृत्ते वसुमात्रातः अष्टमात्रानन्तरम् प्रतिपादमिति यावत् पयोदः मध्यगुरुचतुष्कलगणः भवेत् । शेषे पूर्ववत् भवेत्, अर्थात् प्रतिपादम् षोडश मात्राः स्युः । इति प्रमोदः प्रकृष्टः हर्षः भवति—इति शेषः कीदृशे वृत्ते । अहिपतिना शेषेण विवृत्ते उक्ते । अतिप्रमोदः इति पाठे तु पयोदस्य विशेषणमेतत् ॥ ४० ॥

चित्रा ।

पञ्चाऽष्टनवसु यदा लकारः । शेषे त्वनियम इति प्रकारः ।
तदा वदति फणिनृपतिश्चित्रानामकमिति शुभगणेन सत्रा ॥४१॥

पञ्चेति । यदा प्रतिपादम् शुभगणेन सत्रा सह पञ्चाष्टनवसु लकारः स्यात् । अर्थात् पञ्चमी अष्टमी नवमी च मात्रा लघुरेव भवेत् । शेषे तु अनियमः स्यात् । प्रतिपादम् षोडशमात्रास्तु पूर्ववत् भवेयुः । इति प्रकारः स्यात् । तदा चित्रानामकम् वृत्तम् भवति । इति फणिनृपतिः वदति ॥ ४१ ॥

उपचित्रा ।

नवमे गुरुर्यदा स्यादत्रा-ऽनियमः शेषेऽसावुपचित्रा ।
वृत्तं भवति तदेति विशेषः । कथयति फणिनृपतिः किल शेषः॥४२॥

नवम इति । यदा अत्र प्रतिपादम् नवमे नवममात्रास्थाने दशमीम्मात्रामाश्रित्येति यावत् गुरुः स्यात् । शेषे अनियमः स्यात् । प्रतिपादम् षोडशमात्रास्तु पूर्ववत् स्युः । तदा असौ उपचित्रा नाम वृत्तम् भवति । इति फणिनृपतिः शेषः कथयति । कीदृशः शेषः । विशेषः उत्कृष्टः । यद्वा विशेषम् आचष्टे विशेषयति विशेषयतीति विशेष । विशेषशब्दात् तत्करोति तदाचष्टे इति णिच् ततः पचाद्यच् । पज्झटिकावृत्ते मध्यगुरु-

परिचरिता ।

डद्वयमादौ ठद्वयं ततो यदि ।
प्रतिपदमन्ते लद्वयं च संसदि ॥
इयमिह कविवरमुखगता विराजति ।
परिचरिता फणिपभणिता यथायति ॥ ४३ ॥

डद्वयमिति । यदि प्रतिपदम् आदौ डद्वयम् चतुष्कलगणद्वयम् भवति । ततः डद्वयानन्तरम् ठद्वयम् पञ्चकलगणद्वयम् भवति । तथा प्रतिपदमन्ते लद्वयम् लघुद्वयम् भवति । तर्हि इह लोके इयम् परिचरिता नाम कविवरमुखगता सती संसदि सभायाम् विराजति । कीदृशी इयम् । यथायति यतिम् अनतिक्रम्य फणिपभणिता । अत्र पादान्त्यवर्णाना लघुत्वमेव ॥ ४३ ॥

अचला ।

टगणद्वयरचितं यदि । यच्चरणम्भवति सपदि ॥
लद्वयचरमं फणिपति-रचला नाम परिभणति ॥ ४४ ॥

टगणेति । यदि यच्चरणम् टगणद्वयरचितम् षट्कलगणद्वयनिर्मितम् भवति । तद्वृत्तम् अचला नाम फणिपतिः सपदि परिभणति । कीदृशम् चरणम् । लद्वयचरमम् अन्त्यलघुद्वययुक्तम् । अत्र पादान्त्य वर्णानां लघुत्वमेव ॥ ४४ ॥

रतिकरी ।

ठद्वयं चरणेषु । वारिदश्चरमेषु ।
रतिकरी यदि शेष-इति नाम समियेष ॥ ४५ ॥

ठद्वयमिति । यदि यस्य चरणेषु ठद्वयम् पञ्चकलगणद्वयम् भवति । तथा चरमेषु वारिदः मध्यगुरुचतुष्कलगणः भवति । तर्हि तस्य वृत्तस्य रतिकरी इति नाम शेषः समियेष । अत्राऽपि पादान्त्यवर्णानाम् लघुत्वमेव ॥ ४५ ॥

चरणम् ।

टगणयुतढगणम् । चरमगतहरणम् ।
यदि भवति चरणम् । वृत्तमिति चरणम् ॥ ४६ ॥

टगणेति । यदि टगणयुतढगणम् टगणेन षट्कलगणेन युतः ढगणः त्रिकलगणः यत्र तत्, चरमगतहरणम् चरमगतं हरणं हारः गुरुरिति

चटुलम् ।

डढौ भवतः । पदेषु यतः ॥ चटुलं शेष–इति समियेष ॥ ४७ ॥

डढाविति । यतः यस्य तसेस्सार्वविभक्तिकत्वात् षष्ठ्यर्थे तसिः पदेषु डढौ डगणढगणौ चतुष्कलत्रिकलगणौ इति यावत् भवतः । तद्वृत्तम् चटुलम् नाम भवति । इति शेषः समियेष । अत्र तृतीयचतुर्थपादान्त्यवर्णयोर्लघुत्वम् ॥ ४७ ॥

कलना ।

डत्रयणाभ्यां संसृष्टम् । पिङ्गलनागेनोद्दिष्टम् ॥
भवति समं चेद्यच्चरणम् । कलनावृत्तं रतिकरणम् ॥ ४८ ॥

डत्रयेति । चेत् यच्चरणम् डत्रयणाभ्यां चतुष्कलगणत्रयेण द्विकलगणेन च संसृष्टम् रचितम् भवति । तर्हि कलना नाम वृत्तम् पिङ्गलनागेन उद्दिष्टम् कथितम् । कीदृशम् । समम् । पु० की० । रतिकरणम् प्रीतिजनकम् । किञ्जल्के वृत्ते गणनियमो नास्ति । अत्र तु सोऽस्तीत्यनयोर्भेदः॥४८॥

लीला ।

टगणद्वयसहितं यदि डगणत्रयमिह चरणे ।
तैरपि चेत्स्याद्विरतिर्नियमितसुगणाचरणे ॥
वृत्तं हृतजनचित्त रसनवमात्रं प्रभवति ।
लीलानामकमेतत् फणिगणपतिरिति निगदति ॥ ४९ ॥

टगणेति । यदि इह चरणे प्रतिचरणम् टगणद्वयसहितम् षट्कलगणद्वययुक्तम् डगणत्रयम् चतुष्कलगणत्रयम् स्यात् । तथा चेत् तैः टगणडगणैः विरतिः अपि स्यात् । तर्हि एतत् लीलानामकम् वृत्तम् प्रभवति । इति फणिगणपतिः निगदति ॥ कीदृशे चरणे । नियमितसुगणाचरणे, नियमितम् सुगणानाम् शोभनगणानाम् आचरणम् यत्र तस्मिन् । कीदृशम् वृत्तम् । हृतजनचित्तम्। पु० की० । रसनवमात्रम् , रसनवसंख्याः षण्णवतिरिति यावत् मात्राः चतुश्चरणगताः इति यावत् यत्र तत् । अत्र तृतीयचतुर्थपादान्त्यवर्णयोर्लघुत्वम् ॥ ४९ ॥

मदकरणम् ।

यदीन्द्रासनद्वन्द्वमथ टद्वयं ततष्ठगणद्वयमनुपदम् ।
विरामो भवेच्चेद्दशभिर्द्वादशभिर्दशभिश्च सुललितपदम् ॥
भुजङ्गाधिनाथोऽसौ ब्रूते नाम्ना तद्वृत्तं मदकरणम् ।
विशिष्य प्रसादात्मसाधुरचनाऽव्यगूढमिदमिह मदकरणम्॥५०॥

यदीति । इह यदि अनुपदम् प्रतिचरणम् इन्द्रासनद्वन्द्वम् आदिल-

भवेत् । ततः तदनन्तरम् ठगणद्वयम् पञ्चकलगणद्वयम् भवेत् । तथा चेत् अनुपदम् दशभिः द्वादशभिः पुनः दशभि. मात्राभिरिति यावत् विरामः विरतिः भवेत् । तर्हि तत् इदम् वृत्तम् नाम्ना मदकरणम् भवति । इति असौ भुजङ्गाधिनाथः विशिष्य ब्रूते । कीदृशम् वृत्तम् । मदकरणम् हर्षजनकम् । पु० की० । प्रसादात्मसाधुरचनावगूढम् , प्रसादात्मिका या साध्वी रचना तया अवगूढम् । पुनः की० । सुललित-पदम् ॥ ५० ॥

॥ इति मात्रासमवृत्तप्रकरणम् ॥

॥ इति शम् ॥

## अथ मात्रार्द्धसमवृत्तानि ।

तत्राऽऽदौ-

द्विपथ्या दोहा च ।

टोऽप्ययोधरडोऽसमे पदेऽनादिगुरुढश्च ।
तावेकं लघु समपदे दोहा वक्त्यहिपश्च ॥ १ ॥

टोऽपीति । यदि असमे विषमे पदे चरणे टः षट्कलगणः स्यात् । ततः अपयोधरडः मध्यगुरुचतुष्कलगणेतरचतुष्कलगण स्यात् । ततश्च अनादिगुरुढः आदिगुरुत्रिकलगणेतरत्रिकलगणः स्यात् । तथा समपदे तौ टगणमध्यगुरुडगणेतरडगणौ स्याताम् । ततः एक लघु स्यात् । तर्हि अहिपः शेषः दोहाम् नाम छन्दः वक्ति । अत्रद्वितीयचतुर्थपादान्त्यवर्णयो-र्लघुत्वमेव । द्विपथ्येतिनामान्तरमस्य बोध्यम् ॥ १ ॥

सौराष्ट्री सौराष्ट्रम् सोरट्ठा च ।

यद्दोहाविपरीत-मिह पिङ्गलनागो यदा ।
तत्सोरट्ठावृत्त-महिपतिरिति निगदति तदा ॥ २ ॥

यदिति । इह यदा यत् वृत्तम् दोहाविपरीतं भवति । तदा तत् सोरट्ठा नाम वृत्तम् भवति । इति अहिपतिः पिङ्गलनागः निगदति । यदि दोहावृत्तस्य समचरणलक्षणं विषमचरणगं स्यात् । विषमचरण लक्षणं च समचरणगं भवेत् । तर्हि सोरट्ठावृत्तमिति भावः । सौराष्ट्री सौराष्ट्रं चेति नामद्वयमन्यदप्यस्य ज्ञेयम् ।

अत्र प्रथमतृतीयपादान्त्यवर्णयोर्लघुत्वमेव ॥ २ ॥

## अथ दोहाभेदानाह ॥

तद्यथा त्रयोविंशतिगुरून्द्वौ लघूचाऽऽरभ्यैकैकगुरुह्रासेन

| भेदाः | नामानि | गुरवः | लघवः |
|---|---|---|---|
| १ | भ्रमरः | २३ | २ |
| २ | भ्रामरः | २२ | ४ |
| ३ | सरभः | २१ | ६ |
| ४ | श्येनः | २० | ८ |
| ५ | मण्डूकः | १९ | १० |
| ६ | मर्कटः | १८ | १२ |
| ७ | करभः | १७ | १४ |
| ८ | नरः | १६ | १६ |
| ९ | मरालः | १५ | १८ |
| १० | मदकलः | १४ | २० |
| ११ | पयोधरः | १३ | २२ |
| १२ | चलः | १२ | २४ |
| १३ | वानरः | ११ | २६ |
| १४ | त्रिकलः | १० | २८ |
| १५ | कच्छपः | ९ | ३० |
| १६ | मत्स्य. | ८ | ३२ |
| १७ | शार्दूल. | ७ | ३४ |
| १८ | अहिवरः | ६ | ३६ |
| १९ | व्याघ्रः | ५ | ३८ |
| २० | विडालः | ४ | ४० |
| २१ | श्वा | ३ | ४२ |
| २२ | उदुम्बर. उन्दुरुश्च | २ | ४४ |
| २३ | सर्प | १ | ४६ |
| २४ | शशधरः | ० | ४८ |

# अथैतेषामुदाहरणानि ।

।

स्युर्दीर्घास्त्रयोविंशत्या तुल्याश्च ।
ह्रस्वौ स्यातां यदा पूर्वस्स्यान्नाम्ना च ॥ १ ॥

। यदा यत्र त्रयोविंशत्या तुल्या दीर्घाः स्युः । तथा द्वौ ह्रस्वौ सः नाम्ना पूर्वः भ्रमरः इति यावत् स्यात् । अत्र चकारयोः वाद्गुरुता, अन्यथा चतुर्लघ्वापत्तिः, द्विलघ्वसम्भवात् । एव- ः पादान्त्ययोः लघुचकारयोः मात्राद्वयम्मिलित्वा एक एव यनुसन्धेयम् । अन्यथा चतुर्विंशतिगुरवः स्युः, त्रयोविंशतिगु- न् । ततश्च मात्राद्वयाधिक्यात् छन्दोभङ्गप्रसङ्गः स्यादिति दिक् । द्वाविंशतिगुरून् चतुर्लघूनेवाऽऽरभ्यैकैकगुरुह्रासेन लघुद्वयवृ- द्धाः कल्पनीयाः । ततो न कष्टकल्पनेत्यलम्पल्लवितेनेति शम् ॥१॥

. ।

वंशत्या सम्मिता दीर्घा ह्रस्वा यत्र ।
त्वारः स्युर्भ्रामरो नाम्नाऽसौ स्यादत्र ॥ २ ॥

र्शेति । यत्र द्वाविंशत्या सम्मिताः दीर्घाः स्युः । तथा चत्वारः ।. । असौ अत्र नाम्ना भ्रामरः स्यात् । अत्र द्वितीयचतुर्थपादा- लघुत्वमेव । इतःपरं सर्वेषु दोहाभेदेषु द्वितीयचतुर्थपादान्त्य- घुत्वमेवाऽनुसंधेयम् ॥ २ ॥

ः ।

स्युर्भूदस्रोन्मिता दीर्घा ह्रस्वा यर्हि ।
णागेशेनोदितो नाम्ना सरभस्तर्हि ॥ ३ ॥

ति । चेत् भूदस्रोन्मिताः एकविंशतिसंख्याः दीर्घाः स्युः । तथा ह्रस्वा. स्युः । तर्हि असौ नाम्ना सरभः नागेशेन शेषेण उदित· ॥

।

र्घा विंशत्या मिता अष्टौ लघवो यत्र ।
ङ्गलनागप्रोदितः श्येनः स्यादित्यत्र ॥ ४ ॥

इति । यत्र विंशत्या मिताः दीर्घाः स्यु. । तथा अष्टौ लघवः सौ अत्र श्येनः इति स्यात् । कीदृशः । पिङ्गलनागप्रोदितः, ॥ ४ ॥

मण्डूकः ।

दीर्घा अतिधृत्युन्मिता ह्रस्वाः स्युर्दश यर्हि ।
ब्रूतेऽनन्तो नामतो मण्डूकं किल तर्हि ॥ ५ ॥

दीर्घा इति । यर्हि अतिधृत्युन्मिता एकोनविंशतिसंख्याः दीर्घाः स्युः । तथा दश ह्रस्वाः स्युः । तर्हि अनन्तः तम् नामतः मण्डूक ब्रूते । किलेति निश्चये ॥ ५ ॥

मर्कटः ।

दीर्घाः स्युर्धृतिसंमिता ह्रस्वा द्वादश यत्र ।
पिङ्गलनागेनोदितो मर्कटनामा तत्र ॥ ६ ॥

दीर्घा इति । यत्र धृतिसम्मिताः अष्टादश दीर्घाः स्युः । तथा द्वादश ह्रस्वाः स्युः । तत्र मर्कटनामा दोहाभेदः इति यावत् पिङ्गलनागेन उदित. ॥ ६ ॥

करभः ।

दीर्घाः स्युर्घनसंमिता इन्द्रमिता लघवश्च ।
ब्रूते शेषो यदि तदा नाम्नाऽसौ करभश्च ॥ ७ ॥

दीर्घा इति । यदि घनसम्मिताः सप्तदश दीर्घाः स्युः । च पुनः इन्द्रमिताः चतुर्दश लघवः स्युः । तदा असौ नाम्ना करभः भवति । इति शेषः ब्रूते ॥ ७ ॥

नरः ।

षोडश गुरवः सन्ति चेल्लघवो यत्र किलाऽपि ।
पिङ्गलनागेनाऽसकौ नाम्ना नर आलापि ॥ ८ ॥

षोडशेति । चेत् यत्र षोडश गुरवः सन्ति । तथा लघवः अपि षोडश सन्ति किल । तर्हि असकौ असौ पिङ्गलनागेन नाम्ना नरः आलापि उक्तः । असकावित्यत्राऽव्ययसर्वनाम्नामकच् प्राक्टेरित्यकच् ॥ ८ ॥

मरालः ।

अष्टादश लघवो यदा गुरवः पञ्चदशैव ।
मरालनामेत्यहिपतिः शेषो वक्ति तदैव ॥ ९ ॥

अष्टेति ।यदा अष्टादश लघवः स्युः । तथा पञ्चदश एव गुरवः स्युः । तदा मरालनामा दोहाभेदः भवति । इति अहिपतिः शेषः वक्ति एव ॥ ९ ॥

मदकलः ।

मनुमितगुरवो विंशतिर्लघवः सन्ति यदा च ।
मदकलनामाऽसौ भवेदित्थं शेष उवाच ॥ १० ॥

मनुमितेति । यदा मनुमितगुरवः चतुर्दश दीर्घाः सन्ति च पुनः विंशतिः लघवः सन्ति. ॥ तर्हि असौ मदकलनामा भवेत् । इत्थम् शेषः उवाच ॥ १० ॥

पयोधरः ।

नाम पयोधर इति भवेदतिरविगुरवस्सन्ति ।
न्यस्ता आकृतिसम्मिता लघवो यत्र भवन्ति ॥ ११ ॥

नामेति । यत्र अतिरविगुरवः त्रयोदश दीर्घाः सन्ति । तथा आकृतिसम्मिताः द्वाविंशतिसंख्याः लघवः न्यस्ताः भवन्ति । तस्य दोहावृत्तस्य पयोधरः इति नाम भवेत् ॥ ११ ॥

चलः ।

लघवश्च चतुर्विंशतिर्गुरवो द्वादश यत्र ।
स्युः फणिगणपतिरिति वदति चलनामाऽसावत्र ॥१२॥

लघव इति । यत्र चतुर्विंशतिः लघवः स्यु । तथा द्वादश गुरव स्युः । अत्र असौ चलनामा भवति । इति फणिगणपतिः वदति । अत्र तृतीयपादान्त्यवर्णस्याऽपि लघुत्वम् ॥ १२ ॥

वानरः ।

एकादश गुरवो यदा रसयमामितलघवश्च ।
नाम्ना वानर इह तदा फणिनायकभणितश्च ॥ १३ ॥

एकादशेति । इह यदा एकादश गुरवः स्युः । च पुनः रसयममितलघव. षड्विंशतिसंख्याः ह्रस्वाः स्यु । तदा सः नाम्ना वानरः भवति । कीदृशः सः । फणिनायकभणितः, शेषोक्तः ॥ १३ ॥

त्रिकलः ।

वसुयमामितलघवो यदा दश गुरवश्च भवन्ति ।
तदा विशिष्य त्रिकल इति नाम बुधा निगदन्ति ॥१४॥

वस्विति । यदा वसुयममितलघवः अष्टाविंशतिसंख्याः ह्रस्वाः भवन्ति । च पुनः दश गुरवः भवन्ति । तदा बुधा विशिष्य विशेषेणेति यावत् त्रिकलः इति नाम निगदन्ति ॥ अत्र तृतीयपादान्त्यवर्णस्याऽपि लघुत्वम् ॥ १४ ॥

कच्छपः ।

लघवो द्विगुणिततिथिमिता गुरवो नव यदि सन्ति ।
नाम्ना कच्छप इति भवति सुधियो नियतमुशन्ति ॥ १५ ॥

लघव इति । यदि द्विगुणिततिथिमिताः त्रिंशत्संख्याः लघवः सन्ति । तथा नव गुरवः सन्ति । तदा असौ नाम्ना कच्छपः भवति । इति सुधियः नियतम् यथा तथा उशन्ति इच्छन्ति । अत्र तृतीयपादान्त्यवर्णस्याऽपि लघुत्वम् । उशन्तीत्यत्र वशकान्तौ कर्तरि लट्, अहिज्येति सम्प्रसारणम् ॥ १५ ॥

मत्स्यः ।

रदपरिमितलघवो यदा वसुमितगुरवस्सन्ति ।
भवति मत्स्य इह खलु तदा विबुधा इति कथयन्ति ॥ १६ ॥

रदेति । इह यदा रदपरिमितलघवः द्वात्रिंशत्संख्याः ह्रस्वाः सन्ति । तथा वसुमितगुरवः अष्टौ दीर्घाः सन्ति । तदा मत्स्यः भवति । इति विबुधाः कथयन्ति । खलु निश्चये ॥ १६ ॥

शार्दूलः ।

श्रुतिगणपरिमितलघव इह नगमितगुरवो यत्र ।
फणिगणपतिपरिभणित इति शार्दूलः स्यात्तत्र ॥ १७ ॥

श्रुतीति । इह यत्र श्रुतिगुणपरिमितलघवः चतुस्त्रिंशत्संख्याः ह्रस्वाः स्युः । तथा नगमितगुरवः सप्त दीर्घाः स्युः । तत्र सः शार्दूलः इति स्यात् । कीदृशः । फणिगणपतिभणितः, शेषोक्तः । अत्र प्रथमतृतीयपादान्त्यवर्णयोरपि लघुत्वम् ॥ १७ ॥

अहिवरः ।

रसगुणपरिमितलघव इह रसमितगुरवो यर्हि ।
अहिवर इति खलु नामतः फणिपतिभणितस्तर्हि ॥ १८ ॥

रसेति । इह यर्हि रसगुणपरिमितलघवः षट्त्रिंशत्संख्याः ह्रस्वाः स्युः । तथा रसमितगुरवः षट् दीर्घाः स्युः । तर्हि सः नामतः अहिवरः इति फणिपतिभणितः शेषोक्तः । खलु निश्चये । अत्र प्रथमपादान्त्यवर्णस्याऽपि लघुत्वम् ॥ १८ ॥

व्याघ्रः ।

वसुगुणपरिमितलघव इह शरमितगुरवश्चाऽपि ।
व्याघ्रक इति भवति सनियममहिगणपतिनाऽलापि ॥ १९ ॥

वस्विति । इह यदि वसुगुणपरिमितलघवः अष्टत्रिंशत्संख्याः ह्रस्वाः

स्युः । अपि च शरमितगुरवः पञ्च दीर्घाः स्युः। तर्हि सः व्याघ्रकः भवति। इति अहिगणपतिना सनियमम् यथा तथा अलापि उक्तम् । अत्र प्रथम-तृतीयपादान्त्यवर्णयोरपि लघुत्वम् ॥ १९ ॥

विडालः ॥

गगनजलधिमितलघव इह जलनिधिमितगुरवश्च ।
प्रभवति यदि फणिपतिभणित इति नाम विडालश्च ॥ २० ॥

गगनेति । इह यदि गगनजलधिमितलघवः चत्वारिंशत्संख्या ह्रस्वाः स्युः । च पुनः जलनिधिमितगुरवः चत्वारो दीर्घाः स्युः । तर्हि असौ विडालः इति प्रभवति । नामेति प्रसिद्धौ । कीदृशः असौ । फणिपति-भणितः । अत्र प्रथमतृतीयपादान्त्यवर्णयोरपि लघुत्वम् ॥ २० ॥

श्वा ।

यदि यमयुगमितलघव इह गुणपरिमितगुरुकाणि ।
श्वा फणिपतिगुरुमतिभिरिति भवति सनियममभाणि ॥२१॥

यदीति । इह यदि यमयुगमितलघवः द्विचत्वारिंशत्संख्याः ह्रस्वाः स्युः । तथा गुणपरिमितगुरुकाणि त्रयो दीर्घाः स्युः। तर्हि असौ श्वा भवति । इति फणिपतिगुरुमतिभिः सनियमम् यथा तथा अभाणि । अत्र प्रथमतृतीयपादान्त्यवर्णयोरपि लघुत्वम् ॥ २१ ॥

उदुम्बरः उन्दुरुश्च ।

द्विगुरुजलधियुगलघुभिरिह नियमिततनुरनुभवति ।
फणिपतिरिति तत उन्दुरुः सुनियतकृतयति भवति ॥ २२ ॥

द्वीति । इह यदि द्विगुरुजलधियुगलघुभिः द्वाभ्याम् गुरुभ्याम् चतुश्चत्वारिंशल्लघुभिः च नियमिततनुः भवति । ततः स उन्दुरुः सुनि-यतकृतयति सुनियतम् यथा तथा कृता यतिः यस्मिन्कर्मणि तद्यथा तथा भवति । इति फणिपतिः अनुभवति । अत्र प्रथमपादान्त्यवर्णस्याऽपि लघुत्वम् ॥ २२ ॥

सर्पः ।

शशिगुरुरसयुगमितलघुभिरथ कृततनुरिह लसति ।
फणिगणपतिराधिकृतविरति सर्प इति समभिलषति ॥ २३ ॥

शशीति । अथ इह यदि शशिगुरुरसयुगमितलघुभिः एकेन गुरुणा षट्चत्वारिंशत्संख्यैः लघुभिश्च कृततनुः लसति । तर्हि असौ सर्पः अधि-कृतविरति अधिकृता विरतिः यस्मिन्कर्मणि तद्यथा तथा भवति । इति

फणिगणपतिः समभिलषति । अत्र प्रथमतृतीयपादान्त्यवर्णयोरपि लघुत्वमेव ॥ २३ ॥

शशधरम् ।

वसुजलनिधिपरिमितलघुभिरभिनियमिततनु भवति ।
शशधरमिदमिति नियतयति फणिगणपतिरनुभवति ॥ २४ ॥

वस्विति । वसुजलनिधिपरिमितलघुभिः अष्टचत्वारिंशत्संख्यैः लघुभिः अभिनियमिततनु अभिनियमिता तनुः यस्य तत्, नियतयति नियता यतिः यत्र तत्, इदम् शशधरम् भवति । इति फणिगणपतिः अनुभवति । अत्र प्रथमतृतीयपादान्त्ययो वर्णयोरपि लघुत्वमेव ॥ २४ ॥

॥ इति द्विपथ्याभेदाः ॥

॥ इति शम् ॥

---

वडवा वरवा नन्दकश्च ।

रविनगयतिरतिधृतिपरिमितमात्रा च ॥
पटहचरमदलवरवेत्यहिप उवाच ॥ १ ॥

रविनगेति । रविनगयतिः रविभिः द्वादशभिः नगैः सप्तभिः मात्राभिरिति यावत् पूर्वार्धोत्तरार्धयोरिति भावः यतिः यत्र सा, अतिधृतिपरिमितमात्रा अतिधृतिपरिमिताः एकोनविंशतिसंख्याः प्रत्यर्धमिति यावत् मात्राः यत्र सा, पटहचरमदलवरवा पटहः आदिगुरुस्त्रिकलगणः चरमे चरमो वा ययोः ते पटहचरमे एवम्भूते दले पूर्वार्धोत्तरार्धे यत्र सा पटहचरमदला सा चासौ वरवा नाम वृत्तम् भवतीति शेषः । इति अहिपः शेषः उवाच । अत्र पूर्वार्धोत्तरार्धान्त्यवर्णयोर्लघुत्वमेव । वडवानन्दकश्चेतिनामद्वयमन्यदप्यस्य ज्ञेयम् ॥ १ ॥

घत्ता ।

सप्तडगणलघुकत्रयनिर्मितमुभयदलं यदि नियतं सपदि ।
फणिनायकपिङ्गलपरिभणितं किल घत्तावृत्तमिदं द्विपदि ॥२॥

सप्तेति । यदि प्रत्येकम् सप्तडगणलघुकत्रयनिर्मितम् सप्तभिः डगणैः चतुष्कलगणैः लघुकत्रयेण त्रिभिः लघुभिश्च निर्मितम् रचितम् उभयदलम् नियतम् स्यात् । तर्हि इदम् घत्तावृत्तम् भवति । कीदृशम् । सपदि फणिनायकपिङ्गलपरिभणितम् । पुनः की० । द्विपदि द्वे पदे स्त अस्य तत् । किलेति निश्चये । अत्र पूर्वार्धोत्तरार्धान्त्यवर्णयोर्लघुत्वमेव ॥ २ ॥

घत्तानन्दम् ।

एकादशविरतिश्च सप्तयतिश्च ननु चेत्सा घत्ता भवति ।
वृत्तं घत्तानन्दमेतदमन्दमतिफणिपतिभणितं भवति ॥ ३ ॥

एकादशेति । चेत् सा घत्ता प्रतिदलम् एकादशविरतिः एकादशभिः मात्राभिरिति यावत् विरतिः यत्र एवम्भूता, च पुनः सप्तयतिः सप्तभिः मात्राभिः यतिः यत्र एवम्भूता भवति । एतत् वृत्तम् घत्तानन्दम् नाम भवति । कीदृशम् । अमन्दमतिफणिपतिभणितम् । ननु निश्चये । अत्राऽपि पूर्वोत्तरदलान्त्यवर्णयोर्लघुत्वमेव । अत्र इयान् विशेष, यदत्र गणनियमो नाऽस्ति, प्रत्यर्धम् एकत्रिंशन्मात्राः एव ॥ ३ ॥

शिखा ।

द्विगुणितमनुपरिमितलघुहिमकिरणपरिमितगुरुविरचितदला ।
अधिसहृदयहृदयमिह मुदमियमतिवितरति फणिपभणितशिखा ॥४॥

द्विगुणितेति । प्रत्येकम् द्विगुणितैः मनुमितैः अष्टाविंशतिसंख्यैः इति भाव, लघुभिः हिमकिरणपरिमितेन एकेनेति यावत् गुरुणा च विरचिते दलेयस्या, सा इयम् फणिपभणिता चाऽसौ शिखा इह अधिसहृदयम् सहृदयहृदये मुदम् अतिवितरति । केचित्तु अस्या उत्तरार्धे त्रिंशल्लघवः एको गुरु रिति वदन्ति । पिङ्गलसूत्रकारः अस्या विषमपादयोरष्टाविंशति लघवः एको गुरुः समपादयो, त्रिंशल्लघवः एको गुरुः इति वदन् पाद-चतुष्टयात्मकत्वमस्या निर्दिशति ॥ ४ ॥

चुलियाला ।

दोहादलचरमे भवेदमलं पञ्चकलं सकलं यदि ।
फणिगणनरपतिरिति वदति चुलियालावृत्तम्भवति सपदि ॥५॥

दोहेति । यदि दोहादलचरमे दोहावृत्तस्य दलयो, चरमे अन्ते सकलम् अमलम् पञ्चकलम् भवेत् पञ्च मात्राः स्यु, । तर्हि इदम् चुलि-यालावृत्तम्भवति । इति फणिगणनरपतिः सपदि वदति । अत्र पूर्वोत्तर-दलान्त्यवर्णयोर्लघुत्वम् ॥ ५ ॥

रुचिरा ।

डगणैः सप्तभिरेकेन गुरुणा चरमपरिगतेन दलम् ।
रुचिरं यदि रुचिरावृत्तमिदं फणिपतिना भणितं सकलम् ॥ ६ ॥

डगणैरिति । यदि सप्तभिः डगणैः चतुष्कलगणैः एकेन चरमपरि-गतेन अन्त्येन गुरुणा च उपलक्षितम् रुचिरम् दलम् स्यात् । तर्हि इदम् रुचिरावृत्तम् भवति । कीदृशम् । फणिपतिना भणितम् । पुनः की० सक-

लम् । केचित्तु यत्र उभयार्धयोः सप्तविंशतिर्लघवः एको गुरुश्चान्ते, सा रुचिरेति वदन्ति । पिङ्गलसूत्रकारस्तु अस्याः पूर्वार्धे सप्तविंशतिर्लघवः एको गुरुः उत्तरार्धे एकोनत्रिंशल्लघवः एको गुरुश्चेति वदति, चूलिकेति चास्या नाम निर्दिशति ॥ ६ ॥

गन्धानकम् ।

सप्तदशाक्षरनखमितकलविषमपदम् ।
अष्टादशवर्णं जिनमितकलमत्र समपदम् ॥
भवति ननु चेद्भुजगपतिशेषनिगदितम् ।
गन्धानकवृत्तमिदं वरकविजनमनोहितम् ॥ ७ ॥

सप्तेति । चेत् अत्र सप्तदशाक्षरनखमितकलविषमपदम् सप्तदश अक्षराणि यत्र तत् सप्तदशाक्षरम् तथा नखमिताः विंशतिसंख्याः कलाः मात्राः यत्र तत् नखमितकलम् सप्तदशाक्षरञ्च तन्नखमितकलञ्च तद्विषमञ्च तत्पदम् स्यात् । तथा अष्टादशवर्णम् अष्टादश वर्णाः यत्र तत् तथा जिनमिताः चतुर्विंशतिसंख्याः कलाः यत्र तत् जिनमितकलम् एवम्भूतम् समपदम् स्यात् । तर्हि इदम् गन्धानकवृत्तम् भवति । कीदृशम् । भुजगपतिशेषनिगदितम् । पुनः की० । वरकविजनमनोहितम् । ननु निश्चये ॥ ७ ॥

अतिशिखा ।

द्विगुणिततिथिपरिमितलघुकहिमकिरणपरिमितगुरुकविरचितदला ।
फणिगणनरपतिरिति परिभणति भवति खलु ललितपदततिरतिशिखा ॥ ८

द्विगुणितेति । द्विगुणिततिथिपरिमितलघुकहिमकिरणपरिमितगुरुकविरचितदला प्रत्येकम् द्विगुणितैः तिथिपरिमितैः त्रिंशत्संख्यैरिति यावत् लघुकैः तथा हिमकिरणपरिमितेन एकेन गुरुकेण विरचिते दले पूर्वार्धोत्तरार्धे यस्याः सा एवम्भूता अतिशिखा नाम वृत्तम् भवति । इति फणिगणनरपतिः परिभणति । कीदृशी अतिशिखा । ललितपदततिः ललिता पदानाम् सुप्तिङन्तानाम् ततिः यस्याम् सा । खलु निश्चये ॥ ८

ललितपदम् ।

षोडशकलकं यदि विषमपदम् । रविमितकल समपदम् ॥
वृत्तम्भवति तदा ललितपदम् । नाम्ना तल्ललितपदम् ॥९॥

षोडशेति । यदि षोडशकलकम् षोडश कलाः यत्र तत् एवम्भूतम् विषमपदं स्यात् । तथा रविमितकलम् रविमिताः द्वादश कलाः यत्र तत्

द्विदला ।

प्रथमं किल षट्कलमथ चरमे गुरुमध्ये वाणमिताः ।

डगणा यदि च स्युर्भवति तदा द्विदला फणिपतिभणिता ॥१३॥

प्रथममिति । यदि च प्रथमम् षट्कलम् टगण इति यावत् स्यात् । अथ चरमे दलद्वयान्ते गुरुः स्यात् । मध्ये षट्कलगणाऽन्त्यगुर्वोरन्तरे वाणमिताः पञ्चेति यावत् डगणाः चतुष्कलगणाः स्युः । तदा फणिपतिभणिता द्विदला नाम वृत्तम् भवति ॥ १३ ॥

मोहिनी ।

त्रयोदश कला भवेयुर्यदि चरणे विषमे ।

फणिपतिरिति निगदति भवति मोहिनी दशसमे ॥ १४ ॥

त्रयोदशेति । यदि विषमे चरणे प्रथमतृतीयपादयोरिति यावत् त्रयोदश कलाः त्रयोदश त्रयोदश मात्राः इति यावत् भवेयुः । तथा समे द्वितीयचतुर्थपादयोः दश कलाः दश दश मात्रा इति यावत् भवेयुः । तदा मोहिनी मोहिनीसंज्ञम् वृत्तम् भवति । इति फणिपतिः निगदति ॥ १४ ॥

खञ्जिका ।

द्विजवरवसुकसहितशशिभवनगरुडविर-

चितदलयुगकृततनुरतिरसिकरञ्जिका ।

अधिसहृदयमिह विलसति कृतनियति-

फणिगणनरपतिपरिभणितखञ्जिका ॥ १५ ॥

द्विजेति । इह द्विजवराणाम् लघुचतुष्टयात्मकगणानाम् वसुकेन अष्टकेन अष्टभिः चतुर्लघ्वात्मकगणैरिति यावत् सहिताभ्याम् शशिभवनगरुडाभ्याम् त्रिलघ्वात्मकत्रिकलमध्यलघुपञ्चकलात्मकगणाभ्याम् विरचितेन दलयोः पूर्वार्धोत्तरार्धयोः युगेन कृता तनु यस्या सा, अतिशयेन रसिकानाम् जनानामिति यावत् रञ्जिका रागजननी, कृता नियतिः नियमः यस्मिन्कर्मणि तद्यथा तथा यद्वा कृतानियतिर्यस्यो सा सा चासौ फणिगणनरपतिपरिभणिता शेषोक्ता सा चासौ खञ्जिका खञ्जिका नामकम् वृत्तमिति यावत् अधिसहृदयहृदयम् रसज्ञहृदयेषु इति भावः विलसति ॥ अयम्भावः यत्र पूर्वार्धोत्तरार्धयोः प्रत्येकम् अष्टौ लघुचतुष्टयात्मका गणाः तदन्ते एकम् भवनम् अर्थात् भावः त्रिकलो लघुत्रयात्मको गण इतियावत् तदन्ते मध्यलघुपञ्चकलात्मको गणश्चेत्, तर्हि तद्वृत्तम् खञ्जिका नाम भवति । केचित्तु यस्यां पूर्वार्धे त्रिंशल्लघवः एको गुरुः इत्ये

द्विदला ।

प्रथमं किल षट्कलमथ चरमे गुरुमध्ये वाणमिता : ।
डगणा यदि च स्युर्भवति तदा द्विदला फणिपतिभणिता ॥१३॥

प्रथममिति । यदि च प्रथमम् षट्कलम् टगण इति यावत् स्यात् । अथ चरमे दलद्वयान्ते गुरुः स्यात् । मध्ये षट्कलगणाऽन्त्यगुर्वोरन्तरे वाणमिताः पञ्चेति यावत् डगणाः चतुष्कलगणाः स्युः । तदा फणिपतिभणिता द्विदला नाम वृत्तम् भवति ॥ १३ ॥

मोहिनी ।

त्रयोदश कला भवेयुर्यदि चरणे विषमे ।
फणिपतिरिति निगदति भवति मोहिनी दशसमे ॥ १४ ॥

त्रयोदशेति । यदि विषमे चरणे प्रथमतृतीयपादयोरिति यावत् त्रयोदश कलाः त्रयोदश त्रयोदश मात्राः इति यावत् भवेयुः । तथा समे द्वितीयचतुर्थपादयोः दश कलाः दश दश मात्रा इति यावत् भवेयुः । तदा मोहिनी मोहिनीसंज्ञम् वृत्तम् भवति । इति फणिपतिः निगदति ॥ १४ ॥

खञ्जिका ।

द्विजवरवसुकसहितशशिभवनगरुडविर-
चितदलयुगकृततनुरतिरसिकरञ्जिका ।
अधिसहृदयमिह विलसति कृतनियति-
फणिगणनरपतिपरिभणितखञ्जिका ॥ १५ ॥

द्विजेति । इह द्विजवराणाम् लघुचतुष्टयात्मकगणानाम् वसुकेन अष्टकेन अष्टभिः चतुर्लघ्वात्मकगणैरिति यावत् सहिताभ्याम् शशिभवनगरुडाभ्याम् त्रिलघ्वात्मकत्रिकलमध्यलघुपञ्चकलात्मकगणाभ्याम् विरचितेन दलयोः पूर्वार्धोत्तरार्धयोः युगेन कृता तनु यस्याः सा, अतिशयेन रसिकानाम् जनानामिति यावत् रञ्जिका रागजननी, कृता नियतिः नियमः यस्मिन्कर्मणि तद्यथा तथा यद्वा कृतानियतिर्यस्यां सा सा चासौ फणिगणनरपतिपरिभणिता शेषोक्ता सा चासौ खञ्जिका खञ्जिका नामकम् वृत्तमिति यावत् अधिसहृदयहृदयम् रसज्ञहृदयेषु इति भावः विलसति ॥ अयम्भावः यत्र पूर्वार्धोत्तरार्धयोः प्रत्येकम् अष्टौ लघुचतुष्ट्यात्मका गणाः तदन्ते एकम् भवनम् अर्थात् भाव. त्रिकलो लघुत्रयात्मको गण इतियावत् तदन्ते मध्यलघुपञ्चकलात्मको गणश्चेत्, तर्हि तद्वृत्तम् खञ्जिका नाम भवति । केचित्तु यस्यां पूर्वार्धे त्रिंशल्लघवः एको गुरुः इत्ये-

नृगणम्–सुगणं च ।

ठद्वय ततश्चेद् डगणढगणम् ॥ यत्रदलयोस्तदा भवति नृगणम् ॥१९॥

ठद्वयमिति । चेत् यदि यत्र दलयो प्रतिदलमिति यावत् ठद्वयम् पञ्चकलगणद्वय भवति । तत डगणश्च ढगणश्च अनयो समाहार डगणढगणम् चतुष्कलत्रिकलगणौ इति यावत् भवति । तदा तर्हि तत् इति शेष नृगणम् नृगणनामकवृत्त भवति । सुगणमितिनामान्तरमस्य बोध्यम् ॥ १८ ॥

॥ इति मात्रार्द्धसमवृत्तानि ॥

---

# अथ विषममात्रावृत्तानि ।

कुण्डलिका ।

पूर्वं दोहानामकं वृत्तं स्यादथ यत्र ।
रोलाचरणचतुष्टय भवेदनन्तरमत्र ॥
भवेदनन्तरमत्र पदश्च समाहितयमकम् ।
वसुपदनियमितमूर्त्ति किल कुण्डलिकानामकम् ॥
वसुपदनियमितमूर्त्ति भवति फणिपतिमतिपूर्वम् ॥
पूर्वं रसिकमनाङ्गतयैतद्वृत्तमपूर्वम् ॥ १ ॥

पूर्वमिति । यत्र पूर्वम् पुर दोहानामकम् वृत्तम् स्यात् । अनन्तरम् तदन्ते रोलाचरणचतुष्टयम् सम्पूर्णं रोलावृत्तम् भवेत् । तदिति शेष एतत् अत्र छन्दश्शास्त्रे फणिपतिमतिपूर्वम् शेषबुद्धिपूर्वकम् कुण्डलिकानामकम् वृत्तम् भवति । कीदृशम् वृत्तम् । वसुभि अष्टभि· पदै पादै नियमिता बद्धा मूर्त्ति आकृतिर्यस्य तत् । पुन कीदृशम् । वसूनाम् धनानाम् देवानाम्वा पदम् आस्पदभूता नियमिता नितराम् यमिता यम इवाऽऽचरिता सजातयमा वा रिपुसंहारोपयोगिनीति यावत् मूर्त्ति· काठिन्यता यस्य तत् । पुन कीदृशम् । पूर्वम्, आदिभूतम् सर्ववृत्तेभ्य श्रेष्ठमिति यावत् । पुन कीदृशम् । रसिकमनोज्ञतया सहृदयहृदयाह्लादजनकत्वेनेति यावत् अपूर्वम् अनुपमम् । पूर्वमपि सदपूर्वमिति विरोधो व्यज्यते । तत्परिहारस्तु पूर्वोक्तार्थेन ॥ अथ च अत्र अस्मिन्वृत्ते पदम् दोहाया· चतुर्थचरणम् इति यावत् अनन्तरम् अभिन्नम् रोलाप्रथमपादस्यैकादशाक्षराभिन्नमिति यावत् भवेत । यथाऽत्रैव भवेदनन्तरमत्र । भवेदनन्तरमत्र पदश्चेति ।

वसुमात्रान्ते अष्टमात्रान्ते चरमे च यतिर्विश्रामो यत्र तत्। पुन कीदृशम्। यमकेन सहिता सुललिततरा वर्णाना ततिर्यत्र तत्। एवम् यदि यत्र लघु लघुवर्ण चरमे चरमो वा यधु तानि पञ्च पदानि त्रिल सन्ति। चेत् तदनु पञ्चपदान्ते सपदि अव्यवहितोत्तरभागे इति यावत् दोहावृत्तम्भवति। तर्हि तत् नवपदम् वृत्तम् भवति। इति कथयन्ति आचार्या इति शेष। खल्विति निश्चय। रङ्गति नामान्तरमस्य ज्ञेयम् ॥३॥

षट्पदम्।

आदौ रोला भवति दश शरदशगुणविरतिकौ।
पदावनन्तरमथाऽष्टाविंशतिमितमात्रिकौ॥
यर्हि भवेता तदनु वृत्त षट्पदनामकम्।
सुललितयमकितकायमतिमतिहितपरिणामकम्॥
कलितमृदुपदविततिगणनियतिकृतमिदमविकृतरति भवति।
पिङ्गलनामा किल धृतनिखिलकुण्डलीशकुल इति भणति ॥४॥

आदाविति। यर्हि आदौ रोलावृत्तम् सम्पूर्णमिति यावत् भवति। तदनु अनन्तरम् अव्यवहितम् यथा तथा दशशरदशगुणविरतिकौ दशमात्रान्ते शरमात्रान्ते पुन दशमात्रान्ते पुन मात्रात्रयान्ते विरतिर्ययो तौ अष्टाविंशतिमितमात्रिकौ अष्टाविंशतिमात्रात्मकौ पदौ चरणौ भवताम्। तर्हि इदम् षट्पदनामकम् वृत्तम् भवति। कीदृशम् वृत्तम्। सुललित यमकित सजातयमक काया यस्य तत्। पुन कीο। अतिमतिहितपरिणामकम् अतिशयित• मतिहित बुद्ध्यनुकूल• परिणाम यस्य तत्। बहुव्रीहौ कप्। यद्वा अतिमतिहितः परिणाम यस्य एवम्भूतम् कम् सुखम् यस्मात्तत्। पुन कीदृशम्। कलिता मृदुपदानाम् विततिर्येन तत्। पुन• कीο। गणनियतिकृतम् सगणनियमम्। यद्वा कलितमृदुपदवितत्यो ये गणास्तेषाम् नियत्या नियमेन कृतम् इत्येकमेव सर्वम्पदमस्तु। पुनः कीο। अविकृता रतिर्यस्मिन् येन वा तत्। इति धृतनिखिलकुण्डलीशकुल सकलसर्पकुलपालक पिङ्गलनामा आचार्यः इति शेष• भणति। इदम्वृत्त क्रमचरु षड्विंशतिमात्रैकपद द्वयावसानकरोलाचरणचतुष्टयात्मकमाप भवति ॥ ४ ॥

माला।

प्रथमदला मुखे माला । परदलमार्य्यासदृशं फणिनृपतेर्भाति सा माला ॥ ५ ॥

निधीति । निधिपरिमितैः नवभिः गणैः चतुर्लध्वात्मकचतुष्कलगणैः हिमकिरणपरिमितेन एकेन गरुडेन मध्यलघुपञ्चकलगणेन च गुरुयुगलेन द्वाभ्याम् गुरुभ्याम् च विरचितम् प्रथमदलम् पूर्वार्धं यस्याः सा, माम् लक्ष्माम् शोभामिति यावत् लाति तथाविधा, सा प्रसिद्धा माला मालानामवृत्तम् फणिनृपतेश्शेषस्य मुखे भाति । यदि परदलम् उत्तरार्धं आर्यासदृशम् आर्य्यार्धसमम् स्यात् । अयमाशयः । यस्य पूर्वार्धे नवचतुर्लध्वात्मकचतुष्कलगणाः तदनु एकः मध्यलघुपञ्चगणः तदनु द्वौ गुरू भवतः, उत्तरार्धस्त्वार्यार्धसमो भवति । तद्वृत्तम् मालानामकम्भवति ॥ ५ ॥

अतुला ॥

चरणचतुष्कं षोडशकलकम् । चरमे चैकं त्रिंशत्कलकम् ।
चरणं चेत्स्यान्नियमितयमकम् । तद्भणतितरामगणनियमकम् ॥
इति पिङ्गलनामा फणिगणपतिरतुलानामकवृत्तमिदम् ॥६॥

चरणेति । चेत् चरणचतुष्कम् पादचतुष्टयम् चत्वारः पादाः इति यावत् षोडशकलाः प्रत्येकमिति यावत् येषु तत् षोडशकलकम् स्यात् । च पुनः चरमे चरणचतुष्कान्ते एकं चरणम् त्रिंशत्कलकम् त्रिंशन्मात्रात्मकं स्यात् । तत् तर्हि इदम् अतुलानामकवृत्तम् भवेत् । इति पिङ्गलनामा फणिगणपतिः भणतितराम् । कीदृशम् वृत्तम् । नियमितं यमकम् पादान्ते इति यावत् यस्मिंस्तत् । पुनः कीदृशम् । न गणानाम् नियमो यत्र तत् ॥ ६ ॥

इदमत्राऽवधेयम् । इह येषुछन्दस्सुदलनिर्देशः । तेषुपादव्यवस्था नाऽस्ति । यथावस्वादिषु । अपि च एषु सर्वेषु समार्धसमविषममात्रावृत्तेषु पादान्त्ययमकाऽनुप्रासान्यतरमवश्यमेवाऽभ्युपेयमन्यथाऽरोचकत्वापत्तिरिति शम् ॥

॥ इति मात्राविषमवृत्तानि ॥

ाप्राप्तेष्वलकारान्तरेष्वारभ्यमाणस्तद्बाधकत्वेन तत्प्रतिभो-
केचित् । 'येन ध्वस्तमनोभवेन बलिजित्कायः पुरा
ादौ विविक्तोऽस्य विषय ईति निरवकाशत्वाभावान्नान्य-
न्यैः सह संकरः । दुर्बलत्वाद्वा बाध्यत्वमित्यन्ये । तत्र
प्राय. । इह प्राकरणिकाप्राकरणिकोभयरूपानेकार्थगोच-
तिष्ठितोऽयमलंकारः । तत्राद्यं प्रकारद्वयं तुल्ययोगिताया
ीये तु प्रकारे दीपक भवतीति तावदलंकारद्वयमिदं

---

वरूपस्यास्य 'निरवकाशा हि विधय सावकाशान्विधीन्बाधन्ते'
निरवकाशत्वात्सर्वालकारापवादकत्व केचिदाहुरित्याह—**एष चे-**
दित्युद्भटादय । केचित्पुनर्विषयवैविक्त्यस्य सभवान्निरवकाशत्वा-
र्वालकारापवादकत्वमभ्युपयन्तीत्याह—**येनेत्यादि** । अन्या इति
क्तोऽस्य विषय इति तुल्ययोगिताया अत्राभावात् । सा हि द्वयो-
प्रकृतयोर्वा विशेष्ययो पृथगुपादाने औपम्यस्य च गम्यत्वे भवति ।
। विशेष्ययो पृथगनुपादानात् औपम्यस्य च गम्यत्वाभावात् ।
। माधवेन तेन वा तस्य सादृश्य विवक्षितम् । एकेनैव शब्देन श्लिष्ट-
प्रतिपिपादयिषितत्वात् । अत्र हि परस्परनैरपेक्ष्यात्तयोरुमाधववा-
षेलाया माधववाक्यार्थपरामर्शमात्रमपि नास्तीति को नामौपम्यस्या-
देवमादावलकारान्तरविविक्तविषयत्वाच्छिष्टताया श्लेषोद्भुरकवरीभावेन
काश श्लेष । अन्यै सह सकर इति द्वयोरपि तुल्यकक्षताप्रतीते ।
ते । श्लेषस्य दुर्बलत्वादलकारान्तराणा च बलवत्त्वात् । एतच्च ग्रन्थ-
येष्यतीति नेहायस्तम् । तदेवमस्य सर्वालकारापवादकत्व न युक्तम् ।
इव बाध्यबाधकभावादिदर्शनात् । एतच्चालकारसारकृता सप्रपञ्चमु-
ाविस्तरभयात्तथा नोक्तम् । पूर्वेषामित्युद्भटादीनाम् । अविप्रतिपत्ति-

---

क २ 'च, प्राप्तेषु' ख ३ 'बाधकत्वात्' क. ४ 'इह' क.
क. ६ 'प्रतितिष्ठतो' क ७ 'एव विषय ' क. ८ 'दुर्लभत्वात्' क.

तृतीयेति । समस्तपादेषु चतुर्षु चरणेषु द्वितीयलः द्वितीयो लघुः तृतीययुक् तृतीयेन लघुनेति यावत् युज्यते इति तथाविध स्यात् । तर्हि दक्षिणान्तिकानाम वृत्तम् बोध्यम् । अयमाशयः । यत्र समस्तपादेषु प्रथमो वर्णो लघुरेव । द्वितीयो गुरुरेव । अन्यत्सर्वं वैतालीयवत् । सा दक्षिणान्तिका भवति ॥ ४ ॥

उदीच्यवृत्तिः ।

उदीच्यवृत्तिर्द्वितीयलो ।
युक्तोऽग्रेण भवेदयुग्मयोः ॥ ५ ॥

उदीच्येति । यदि द्वितीयलः अयुग्मयोः प्रथमतृतीयपादयोः अग्रेण तृतीयेन लघुनेति यावत् युक्त. स्यात् । तर्हि उदीच्यवृत्तिर्भवेत् । अयमाशयः । यत्र विषमपादयोरेव प्रथमो वर्णो लघु' द्वितीयो गुरुः । इतरत्सर्वम्वैतालीयवत् । तत् उदीच्यवृत्तिनामकम्वृत्तम्भवति ॥ ५ ॥

प्राच्यवृत्तिः ।

पूर्वेण युतोऽथ पञ्चमः । प्राच्यवृत्तिरुदितेति युग्मयोः ॥६॥

पूर्वेणेति । अथ यदि पञ्चम लघुरिति यावत् युग्मयो' द्वितीयचतुर्थ पादयोः पूर्वेण लघुनेति यावत् युतः स्यात् । तर्हि प्राच्यवृत्तिः इति उदिता । अयमाशयः । यत्र समपादयो' तुर्यपञ्चमौ लघू मिलित्वा गुरुः । इतरत्सर्वम्वैतालीयवत् । तत्प्राच्यवृत्तिनामवृत्तम् बोध्यम् ॥ ६ ॥

प्रवृत्तकम् ।

यदा समावोजयुग्मकौ । पूर्वयोर्भवति तत्प्रवृत्तकम् ॥ ७ ॥

यदेति । यदा ओजयुग्मकौ विषमसमौ पादाविति यावत् , पूर्वयोः उदीच्यवृत्तिप्राच्यवृत्त्योः समौ तुल्यौ भवत । तत् तर्हि प्रवृत्तकम् भवति । अयमाशयः । यत्र विषमपादौ उदीच्यवृत्तिलक्षणघटितौ समपादौ प्राच्यवृत्तिलक्षणघटितौ भवतः । तत् प्रवृत्तकं नाम वृत्तम्बोध्यम् ॥ ७ ॥

अपरान्तिका परान्तिका वा ।

अस्य युग्मरचिता परान्तिका ॥ ८ ॥

अस्येति । अस्य प्रवृत्तकस्य युग्मरचिता समपादलक्षणघटिता परान्तिका भवति । अयमाशयः । यत्र पादचतुष्टयम् प्राच्यवृत्तिलक्षणघटितम्भवति । तत् परान्तिकानाम वृत्तम् बोध्यम् । अपरान्तिकेतिनामान्तरमस्य बोध्यम् ॥ ८ ॥

चारुहासिनी ।

अयुग्मयुक चारुहासिनी ॥ ९ ॥

अयुग्मेति । अयुग्मयुक् प्रवृत्तकवृत्तविषमचरणलक्षणयुक्ता चारुहासिनी भवति । अयमाशय । यत्र पादचतुष्टयम् उदीच्यवृत्तिलक्षणघटितं भवति । तत् चारुहासिनीनाम वृत्तम् ज्ञेयम् । इत्यादयोऽन्यो अपि ज्ञेयाः ॥ ९ ॥ इति वैतालीयप्रकरणम् ।

इति मात्रावृत्तप्रकरणम् ।

---

# अथ वर्णवृत्तानि ।

आरभ्यैकाक्षरात्पादादेकैकाक्षरवर्धितैः ।
पादैर्भवन्ति छन्दांसि यावत् षड्विंशतिं गतम् ॥ १ ॥

आरभ्येति । एकाक्षरात् एकवर्णात्मकात्पादाच्चरणात् आरभ्य आरम्भ कृत्वेति यावत् एकैकाक्षरवर्द्धितैः एकेन एकेन च अक्षरेण क्रमशः वर्धितैः पादैः कृत्वा छन्दांसि यावत्षड्विंशति गतम् षड्विंशतिवर्णपर्य्यन्तमिति यावत् भवन्ति । तथा हि एकाक्षरपादम् १ द्व्यक्षरपादम् २ त्र्यक्षरपादम् ३ चतुरक्षरपादम् ४ पञ्चाक्षरपादम् ५ षडक्षरपादम् ६ सप्ताक्षरपादम् ७ अष्टाक्षरपादम् ८ नवाक्षरपादम् ९ दशाक्षरपादम् १० एकादशाक्षरपादम् ११ द्वादशाक्षरपादम् १२ त्रयोदशाक्षरपादम् १३ चतुर्दशाक्षरपादम् १४ पञ्चदशाक्षरपादम् १५ षोडशाक्षरपादम् १६ सप्तदशाक्षरपादम् १७ अष्टादशाक्षरपादम् १८ एकोनविंशत्यक्षरपादम् १९ विंशत्यक्षरपादम् २० एकविंशत्यक्षरपादम् २१ द्वाविंशत्यक्षरपादम् २२ त्रयोविंशत्यक्षरपादम् २३ चतुर्विंशत्यक्षरपादम् २४ पञ्चविंशत्यक्षरपादम् २५ षड्विंशत्यक्षरपादञ्च वृत्तम् भवति । तत्र एकाक्षरपादेवृत्ते प्रतिपादमेकमक्षरम्भवति । द्व्यक्षरपादे वृत्ते प्रतिपादमक्षरद्वयम् भवति । एवमेवाऽन्येऽपि सर्वे बोध्याः ॥ १ ॥

अथ एतेषां जातिनामान्याह—

उक्ताऽत्युक्ता तथा मध्या प्रतिष्ठाऽन्या सुपूर्विका ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥ २ ॥
त्रिष्टुप् च जगती चैव तथाऽतिजगती मता ।
शर्करी साऽतिपूर्वा स्यादष्ट्यत्यष्टी ततः स्मृते ॥ ३ ॥
धृतिश्चाऽतिधृतिश्चैव कृतिः प्रकृतिराकृतिः ।
विकृतिः संस्कृतिश्चैव तथाऽतिकृतिरुत्कृतिः ॥ ४ ॥

का प्रतिष्ठा, सुप्रतिष्ठेति यावत् ५ गायत्री ६ उष्णिक् ७ अनुष्टुप् ८ बृहती ९ पङ्क्ति १० त्रिष्टुप् ११ जगती १२ अतिजगती १३ शर्करी, क्वचित् शक्करीति नाम १४ सा शर्करी अतिपूर्वा स्यात् अतिशक्करीति यावत् १५ अष्टि १६ अत्यष्टि १७ धृति १८ अतिधृति १९ कृति २० प्रकृति २१ आकृति २२ विकृति २३ सस्कृति क्वचित् संकृतिरित्यपि २४ अतिकृति अभिकृतिरित्यपि नाम क्वचित् २५ उत्कृति २६ । तत्रैकाक्षरपादवृत्तस्य उक्ता नाम जाति, द्व्यक्षरपादवृत्तस्य अत्युक्तानामजाति, त्र्यक्षरपादवृत्तस्य मध्यानाम जाति, एवमेव क्रमेणाऽन्यान्यपि सर्वाणि जातिनामानि बोध्यानि ॥२॥३॥४॥

इत्युक्ताश्छन्दसां सञ्ज्ञाः क्रमशो वच्मि साम्प्रतम् ॥
तदग्रे चण्डवृष्ट्यादिदण्डकाः परिकीर्त्तिताः ।
वर्णषण्णवतिर्यावद्गणवृद्ध्या यथाक्रमम् ॥ ५ ॥

इति इति । इति छन्दसाम् वर्णसमवृत्तजातीनामिति यावत् सञ्ज्ञा नामानि उक्ता पिङ्गलादिभिरिति यावत् । साम्प्रतम् इदानीम् तद्भेदानिति शेष क्रमश वच्मि कथयामि । तदग्रे षड्विंशत्यक्षरपादवृत्तजातित ऊर्ध्वम् चण्डवृष्ट्यादिदण्डका चण्डवृष्टिप्रपातनामकप्रभृतिदण्डका यथाक्रमम् गणवृद्ध्या परिकीर्तिता । यावत् वर्णषण्णवतिर्भवतीति शेष षण्णवतिसंख्या वर्णा यावत् भवन्तीति भाव । तथा हि सप्तविंशत्यक्षरपादो दण्डकश्चण्डवृष्टिप्रपातनामको भवति, एवमन्येऽपि दण्डका बोध्या । दण्डकोऽपि समवृत्तान्त पाती तत्पादचतुष्टयस्य समलक्षणत्वात्

त्रिभिः षड्भिः पदैर्गाथा भवन्ति नियमोद्धताः ।
ऊर्ध्वं कक्षास्समाख्याता यावद्वर्णशतत्रयम् ॥ ६ ॥

त्रिभिरिति । त्रिभि षड्भि वा पदै पादै उपलक्षिता इति यावत् नियमोद्धता नियता गाथा भवन्ति । यथा इत्युक्ताश्छन्दसां संज्ञा इत्यारभ्य गणवृद्ध्या यथाक्रममित्यन्तैषैका षट्चरणात्मिका गाथा मूल एवोक्ता । एतदुपलक्षणम्, तत्श्लोकादन्यत् "महिषे सुराणामधिपे देवानाम्"मित्यादि निखिलवृत्तलक्षणानाक्रान्तिमपि वृत्तमपि गाथासञ्ज्ञ बोध्यम । परन्त्वेतत्समाधानमार्षवृत्तेष्वेव, न त्वनार्षवृत्तेषु अनवस्थापत्ते ॥ ५ ॥

ऊर्ध्वम् षण्णवत्यक्षरपाददण्डकजातेरिति यावत् यावद्वर्णशतत्रयम त्रिशतसंख्याक्षरपर्यन्तमिति यावत् कक्षा कक्षाख्यानि वृत्तानीति यावत् समाख्याता । तथा हि एकाक्षरपादादारभ्य शतत्रयसंख्या

दादीनां षड्विंशत्यक्षरपादान्तानां वृत्तानामुक्तादयो जातिसंज्ञाः पृथक् पृथक् उक्ता । सप्तविंशत्यक्षरपादादीनां षण्णवत्यक्षरपादान्तानां सर्वेषाम्वृत्तानां तु दण्डक इति एकैव जातिसंज्ञा प्रोक्ता । एवम् सप्तनवत्यक्षरपादादीनां त्रिशताक्षरपादपर्य्यन्तानाम्वृत्तानामपि कक्षा इति एकैव जातिसंज्ञा निरूपिता । इति सर्वमवदातम् ॥ ६ ॥

---

## ॥ अथ वर्णसमवृत्तानि ॥

तत्रैकाक्षरा वृत्तिः ।

१ उक्ता— भेदौ २

श्री

गश्रीः ऽ १ व्यक्तिः

स्नु—

लूस्नु । २ व्यक्तिः

इत्युक्ताप्रस्तारे यथाक्रमनामनी ॥

गिति । यत्र प्रतिपादमेको गुरु, तत् वृत्तम् श्रीनामकम्भवति ॥ १ ॥
लिति । यत्र प्रतिपादमेको लघु, तत् वृत्तम् स्नुनामकम्भवति ॥ २ ॥

इति एकाक्षरा वृत्तिः ।

---

## ॥ अथ द्व्यक्षरा वृत्तिः ॥

२ अत्युक्ता— भेदाः ४

स्त्री-कामा च—

गौ स्त्री ऽऽ १ व्यक्तिः

मही—

लगमही ।ऽ २ व्यक्तिः

चारु-सारु च—

ग्लचारु ऽ। ३ व्यक्तिः

मध्—

गाविति । यत्र प्रतिपादम् द्वौ गुरू, स्याताम्, तत् वृत्तम् स्त्रीनामकम् ज्ञेयम् । अस्य कामाऽपि नाम ज्ञेयम् ॥ १ ॥

लिगिति । यत्र प्रतिपादम् लघुगुरू, तत् वृत्तम् महीनामकम्बोध्यम् ॥२॥

गिलिति । यत्र प्रतिपादम् गुरुलघू , तत् वृत्तम् चारुनामकम्बोध्यम् । अस्य नामान्तरम् सारः ॥ ३ ॥

लिलिति । यत्र प्रतिपादम् लघुद्वयम् , तत् वृत्तम् मधुनामकम्बोध्यम् ॥४॥

॥ इति द्व्यक्षरा वृत्तिः ॥



## ॥ अथ त्र्यक्षरा वृत्तिः ॥

३ संख्या— भेदाः ८

नारी—

मो नारी SSS १ व्यक्तिः

बलाका शशी च—

यबलाका ISS २ व्यक्तिः । शशी यः इति पाठान्तरम् ।

मृगी-प्रिया च—

रोमृगी SIS ३ व्यक्तिः । रः प्रिया इत्यपि पाठः ।

रमण —

स्रमणः IIS ४ व्यक्तिः

पाञ्चालि—

त्पाञ्चालि SSI ५ व्यक्तिः

मृगेन्दु-नरेन्दु च—

ज्मृगेन्दु ISI ६ व्यक्तिः । ज्नरेन्दु इत्यपि पाठः ।

मन्दरि—

भ्मन्दरि SII ७ व्यक्तिः

हरणि-कमलि च—

न्हरणि III ८ व्यक्तिः । न्कमलि इत्यपि पाठः ।

इति सङ्ख्याप्रस्तारे यथाक्रमनामानि ॥

म इति । यत्र प्रतिपादम् एको मगणः, तत् वृत्तम् नारीनाम कथितं ॥ १ ॥

यिति । यत्र प्रतिपादम् एको यगण , तत् वृत्तम् बलाकानाम ज्ञेयम् । अस्य शशीति नामान्तरम् ॥ २ ॥

र इति । यत्र प्रतिपादम् एको रगणः, तत् वृत्तम् मृगीनाम बोध्यम् । अस्य प्रियेत्यपि नामाऽस्ति ॥ ३ ॥

सिति । यत्र प्रतिपादम् एकस्सगणः, तत् वृत्तम् रमणनाम भवति ॥४॥

तिति । यत्र प्रतिपादम् एकस्तगणः, तत् वृत्तम् पाञ्चालिनाम भवति ॥ ५ ॥

जिति । यत्र प्रतिपादम् एको जगणः, तत् वृत्तम् मृगेन्दुनाम भवति । इदं नरेन्दुसञ्ज्ञकमपि बोध्यम् ॥ ६ ॥

भिति । यत्र प्रतिपादम् एको भगणः, तत् वृत्तम् मन्दरिसंज्ञकम् ज्ञेयम् ॥ ७ ॥

निति । यत्र प्रतिपादम् एको नगणः, तत् वृत्तम् हरणिनामकम् बोध्यम् । अस्य कमलि इति सञ्ज्ञान्तरमास्ते ॥ ८ ॥

॥ इति त्र्यक्षरा वृत्तिः ॥

## ॥ अथ चतुरक्षरा वृत्तिः ॥

४ प्रतिष्ठा— भेदाः १६

कन्या-कीर्णा-तीर्णा च—

मगौ चेत्कन्या SSSS १ व्यक्ति

क्रीडा—

यगौ क्रीडा ISSS २ व्य०

नन्दः—

रोगु नन्दः SISS ३ व्य०

दोला रामा च—

सगि दोला IISS ४ व्य०

धरा—

तोगो धरा SSIS ५ व्य०

कला-नगानिका च—

जगौ कला ISIS ६ व्य०

वला—

भोगु वला SIIS ७ व्य०

सती-तरङ्गिणी च—

नगि सती IIIS ८ व्य०

रिति। यत्र प्रतिपादम् रगणलघू स्याताम्, तद्वृत्त यारिनाम ज्ञेयम् ॥ ११ ॥

सलीति। यत्र प्रतिपादम् सगणलघू स्तः, तद्वृत्त कारुनाम भवति। वीर नामान्तरमस्य बोध्यम् ॥ १२ ॥

तिति। यत्र प्रतिपादम् तगणलघू स्तः, तद्वृत्त तावुरिनाम भवति। कृष्णमपि नामाऽस्य ॥ १३ ॥

जलाविति। यत्र प्रतिपादम् जगणलघू स्त, तद्वृत्त ऋजुनाम भवति ॥ १४ ॥

भिति। यत्र प्रतिपादम् भगणलघू स्त, तद्वृत्तम् अनृजु नाम भवति। निशीत्यपि नामास्य बोध्यम् ॥ १५ ॥

नलीति। यत्र प्रतिपादम् नगणलघू स्त, तद्वृत्तम् पटुनामक भवति। हरीत्यप्यस्य नाम बोध्यम् ॥ १६ ॥

॥ इति चतुरक्षरा वृत्ति ॥

## ॥ अथ पञ्चाक्षरा वृत्तिः ॥

५ सुप्रतिष्ठा- भेदाः ३२

बाला-सम्मोहासार-सम्मोहा च-

मोगौ बाला स्यात् SSSSS १ व्य०

म इति। यत्र प्रतिपादम् मगण गुरुद्वयञ्च, तद्वृत्त बालानाम स्यात्। अस्य सम्मोहासार-सम्मोहा चेत्यपि नामद्वयम् बोध्यम् ॥ १ ॥

नाली-

यगौ गौ नाली ISSSS २ व्य०

यगाविति। अत्र प्रतिपादम् यगणो गुरुद्वयञ्च, तद्वृत्त नालीनामकं ज्ञेयम् ॥ २ ॥

सूरिणी

सूरिणी गौगः SISSS ३ व्य०

सूरिणीति। यत्र प्रतिपादम् रगणो गुरुद्वयञ्च, तद्वृत्तं सूरिणीनामक बोध्यम् ॥ ३ ॥

प्रगुणम्-चतुरंसा च-

प्रगुण स्तौ ग.

लोलम्—सहारी च—

लोल तगौ गः SSISS ५ व्य०

लोलमिति । यत्र प्रतिपादम् तगणो गुरुद्वयश्च, तद्वृत्त लोल नाम बोध्यम् । अस्य सहारीति नामान्तरम् ॥ ५ ॥

कण्ठी—

जगौ गु कण्ठी ISISS ६ व्य०

जगाविति । यत्र प्रतिपादम् जगणो गुरुद्वयं च, तद्वृत्तं कण्ठीनामकम् बोध्यम् ॥ ६ ॥

पङ्क्ति—अक्षरपङ्क्तिश्च-हसोऽपि—

भ्गौ गुरु पङ्क्तिः SIISS ७ व्य०

भिति । यत्र प्रतिपादम् भगणः गुरुद्वयश्च, तद्वृत्तं पङ्क्तिनाम बोध्यम् । अस्याऽक्षरपङ्क्तिर्हंसश्चेत्यपि नामद्वयम् ॥ ७ ॥

कललि—

कललि नोगौ IIISS ८ व्य०

कललीति । यत्र प्रतिपादम् नगणो गुरुद्वयश्च, तद्वृत्तम् कललिनामकं बोध्यम् ॥ ८ ॥

हासिका—

म्लौ गो हासिका SSSIS ९ व्य०

म्लिति । यत्र प्रतिपादम् मगणो लघुर्गुरुश्च, तद्वृत्तम् हासिकानाम बोध्यम् ॥ ९ ॥

नरी—

यलौ गो नरी ISSIS १० व्य०

येति । यत्र प्रतिपादम् यगणलघुगुरव , तद्वृत्तं नरीनामक बोध्यम् ॥ १० ॥

वैनसम्—

र्लौ गु वैनसम् SISIS ११ व्य०

रिति । यत्र प्रतिपादम् रगणलघुगुरव , तद्वृत्त वैनसनामकं ज्ञेयम् ॥ ११ ॥

प्रिया—

सलगैः प्रिया IISIS १२ व्य०

सेति । यत्र प्रतिपादम् सगणलघुगुरवः, तद्वृत्तम् प्रियानामकम्भवति ॥ १२ ॥

कणिका—

त्लौगः कणिका SSIIS १३ व्य०

तिति । यत्र प्रतिपादम् तगणलघुगुरवः, तद्वृत्तं कणिकानामकम् बोध्यम् ॥ १३ ॥

शिला-

जलौ गु शिला |S||S १४ व्य०

जेति। यत्र प्रतिपादम् जगणलघुगुरव ,तद्वृत्त शिलानामक बोध्यम्१४।

मण्डलम्-

भ्लूग्मण्डलमिदम् S|||S १५ व्य०

भिति। यत्र प्रतिपादम् भगणलघुगुरव , तद्वृत्त मण्डलनामकं ज्ञेयम् ॥ १५ ॥

सुलु -

नलगु सुलूः ||||S १६ व्य०

नेति। यत्र प्रतिपादम् नगणलघुगुरव , तद्वृत्त सुलूनामक बोध्यम्१६

कुम्भारि-

मो ग्लौ कुम्भारि SSSS| १७ व्य०

म इति। यत्र प्रतिपादम् मगणगुरुलघव , तद्वृत्त कुम्भारिनामक ज्ञेयम् ॥१७॥

भ्रू -

यगौ भ्रूलश्च |SSS| १८ व्य०

येति। यत्र प्रतिपादम् यगणगुरुलघव , तद्वृत्त भ्रूनामकम्भवति ॥१८॥

ह्री -

रो गलौ ह्रीश्च S|SS| १९ व्य०

र इति। यत्र प्रतिपादम् रगणगुरुलघव , तद्वृत्त ह्रीनामकम्भवति॥१९॥

पालि-

सगलाः पालि ||SS| २० व्य०

सेति। यत्र प्रतिपादम् सगणगुरुलघव , तद्वृत्त पालिनामकम्बोध्यम् ॥ २० ॥

किञ्जलिक-

किञ्जलिक तो ग्लच SS|S| २१ व्य०

किञ्जल्कीति। यत्र प्रतिपादम् तगणगुरुलघव , तद्वृत्त किञ्जलिक नाम भवति ॥ २१ ॥

वार्द्धि-

जगौल्च वार्द्धि |S|S| २२ व्य०

जेति। यत्र प्रतिपादम् जगणगुरुलघव, तद्वृत्तं वार्द्धिनामकम्बोध्यम् २२

विद्-

पांशु-

नगलि पांशु ।।।ऽ। २४ व्य०

नेति । यत्र प्रतिपादम् नगणगुरुलघव , तद्वृत्त पाशुनाम बोध्यम् ॥२४॥

मालीनम्-

मालीनं म्लघु ऽऽऽ।। २५ व्य०

मालीनमिति । यत्र प्रतिपादम् मगणो लघुद्वयश्च, तद्वृत्तं मालीनन्नाम स्यात् ॥ २५ ॥

वरीय -

वरीयो य्लालि ।ऽऽ।। २६ व्य०

वरीय इति । यत्र प्रतिपादम् यगणो लघुद्वयश्च, तद्वृत्तम्वरीयो नाम बोध्यम् ॥ २६ ॥

कल्कि-

कल्कि च र्लि ऽ।ऽ।। २७ व्य०

कल्कीति । यत्र प्रतिपादम् रगणो लघुद्वय च, तद्वृत्त कल्किनामक बोध्यम् ॥ २७ ॥

जतु-

सलल जतु ।।ऽ।। २८ व्य०

सेति । यत्र प्रतिपादम् सगणो लघुद्वयं च, तद्वृत्त जतुनाम भवति २८

छिद्रम्-

छिद्रं तललि ऽऽ।।। २९ व्य०

छिद्रमिति । यत्र प्रतिपादम् तगणो लघुद्वयश्च, तद्वृत्तम् छिद्रनामकं ज्ञेयम् ॥ २९ ॥

क्षुपम्-हरश्च-

क्षुपं जललि ।ऽ।।। ३० व्य०

क्षुपमिति । यत्र प्रतिपादम् जगणो लघुद्वयश्च, तद्वृत्तं क्षुपनामकम्भवति । हरमिति नामान्तरमस्य बोध्यम् ॥ ३० ॥

क्षुत्-विष्णु च-

क्षुद्भललघु ऽ।।।। ३१ व्य०

क्षुदिति । यत्र प्रतिपादम् भगणो लघुद्वयश्च, तद्वृत्तम् क्षुन्नामकम् ज्ञेयम् । अस्य विष्णु इत्यपि नाम ॥ ३१ ॥

हलि-जन्मि च-

नललि हलि ।।।।। ३२ व्य०

नेति । यत्र प्रतिपादम् नगणो लघुद्वयश्च, तद्वृत्त हलिनामक भवति । अस्य जन्मीति नामान्तरम् ज्ञेयम् ॥ ३२ ॥

इति सुप्रतिष्ठाप्रस्तारे यथाक्रमनामानि ॥

॥ इति पञ्चाक्षरा वृत्तिः ॥

---

# अथ षडक्षरा वृत्तिः ।

६ गायत्री भेदाः ६४

विद्युल्लेखा–शेषा च–

मौ स्याद्विद्युल्लेखा SSSSSS १

माविति । यत्र प्रतिपादम् द्वौ मगणौ, तद्वृत्तम् विद्युल्लेखानाम स्यात् । शेषेत्यप्यस्य नाम ॥ १ ॥

पन्था–

यमौ स्यात्पन्थाख्यम् ISSSSS २

येति । यत्र प्रतिपादम् यगणमगणौ, तद्वृत्त पन्थाख्यम् स्यात् ॥२॥

करेणु.–

स्यात्करेणू रो मः SISSSS ३

स्यादिति । यत्र प्रतिपादम् रगणमगणौ, तद्वृत्त करेणुनामकम् स्यात् ॥ ३ ॥

अभिख्या–

मगणो मोऽभिख्या IISSSS ४

मगण इति। यत्र प्रतिपादम् सगणमगणौ, तद्वृत्तम् अभिख्यानामकं भवति ॥ ४ ॥

वभ्रू.–

तोमो भवेद्वभ्रूः SSISSS ५

त इति । यत्र प्रतिपादम् तगणमगणौ, तद्वृत्तम् वभ्रूनामकं भवेत् ॥५॥

कञ्जा–

जमौ भवेत्कञ्जा ISISSS ६

जेति । यत्र प्रतिपादम् जगणमगणौ, तद्वृत्त कञ्जानाम भवेत् ॥६ ॥

सिन्धुरया–

सिन्धुरया भोमः SIISSS ७

सिन्धुरयेति । यत्र प्रतिपादम् भगणमगणौ, तद्वृत्त सिन्धुरयानाम ज्ञेयम् ॥ ७ ॥

गुणवती–

गुणवती नो मः IIISSS ८

गुणवतीति । यत्र प्रतिपादम् नगणमगणौ, तद्वृत्त गुणवतीनाम

तन्त्री–

मो यो यत्र तन्त्री SSSISS ९

म इति। यत्र प्रतिपादम् मगणयगणौ, तद्वृत्त तन्त्रीनामक भवति॥९॥

सोमराजी–शङ्खधारी च–

द्विया सोमराजी ISSISS १०

द्वियेति। यत्र प्रतिपादम् द्वौ यगणौ, तद्वृत्तं सोमराजी नाम भवति। शङ्खधारीति नामान्तरमस्य ज्ञेयम्॥ १०॥

पिकाली–

चेद्र्यौ पिकाली SISISS ११

चेदिति। चेत्प्रतिपादम् रगणयगणौ भवेताम्, तर्हि पिकालीनाम वृत्तं ज्ञेयम्॥ ११॥

कमनी–

कमनी सयौ स्यात् IISISS १२

कमनीति। यत्र प्रतिपादम् सगणयगणौ, तद्वृत्त कमनीनामक स्यात्१२

तनुमध्या–

त्यौ चेत्तनुमध्या SSIISS १३

त्याविति। चेत प्रतिपादम् तगणयगणौ स्याताम्, तर्हि तनुमध्या नाम वृत्तम् ज्ञेयम्॥ १३॥

अरजस्का–

जयावरजस्का ISIISS १४

जेति। यत्र प्रतिपादम् जगणयगणौ, तद्वृत्तम् अरजस्कासंज्ञकं स्यात्॥ १४॥

ईतिः–

भो यगण ईतिः SIIISS १५

भ इति। यत्र प्रतिपादम् भगणयगणौ, तद्वृत्तम् ईतिनामकं बोध्यम्॥ १५॥

शशिवदना–

शशिवदना न्यौ IIIISS १६

शशीति। यत्र प्रतिपादम् नगणयगणौ, तद्वृत्तम् शशिवदनानाम भवति॥ १६॥

अम्भोढा–

उक्ताऽम्भोढा मरौ SSSSIS १७

उक्तेति । यत्र प्रतिपादम् मगणरगणौ, सा प्रवोढा उक्ता ॥ १७ ॥

कच्छपी-

यरौ स्यात्कच्छपी ISSSIS १८

येति । यत्र प्रतिपादम् यगणरगणौ, तत् वृत्त कच्छपीनाम स्यात्॥१८

विजोहा-विमोहा च-

रौ विजोहा मता SISSIS १९

राविति । यत्र प्रतिपादम् द्वौ रगणौ, सा विजोहा नाम मता । विमोहे त्यपि नामाऽस्य बोध्यम् ॥ १९ ॥

मृदुकीला-

मृदुकीला सरौ IISSIS २०

मृदुकीलेति । यत्र प्रतिपादम् सगणरगणौ, तद्वृत्त मृदुकीलानामक बोध्यम् ॥ २० ॥

स्थाली-

स्थाली भवेत्तरौ SSISIS २१

स्थालीति । यत्र प्रतिपादम् तगणरगणौ, तत् वृत्तम् स्थालीनामक बोध्यम् ॥ २१ ॥

वलीमुखी-

वलीमुखी जरौ ISISIS २२

वलीमुखीति । यत्र प्रतिपादम् जगणरगणौ, तत् वृत्त वलीमुखीसञ्ज्ञकम्भवति ॥ २२ ॥

शुनकम्-

स्याच्छुनकम्भरौ SIISIS २३

स्यादिति । यत्र प्रतिपादम् भगणरगणौ, तद्वृत्तम् शुनकम् नाम स्यात् ॥ २३ ॥

निरसिका-

निरसिका नरौ IIISIS २४

निरसिकेति यत्र प्रतिपादम् नगणरगणौ, तत् वृत्त निरसिकानाम

मशगा—

ह स्यान्मशगा ।ऽऽ।।ऽ २६

येति । ।तिपादम् यगणसगणौ, तद्वृत्तं मशगाऽऽख्य स्यात् २६

कर्मदा—

व च रसौ ऽ।ऽ।।ऽ २७

कर्मदेति यत्र प्रतिपादम् रगणसगणौ, तद्वृत्तम् कर्मदानामक

बोध्यम् ॥

तिलका—

ौ तिलका ।।ऽ।।ऽ २८

सगणा । यत्र प्रतिपादम् द्वौ सगणौ, तद्वृत्तं तिलकानाम

बोध्यम् ॥

वसुमती—

त याद्वसुमती ऽऽ।।।ऽ २९

तिति । प्रतिपादम् तगणसगणौ, तद्वृत्तं वसुमतीनाम स्यात् २९

कुही—

दि जसौ ।ऽ।।।ऽ ३०

कुहीति दि प्रतिपादम् जगणसगणौ स्याताम्, तर्हि कुहीनामवृत्त

बोध्यम् ॥

सौरभि—

। च भसौ ऽ।।।।ऽ ३१

सौरभी यत्र प्रतिपादम् भगणसगणौ, तत् वृत्त सौरभिनाम

भवति ॥ ३

सरि—

नसगणौ ।।।।।ऽ ३२

सरीति त्र प्रतिपादम् नगणसगणौ, तद्वृत्तं सरिसञ्ज्ञक बोध्यम् ३२

साहूति—

स्यात्साहूति ऽऽऽऽऽ। ३३

म इति त्र प्रतिपादम् मगणतगणौ, तद्वृत्तं साहूतिनाम स्यात् ३३

विन्दु—

क्तं विन्दु ।ऽऽऽऽ। ३४

येति । प्रतिपादम् यगणतगणौ, तद्वृत्तम् विन्दुनामकम्

उक्तम् ॥ ३

मल्लिका

कास्तत्र ऽ।ऽऽऽ। ३५

मन्त्रिकेति । यत्र प्रतिपादम् रगणतगणौ, तद्वृत्तं मन्त्रिकानाम बोध्यम् ॥ ३५ ॥

दुण्ढि–

सतकारौ दुण्ढि ।।SSS। ३६

सेति । यत्र प्रतिपादम् सगणतगणौ, तद्वृत्त दुण्ढिनामकम्भवति ३६

मन्थानकम्–

मन्थानक तौ च SS।SS। ३७

मन्थानकमिति । यत्र प्रतिपादम् द्वौ तगणौ, तद्वृत्त मन्थानक नाम ज्ञेयम् ॥ ३७ ॥

क्षमापालि–

जतौ क्षमापालि ।S।SS। ३८

जेति । यत्र प्रतिपादम् जगणतगणौ, तद्वृत्त क्षमापालिनाम भवति३

राढि–

यत्र भतौ राढि S।।SS। ३९

यत्रेति । यत्र प्रतिपादम् भगणतगणौ, तद्वृत्तं राढिनामकम्बोध्यम् ३

अनिभृतम्–

अनिभृतं न्तौ च ।।।SS। ४०

अनिभृतमिति । यत्र प्रतिपादम् नगणतगणौ, तद्वृत्तम् अनिभृतन्नाम ज्ञेयम् ॥ ४० ॥

मङ्कुरम्–

मो जो मङ्कुरञ्च SSS।S। ४१

मइति । यत्र प्रतिपादम् मगणजगणौ, तद्वृत्तं मङ्कुरम् नाम बोध्यम् ॥ ४१ ॥

वृत्तहारि–

यजौ वृत्तहारि ।SS।S। ४२

येति । यत्र प्रतिपादम् यगणजगणौ, तद्वृत्तम् वृत्तहारि नाम बोध्यम्ः

आर्भवम्–

आर्भवं रजौ च S।S।S। ४३

आर्भवमिति । यत्र प्रतिपादम् रगणजगणौ, तद्वृत्तम् आर्भव नाः ज्ञेयम् ॥ ४३ ॥

मधुमारकम्–

मधुमारकं स्जि ।।S।S। ४४

मधुमारकमिति । यत्र प्रतिपादम् सगणजगणौ, तद्वृत्तम् मधुमा
क नाम स्यात् ॥ ४४ ॥

हाटकशालि-

त्जौ हाटकशालि SSIISI ४५

तिजि । यत्र प्रतिपादम् तगणजगणौ, तद्वृत्त हाटकशालिनामक-
भवति ॥ ४५ ॥

मालतिका-

ज्जि मालतिका च ISIISI ४६

ज्जिति । यत्र प्रतिपादम् द्वौ जगणौ, तद्वृत्तं मालतिकानाम बोध्यम्४६

पाकलि-

पाकलि भजौ च SIIISI ४७

पाकलीति । यत्र प्रतिपादम् भगणजगणौ, तद्वृत्तं पाकलिनामकं
बोध्यम् ॥ ४७ ॥

पुटमर्दि-

नजि पुटमर्दि IIIISI ४८

नेति । यत्र प्रतिपादम् नगणजगणौ, तद्वृत्तं पुटमर्दिनामक बोध्यम्४८

कंसरि-

मो भस्स्यात्कंसरि SSSSII४९

म इति । यत्र प्रतिपादम् मगणभगणौ, तद्वृत्तं कंसरिनामकं
स्यात् ॥ ४९ ॥

सोमश्रुति-

यभौ सोमश्रुति ISSSII ५०

येति । यत्र प्रतिपादम् यगणभगणौ, तद्वृत्त सोमश्रुतिनाम बोध्यम्५०

सोपधि-

स्याद्रभौ सोपधि SISSII ५१

स्यादिति । यत्र प्रतिपादम् रगणभगणौ, तद्वृत्त सोपधिसञ्ज्ञक
स्यात् ॥ ५१ ॥

शङ्खद्युति-

सभि शङ्खद्युति IISSII ५२

सेति । यत्र प्रतिपादम् सगणभगणौ, तद्वृत्त शङ्खद्युतिनाम बोध्यम्५

इन्धा-

इन्धा तभौ यदि SSISII ५३

इन्धेति । यदि प्रतिपादम् तगणभगणौ, तर्हि इन्धानाम वृत्तम्
बोध्यम् ॥ ५३ ॥

सावट्टु-

जभौ च सावट्टु ।ऽ।ऽ।। ५४

जेति । यत्र प्रतिपादम् जगणभगणौ, तद्वृत्तम् सावट्टुसञ्ज्ञक ज्ञेयम् ५४

नन्दि-

नन्दि च भद्वयि ऽ।।ऽ।। ५५

नन्दीति । यत्र प्रतिपादम् भगणद्वयम्, तद्वृत्तम् नन्दिनाम ज्ञेयम्५५

अयमितम्-

अयमितं नभि ।।।ऽ।। ५६

अयमितमिति । यत्र प्रतिपादम् नगणभगणौ, तद्वृत्तम् अयमितन्नाम स्यात् ॥ ५६ ॥

प्रोथा-

म्नौ प्रोथा भवति ऽऽऽ।।। ५७

मिति । यत्र प्रतिपादम् मगणनगणौ, तद्वृत्त प्रोथानाम भवति ५७

अर्ति-

यनावर्त्तिरिति ।ऽऽ।।। ५८

येति । यत्र प्रतिपादम् यगणनगणौ, तद्वृत्तम् "अर्तिः" इति नाम्ना प्रसिद्धम् ॥ ५८ ॥

प्रतरि-

स्याद्रनौ प्रतरि ऽ।ऽ।।। ५९

स्यादिति । यत्र प्रतिपादम् रगणनगणौ, तद्वृत्तम् प्रतरिनामकं स्यात् ॥ ५९ ॥

विससि-

सनवाद्विससि ।।ऽ।।। ६०

सेति । यत्र प्रतिपादम् सगणनगणौ, तद्वृत्तम् विससिनाम स्यात् ६०

अतिकलि-

तौ नस्त्वतिकलि ऽऽ।।।। ६१

त इति । यत्र प्रतिपादम् तगणनगणौ, तद्वृत्तम् तु अतिकलिनाम स्यात् ॥ ६१ ॥

सुदायि-

सुदायि च जनि ।ऽ।।।। ६२

सुदायीति । यत्र प्रतिपादम् जगणनगणौ, तद्वृत्तं सुदायिनाम स्यात् ६२

असति-

भ्नावदसनति ऽ।।।।। ६३

उपवलि-दमनकञ्च-

ननमुपवलि ।।।।।। ६४

नेति । यत्र प्रतिपादम् द्वौ नगणौ, तद्वृत्त उपवलिनाम भवति । दमनकमिति नामान्तरमस्य बोध्यम् ॥ ६४ ॥

इति गायत्रीप्रस्तारे यथाक्रमनामानि ॥

इति षडक्षरा वृत्ति ॥

---

# अथ सप्ताक्षरा वृत्तिः ।

७ उष्णिक् । भेदाः १२८ व्य०

शिप्रा—शीर्षा च-

शिप्रा मौ स्यातां गश्चेत् SSSSSSS १

शिप्रेति । यत्र प्रतिपादम् द्वौ मगणौ स्याताम् तदनु एको गुरुश्चेत, तर्हि तद्वृत्तम् शिप्रानामकं स्यात् । शीर्षेति नामान्तरमस्य बोध्यम् ॥१॥

प्रहाणः-

प्रहाणस्स्याद्यो मोगः ।SSSSSS २

प्रहाण इति । यत्र प्रतिपादम् यगणमगणौ स्याताम् तदनु एक गुरु स्स्यात्, तद्वृत्तम् प्रहाणनामकम्बोध्यम् ॥ २ ॥

सैरवी-

सैरवी स्याद्रो मो गः S।SSSSS ३

सैरवीति । यत्र प्रतिपादम् रगणमगणौ तदनु एको गुरु स्यात, तद्वृत्त सैरवीनामक ज्ञेयम् ॥ ३ ॥

शम्बूक-

समगाश्शम्बूकस्स्यात ।।SSSSS ४

सेति । यत्र प्रतिपादम् सगणमगणगुरव स्यु, तद्वृत्त शम्बूकनामकं स्यात ॥ ५ ॥

निम्नाशया-

निम्नाशया तो मो गः SS।SSSS ५

निम्नेति । यत्र प्रतिपादम् तगणमगणगुरव स्यु, तद्वृत्तं निम्नाशयानामकं ज्ञेयम् ॥ ५ ॥

सुमोहिता-

सुमोहिता जो मो ग ।S।SSSS ६

सुमोहितेति । यत्र प्रतिपादम् जगणमगणगुरवः, तद्वृत्तं सुमोहितानामकं स्यात् ॥ ६ ॥

अधारा–

यत्र भमौ गोऽधीरा ऽ।।ऽऽऽ ७

यत्रेति । यत्र प्रतिपादम् भगणमगणगुरवः, तद्वृत्तम् अधीरानामकं स्यात् ॥७॥

होला–

यदि नमौ गो होला ।।।ऽऽऽ ८

यदि इति । यदि प्रतिपादम् नगणमगणगुरवः स्युः, तर्हि होलानामकं वृत्तम्बोध्यम् ॥ ८ ॥

इभभ्रान्ता–

मो यो गुर्विभभ्रान्ता ऽऽऽ।ऽऽऽ ९

म इति । यत्र प्रतिपादम् मगणयगणगुरवः स्युः, तद्वृत्तम् इभभ्रान्तानामकं स्यात् ॥ ९ ॥

अभीकम्–

अभीकं यकारौ गः ।ऽऽ।ऽऽऽ १०

अभीकमिति । यत्र प्रतिपादम् द्वौ यगणौ तदनु एकः गुरुस्स्यात्, तद्वृत्तम् अभीकनामकं बोध्यम् ॥ १० ॥

अहिंसा–

रो यगावहिंसा स्यात् ऽ।ऽ।ऽऽऽ ११

र इति । यत्र प्रतिपादम् रगणयगणगुरवः स्युः, तद्वृत्तम् अहिंसानामकं स्यात् ॥ ११ ॥

रसधारि–

रसधारि सो यो गः ।।ऽ।ऽऽऽ १२

रसधारीति । यत्र प्रतिपादम् सगणयगणगुरवः, तद्वृत्तम् रसधारिनामकं ज्ञेयम् ॥ १२ ॥

वेधाः–

वेधा यदि तो यो गः ऽऽ।।ऽऽऽ १३

वेधा इति । यदि प्रतिपादम् तगणयगणगुरवः स्युः, तर्हि वेधा नाम वृत्तम् स्यात् ॥ १३ ॥

पद्या–

जयौगुरुचेत्पद्या ।ऽ।।ऽऽऽ १४

जेति । चेत् प्रतिपादम् जगणयगणगुरवः स्युः, तर्हि पद्यानामकं

किणपा–

यर्हिकिणपा भ्यौ गः  S||SSS १५

यर्हीति । यर्हि यदि प्रतिपादम् भगणयगणगुरवः, तर्हि किणपानामकं वृत्तम्बोध्यम् ॥ १५ ॥

सुरि–

सुरि यदि नो यो गः  |||SSS १६

सुरीति । यदि प्रतिपादम् नगणयगणगुरवः, तर्हि सुरिसञ्ज्ञक वृत्तम् बोध्यम् ॥ १६ ॥

किर्मीरम्–

स्यात्किर्मीरम्मरौ गः  SSSS|SS १७

स्यादिति । चेत्प्रतिपादम् मगणरगणगुरवः स्युः, तर्हि किर्मीरनामक वृत्तम् स्यात् ॥ १८ ॥

वयस्यः–

वयस्यश्चेद्यरौ गः  |SSS|SS १८

वयस्य इति । चेत् प्रतिपादम् यगणरगणगुरवः, तर्हि वयस्यनामक वृत्तम् ॥ १८ ॥

भूरिधामा–

भूरिधामाऽत्र रौ गः  S|SS|SS १९

भूरिधामेति । अत्र सप्तवर्णप्रस्तारे चेत् रगणद्वयमनुगुरुः स्यात्, तर्हि भूरिधामा नाम वृत्तम् ॥ १९ ॥

हंसमाला–

सरगा हंसमाला  ||SS|SS २०

सेति। चेत्प्रतिपादम् सगणरगणगुरवः, तर्हि हंसमाला नाम वृत्तम्२०

भीमार्जनम्–

भीमार्जनं तरौ गः  SS|S|SS २१

भीमार्जनमिति। यत्र प्रतिपादम् तगणरगणौ गुरुश्च, तद्वृत्तं भीमार्जन नाम ज्ञेयम् ॥ २२ ॥

पुरोहिता–

पुरोहिता जरौ गः  |S|S|SS २२

पुरोहितेति । चेत् प्रतिपादम् जगणरगणौ गुरुश्च, तर्हि पुरोहितानाम वृत्तम् ॥ २२ ॥

होडपदा–

होडपदा भरौ गः  S||S|SS २३

होडपदेति। चेत्प्रतिपादम् भगणरगणगुरव, तर्हि होडपदानाम वृत्तम्बोध्यम् ॥ २३ ॥

खरकरा–

खरकरा नरौ गः ||S|SS २४

खरेति। यत्र प्रतिपादम् नगणरगणगुरवस्स्यु, तद्वृत्त खरकरा नाम ज्ञेयम् ॥ २४ ॥

मदलेखा–

मसगाः स्यान्मदलेखा SSS||SS २५

म इति। चेत् प्रतिपादम् मगणसगणगुरवस्स्यु, तर्हि मदलेखानाम वृत्तं स्यात ॥ २५।

महनीया–

यसौ गो महनीया |SS||SS २६

यसाविति। यत्र प्रतिपादम यगणसगणगुरव स्यु, तद्वृत्तं महनीयानामक स्यात् ॥ २६ ॥

शरगीति–

रसमगौ शरगीतिः S|S||SS २७

र इति। यत्र प्रतिपादम् रगणसगणगुरव, तद्वृत्त शरगीतिनामक बोध्यम् ॥ २७ ॥

करभित्–

करभिद्यदि सौ गः ||S||SS २८

करेति। यदि प्रतिपादम द्वौ सगणौ ततश्चैको गुरु, तर्हि करभिन्नाम वृत्तम् ॥ २८ ॥

स्थूला–

स्थूला यदि तसौ गः SS|||SS २९

स्थूलेति। यदि प्रतिपादम् तगणसगणगुरव, तर्हि स्थूलानामक वृत्तम् २९

कुमारललिता

कुमारललिता जसगाः |S|||SS ३०

कुमारेति। यदि प्रतिपादम् जगणसगणगुरव, तर्हि कुमारललिता नाम वृत्तं स्यात् ॥ ३० ॥

द्रुति –

द्रुतिगिति नमौ गः ।।।।।SS ३२

द्रुतिगिति । चेत् प्रतिपादम् नगणसगणगुरव , तर्हि द्रुति इति नाम वृत्तम्बोध्यम् ॥ ३२ ॥

हिन्दीरम्–

हिन्दीरं स्यान्मस्तगौ SSSSIS ३३

हिन्दीरमिति । चेत् प्रतिपादम् मगणतगणगुरव , तर्हि हिन्दीरनामक वृत्त स्यात् ॥ ३३ ॥

ऊपिकम–

यतौ गस्स्यादूपिकम् ISSSIS ३४

यताविति । चेत् प्रतिपादम् यगणतगणगुरव , तर्हि ऊपिकम् नाम वृत्त स्यात् ॥ ३४ ॥

मृष्टपादा–

मृष्टपादा रस्तगौ SISSIS ३५

मृष्टेति । यत्र प्रतिपादम् रगणतगणगुरव , तद्वृत्तम्मृष्टपादानामक बोध्यम् ॥ ३५ ॥

मायाविनी–

सतगा मायाविनी IISSSIS ३६

सेति । चेत् प्रतिपादम् सगणतगणगुरव , तर्हि मायाविनी नाम वृत्त स्यात् ॥ ३६ ॥

राजराजो–

तौ राजराजो गुरु SSISSIS ३७

ताविति । चेत् तगणद्वयमनुगुरुरेक स्यात् , तर्हि राजराजो नाम वृत्तम्बोध्यम् ॥ ३७ ॥

कुठारिका–

कुठारिका जस्तगौ ISISSIS ३८

कुठारिकेति । चेत् प्रतिपादम् जगणतगणगुरव , तर्हि कुठारिका नाम वृत्तम् ॥ ३८ ॥

कल्पमुखी–

कल्पमुखा भस्तगौ SIISSIS ३९

कल्पेति । चेत प्रतिपादम् भगणतगणगुरव , तर्हि कल्पमुखी नाम वृत्त

IIISSIS ४०

परेति । यत्र प्रतिपादम् नगणतगणगुरव , तद्वृत्त परभृत नाम स्यात् ४२

महोन्मुखी–

मो जो गो महोन्मुखी SSSISIS ४१

म इति । चेत् प्रतिपादम् मगणजगणगुरव , तर्हि महोन्मुखी नाम वृत्तम् ॥ ४१ ॥

महोद्धता–

यजौ गो महोद्धता ISSISIS ४२

येति। यत्र प्रतिपादम् यगणजगणगुरव , तद्वृत्त महोद्धता नाम स्यात्॥

चामरम्–

चामर रजौ गुरु SISISIS ४३

चामरमिति । चेत् प्रतिपादम् रगणजगणगुरव , तर्हि चामर नाम वृत्तम् ॥ ४३ ॥

कठोद्धता–

सजगाः कठोद्धता IISISIS ४४

सेति । यत्र प्रतिपादम् सगणजगणगुरव , तद्वृत्तम् कठोद्धता नाम स्यात् ॥४४॥

पूर्णा–

पूर्णा यदि तो जगौ SSIISIS ४५

पूर्णेति । यदि प्रतिपादम् तगणजगणगुरव , तर्हि पूर्णानामक वृत्त ज्ञेयम् ॥ ४५ ॥

वह्निर्वलि–

वह्निर्वलि जौ गुरुः ISIISIS ४६

वह्निरिति । चेत् प्रतिपादम् द्वौ जगणौ तदनु एको गुरु , तर्हि तद्वृत्तं वह्निर्वलिनामक स्यात् ॥ ४६ ॥

कन्दरि–

कन्दरि भजौ गुरुः SIIISIS ४७

कन्दरीति चेत्प्रतिपादम भगणजगणगुरव , तर्हि उन्दरिनाम वृत्त स्यात्

पुरटि–

पुरटि नजौ गुरुः IIIISIS ४८

पुरटीति । चेत् प्रतिपादम् नगणजगणगुरव., तदा पुरटि नाम वृत्तम् ४८

कर्णिका–

केशवती–

यभौ गः केशवती ISSSIIS ५०

येति । यदि प्रतिपादम् यगणभगणगुरवः, तदा केशवती नाम वृत्तम् ॥५०॥

सौरकान्ता–

सौरकान्ता रभगाः SISSIIS ५१

सौरेति । यदि प्रतिपादम् रगणभगणगुरवः, तदा सौरकान्ता नाम वृत्तम् ॥ ५१ ॥

अधिकारी–

अधिकारी सभगाः IISSIIS ५२

अधीति । चेत् प्रतिपादम् सगणभगणगुरवः, तदा अधिकारी नाम वृत्तम् ॥ ५२ ॥

निर्वाधिका–

निर्वाधिका तभगाः SSISIIS ५३

निरिति । चेत्प्रतिपादम् तगणभगणगुरवः, तदा निर्वाधिका नाम वृत्तम्॥

महोधिका–

महोधिका जभगाः ISISIIS ५४

मह इति । चेत् प्रतिपादम् जगणभगणगुरवः, तर्हि महोधिका नाम वृत्तम् ॥ ५४ ॥

मौरलिकम्–

मौरलिकं भभगम् SIISIIS ५५

मौरलिकमिति । यत्र प्रतिपादम् द्वौ भगणौ तदनु एको गुरुश्च, तद्वृत्त मौरलिकं नाम स्यात् ॥ ५५ ॥

स्वनकरी–

स्वनकरी नभगाः IIISIIS ५६

स्वनेति । चेत्प्रतिपादम् नगणभगणगुरवः, तदा स्वनकरी नाम वृत्तम्५६

नवसरा–

मो नो गो नवसरा SSSIIIS ५७

म इति। चेत् प्रतिपादम् मगणनगणगुरव , तदा नवसरा नाम वृत्तम्५७

चिररुचिः–

यनौ गश्चिररुचिः ISSIIIS ५८

येति। चेत् प्रतिपादम् यगणनगणगुरवः, तदा चिररुचिनामक वृत्तम्५८

बहुलया–

रो नगौ बहुलया SISIIIS ५९

र इति। यत्र प्रतिपादम् रगणनगणगुरव , तद्वृत्त वहुलयानामक स्यात् ५९
यमनकम्–

सनगा यमनकम् ||S|||S ६०

सेति । चेत् प्रतिपादम् सगणनगणगुरवः, तदा यमनक नाम वृत्तम् ६०
हीरम्–

हीर यदि तनगाः SS||||S ६१

हीरमिति। यदि प्रतिपादम् तगणनगणगुरव , तदा हीरनामक वृत्तम् ६१
स्विदा–

स्विदा यदि जनगा |S||||S ६२

स्विदेति । यदि प्रतिपादम् जगणनगणगुरव , तदा स्विदानामक वृत्तम् ॥ ६२ ॥
उलपा–

भ्नौ यदि ग उलपा S|||||S ६३

भिति । यदि प्रतिपादम् भगणनगणगुरव , तदा उलपा नाम वृत्तम् ६३
मधुमती–

ननगु मधुमती ||||||S द्विनगु इत्यपि पाठः ६४

नेति। यदि प्रतिपादम नगणद्वयमनुगुरुरेक , तदा मधुमती नाम वृत्तम्
नीहारी–

नीहारी स्यान्मौ लश्च SSSSSS| ६५

नीहारीति । चेत्प्रतिपादम् मगणद्वय लघुश्च स्यात्, तदा नीहारी नाम वृत्तम् ॥ ६५ ॥

कसासारि–

यमौ लः कसासारि |SSSSS| ६६

येति । चेत् प्रतिपादम् यगणमगणलघव , तदा कसासारिनामक वृत्तम्॥
स्वर्विणी–

स्वर्विणी रो मो लश्च S|SSSS| ६७

स्वर्विणीति । चेत् प्रतिपादम् रगणमगणलघव , तदा स्वर्विणी नाम वृत्तम् ॥ ६७ ॥

गृहिणी–

गृहिणी सो मो लश्च ||SSSS| ६८

गृहिणीति। यत्र प्रतिपादम् सगणमगणलघवः, तद्वृत्तम् गृहिणी

त इति । चेत् प्रतिपादम् तगणमगणलघवः, तदा वह्निस्फुलिंगनाम वृत्तम् । शूरमिति नामान्तरमस्य ॥ ६९ ॥

श्रोणी—

जमौ लघुःश्रोणीह ।S।SSS। ७०

जेति । इह सप्तवर्णप्रस्तारे यत्र प्रतिपादम् जगणमगणलघवः, तद्वृत्तं श्रोणीनाम ज्ञेयम् ॥ ७० ॥

व्याहारि—

चेद् भमला व्याहारि S।।SSS। ७१

चेदिति । चेत् प्रतिपादम् भगणमगणलघवः, तदा व्याहारिनाम वृत्तम् ७१

किशलयम्—

किशलयं न्मौ लश्च ।।।SSS। ७२

किशलयमिति । चेत् प्रतिपादम् नगणमगणलघवः, तदा किशलयनाम वृत्तम् ॥ ७२ ॥

देवलम्—

मो यो देवलं लश्च SSS।SS। ७३

म इति । यत्र प्रतिपादम् मगणयगणलघवः, तद्वृत्त देवलनाम ॥७३॥

नर्दि—

यकारौ लघु नर्दि ।SS।SS। ७४

यकाराविति । चेत्प्रतिपादम् यगणद्वयं लघुश्च, तदा नर्दिनाम वृत्तम् ॥७४॥

अनासादि—

रो यलावनासादि S।S।SS। ७५

र इति । चेत् प्रतिपादम् रगणयगणलघवः, तदा अनासादिनाम वृत्तम् ॥ ७५ ॥

अलालापि—

सयला अलालापि ।।S।SS। ७६

सेति । यत्र प्रतिपादम् सगणयगणलघवः, तद्वृत्तम् अलालापिनाम ७६

गुञ्जा—

गुञ्जा तयला यर्हि SS।।SS। ७७

गुञ्जेति । यर्हि प्रतिपादम् तगणयगणलघवः, तर्हि गुञ्जानाम वृत्तम् ७७

ऋचा—

ऋचा जयला यत्र ।S।।SS। ७८

ऋचेति । यत्र प्रतिपादम् जगणयगणलघवः, तद्वृत्तम् ऋचानाम ७८

[illegible]—

नन्दशु भसौ लश्च SIIISSI ७९

[illegible]ति । यत्र प्रतिपादम् भगणयगणलघव, तद्वृत्तम् नन्द-[illegible] । ७९ ।

[illegible]—

अनु नयला यत्र IIIISSI ८०

[illegible] । यत्र प्रतिपादम् नगणयगणलघव, तद्वृत्तम् अनुनाम॥८०॥

[illegible]—

अम्मेथी म्रौ लघुश्च SSSSISI ८१

[illegible] । यत्र प्रतिपादम् मगणरगणलघव, तद्वृत्तम् अम्मेथी [illegible] । ८१ ।

[illegible]—

मयूरी यो रलौ च ISSSISI ८२

[illegible]ति । यत्र प्रतिपादम यगणरगणलघव., तद्वृत्त मयूरीनाम॥८२।

सामिका रौ लघुश्च SISSISI ८३

[illegible]ति । यत्र प्रतिपादम् रगणद्वयम् लघुश्च, तद्वृत्तम् सामि[illegible] । ८३ ।

[illegible]—

सरलाः प्रोञ्छिता च IISSISI ८४

[illegible]ति । यत्र प्रतिपादम् सगणरगणलघव, तद्वृत्तम् प्रोञ्छिता नाम८[illegible]

[illegible]—

वृन्दा तरौ लघुश्च SSISISI ८५

[illegible]ति । यत्र प्रतिपादम् नगणरगणलघव, तद्वृत्त वृन्दानाम

[illegible]—

प्रतर्दि ज्रौ रलौ च ISISISI ८६

[illegible]ति । यत्र प्रतिपादम् जगणरगणलघव, तद्वृत्तम् प्रतर्दि[illegible] । ८६ ।

मणिमुखी--

मणिमुखी नरौ लूच ॥।SIS। ८८

मणीति । यत्र प्रतिपादम् नगणरगणलघवः, तद्वृत्तम् मणिमुखीनाम८८

मौलिस्रक्--

मौलिस्रङ्मसलाश्च SSS।।S। ८९

मौलीति । यत्र प्रतिपादम् मगणसगणलघवः, तद्वृत्तं मौलिस्रङ्नाम ॥ ८९ ॥

परभानु—

यसौ लः परभानु ।SS।।S। ९०

येति । यत्र प्रतिपादम् यगणसगणलघवः तद्वृत्त परभानुनाम॥९०॥

मेथिका—

मेथिका रसलाश्च S।S।।S। ९१

मेथिका । यत्र प्रतिपादम् रगणसगणलघव., तद्वृत्तम् मेथिका नाम ॥ ९१ ॥

गोधि—

सगणौ लघु गोधि ।।S।।S। ९२

सगणाविति । यत्र प्रतिपादम् द्वौ सगणौ तदनु एको लघुश्चेत्, तर्हि गोधिनाम वृत्तम् ॥ ९२ ॥

सरलाङ्घ्रि--

तसौ लश्च सरलाङ्घ्रि SS।।।S। ९३

तिति । यत्र प्रतिपादम्-तगणसगणलघवः, तद्वृत्तम् सरलाङ्घ्रि नाम ॥ ९३ ॥

विरोहि—

जसौ लघु विरोहि ।S।।।S। ९४

जसाविति । यत्र प्रतिपादम् जगणसगणलघव., तद्वृत्तम् विरोहि नाम बोध्यम् ॥ ९४ ॥

वरजापि--

भसौ लघु वरजापि S।।।।S। ९५

भिति । यत्र प्रतिपादम् भगणसगणलघवः, तद्वृत्तम् वरजापि नाम ॥ ९५ ॥

अहरि—करहञ्च च—

अहरि नसलाश्च ।।।।।S। ९६

अहरीति । यत्र प्रतिपादम् नगणसगणलघवः तद्वृत्तम अहरिनाम-

कम् । अस्यैव करहन्त् इति नामान्तरम् ॥ ९६ ॥

सम्पाक —

सम्पाको मस्तो लघु SSSSSI। ९७

सम्पाक इति । यत्र प्रतिपादम् मगणतगणलघव , तद्वृत्तम् सम्पाकनामकम् ॥ ९७ ॥

पद्धरि—

यतौ लः स्यात्पद्धरि ISSSSI। ९८

येति । यत्र प्रतिपादम् यगणतगणलघव , तद्वृत्तम् पद्धरिनामकम् ॥ ९८ ॥

गुर्णिका—

गुर्णिका रस्तो लघु SISSSI। ९९

गुर्णिकेति । यत्र प्रतिपादम् रगणतगणलघव ,तद्वृत्त गुर्णिकानाम॥९९

काही—

सतला काही यदि IISSSI। १००

सेति । यदि प्रतिपादम् सगणतगणलघव , तदा काहीनाम वृत्तम्॥१००

कामोद्धता—

कामोद्धता तौ लघु SSISSI। १०१

कामोद्धतेति । यत्र प्रतिपादम् तगणद्वयमनु लघुरेक , तद्वृत्त कामोद्धतानाम ॥ १०१ ॥

खर्परि—

जतौ लघु खर्परि ISISSI। १०२

जेति । यत्र प्रतिपादम् जगणतगणलघव , तद्वृत्त खर्परिनाम ॥१०२

शन्तनु—लीला च—

शन्तनु भस्तो लघु SIISSI। १०३

शन्तन्विति । यत्र प्रतिपादम् भगणतगणलघव , तद्वृत्त शन्तनुनामकम् । लीलेति नामान्तरमस्य ॥ १०३ ॥

मुरजिका—

मुरजिका न्तौ लघु IIISSI। १०४

मुरजिकेति । यत्र प्रतिपादम् नगणतगणलघव , तद्वृत्तम् मुरजिकानाम ॥ १०४ ॥

कालम्बा—

कालम्बा भजौ लघु SSSISII १०५

उपोहा—

उपोहा यजौ लघु    ।SS।S।। १०६

उपोहेति । यत्र प्रतिपादम् यगणजगणलघव , तद्वृत्तम् उपोहानाम १०६

कार्पिका—

कार्पिका रजौ लघु    S।S।S।। १०७

कार्पिकेति । यत्र प्रतिपादम् रगणजगणलघव , तद्वृत्त कार्पिका नाम ॥ १०७ ॥

मुहुरा—

मुहुरा सजौ लघु    ।।S।S।। १०८

मुहुरेति । यत्र प्रतिपादम् सगणजगणलघव , तद्वृत्तम् मुहुरा-नाम ॥ १०८ ॥

दोषा—

दोषा तजला यदि    SS।।S।। १०९

दोषेति । यदि प्रतिपादम् तगणजगणलघव , तदा दोषानाम वृत्तम् ॥ १०९ ॥

उपोदरि—

उपोदरि जौ लघु    ।S।।S।। ११०

उपोदरीति । यत्र प्रतिपादम् जगणद्वय लघुश्च, तद्वृत्तम् उपोदरिनाम ॥ ११० ॥

जासरि—

जासरि भजौ लघु    S।।।S।। १११

जासरीति । यत्र प्रतिपादम् भगणजगणलघव , तद्वृत्तम् जासरिनाम ॥ १११ ॥

वासकि सवासनि च—

नजलघु वासकि    ।।।।S।। ११२

नेति । यत्र प्रतिपादम् नगणजगणलघव , तद्वृत्त वासकिनाम । सवासनीति नामान्तरमस्य बोध्यम् ॥ ११२ ॥

भूरिमधु—

मो भो लो भूरिमधु    SSSS।।। ११३

मेति । यत्र प्रतिपादम् मगणभगणलघव , तद्वृत्तम् भूरिमधु-नाम ॥ ११३ ॥

भूरिवसु—

यभौ लो भूरिवसु    ।SSS।।। ११४

येति । यत्र प्रतिपादम् यगणभगणलघव , तद्वृत्त भूरिवसुनाम॥११४॥

हर्षिणी—

हर्षिणी भौ लघु च SISSIII ११५

हर्षिणीति । यत्र प्रतिपादम् रगणभगणलघव , तद्वृत्त हर्षिणी नाम ॥ ११५ ॥

लोलतनु—

सभला लोलतनु IISSIII ११६

सेति । यत्र प्रतिपादम् सगणभगणलघव , तद्वृत्त लोलतनुनाम ११६

क्रोडान्तिकम्—

क्रोडान्तिकं तभालि SSISIII ११७

क्रोडेति । यत्र प्रतिपादम् तगणभगणलघव , तद्वृत्त क्रोडान्तिक नाम ॥ ११७ ॥

स्तरधि—

जभौ लघु स्तरधि ISISIII ११८

जेति । यत्र प्रतिपादम् जगणभगणलघव , तद्वृत्त स्तरधिनामकम् ॥ ११८ ॥

पौरसरि—

भौ लघु पौरसरि SIISIII ११९

भाविति । यत्र प्रतिपादम् भगणद्वयम् लघुश्च, तद्वृत्त पौरसरि नाम ॥ ११९ ॥

वीरवटु—

नभलि वीरवटु IIISIII १२०

नेति । यत्र प्रतिपादम् नगणभगणलघव , तद्वृत्तम् वीरवटुनामकम् ॥ १२० ॥

अमति—

मो नो लोऽमतिरिति SSSIIII १२१

म इति । यत्र प्रतिपादम् मगणनगणलघव , तद्वृत्तम् अमति -इति नाम्ना प्रसिद्धमिति यावत् ॥ १२१ ॥

यनो लोऽहतिरिति ISSIIII १२२

येति । यत्र प्रतिपादम् यगणनगणलघव , तद्वृत्तम् अहतिः

वरशशि—

रो नलौ वरशशि SISIIII १२३

र इति। यत्र प्रतिपादम् रगणनगणलघव, तद्वृत्त वरशशिनाम॥१२३॥

घनधरि—

मनला धनधरि IISIII १२४

सेति। यत्र प्रतिपादम् सगणनगणलघव, तद्वृत्तम् धनधरिनाम॥१२४॥

मुशकि—

तो नो लघु मुशकि SSIIIII १२५

त इति। यत्र प्रतिपादम् तगणनगणलघव, तद्वृत्त मुशकिसंज्ञकम् ज्ञेयम् ॥ १२५ ॥

कुरदि—

जनौ लघु कुरदि ISIIIII १२६

जेति। यत्र प्रतिपादम् जगणनगणलघव, तद्वृत्त कुरदिनाम॥१२६॥

कोशि—

कोशि भनलघु च SIIIIII १२७

कोशीति। यत्र प्रतिपादम् भगणनगणलघव, तद्वृत्तम् कोशिनाम१२७

अचटु—

अचटु ननलघु IIIIIII १२८

अचटूविति। यत्र प्रतिपादम् नगणद्वय लघुश्च, तद्वृत्तम् अचटु नाम ॥ १२८ ॥

इत्युष्णिक्प्रस्तारे यथाक्रमनामानि ।

॥ इति सप्ताक्षरा वृत्ति ॥



# अथाऽष्टाक्षरा वृत्तिः ।

८ अनुष्टुप् भेदा २५६

विद्युन्माला—

मो मो चेत्स्याद्विद्युन्माला SSSSSSSS १

माविति। चेत् प्रतिपादम् द्वौ मगणौ द्वौ गुरू च स्याताम्, तद्वृत्तम् विद्युन्मालानाम स्यात् ॥ १ ॥

भ्रमभार—

सभ्मागश्चानिर्भार:

येति । यत्र प्रतिपादम् सगणमगणौ गुरुद्वयञ्च, तद्वृत्तम् अभि-भीरो नाम स्यात् ॥ २ ॥

इन्द्रफला-इन्द्रवला च—

इन्द्रफला मा भो मो गौ ३ SIISSSSS ७

इन्द्रफलेति । यत्र प्रतिपादम् भगणमगणौ गुणद्वयञ्च, सा इन्द्रफला नाम वृत्तञ्चक्ति । इन्द्रवलेत्यपि नामास्याः ॥ ३ ॥

गोपावेदी—

नमगमा गोपावेदी ४ IIISSSSS ८

नेति । यत्र प्रतिपादम् नगणमगणौ गुरुद्वयञ्च, तद्वृत्त गोपावेदी नाम ॥ ४ ॥ ८ ॥

भूमधारी—

भवेद्भूमधारी यौ गौ ५ ISSISSSS १०

भवेदिति । यत्र प्रतिपादम् भगणद्वयम् गुरुद्वयञ्च, तद्वृत्तम्भूमधारी नाम भवेत् ॥ ५ ॥ १० ॥

मौल्मालिका—

मौल्मालिका रो यो गौ ६ SISISSSS ११

मौलीति । यत्र प्रतिपादम् रगणयगणौ गुरुद्वयञ्च, तदवृत्तम् मौल्मालिकानाम ॥ ६ ॥ ११ ॥

युगधारि—

युगधारि चेत्सो यो गौ ७ IISISSSS १२

युगेति । यत्र चेत प्रतिपादम् सगणयगणौ गुरुद्वयञ्च, तद्वृत्त युगधारिनाम ॥ ७ ॥ १२ ॥

विराजिकरा—

विराजिकरा जो यो गौ ८ ISIISSSS १४

यत्र प्रतिपादम् जगणयगणौ गुरुद्वयञ्च, तद्वृत्तं विराजिकरानाम ॥ ८ ॥ १४ ॥

वात्या—

भो यमणगौ म वात्या ९ SIISSSS [illegible]

कुलाधारी—शुद्धगा च—

कुलाधारी यरौ गौ स्यात् ११ ISSSISSS १८

कुलेति । यत्र प्रतिपादम् यगणरगणौ गुरुद्वयञ्च, तद्वृत्तं कुलाधारीनाम स्यात् । शुद्धगेत्यपि नामास्य ॥ ११ ॥

परिधारा—

परिधारा मरौ गौ स्यात् १२ IISSISSS २०

परीति । यत्र प्रतिपादम् सगणरगणौ गुरुद्वयञ्च, तद्वृत्तं परिधारा नाम स्यात् ॥ १२ ॥

यशस्करी—

यशस्करी जरौ गौ चेत् १३ ISISISSS २२

यश इति । चेत् प्रतिपादम् जगणरगणौ गुरुद्वयञ्च, तदा तद्वृत्तं यशस्करीनाम ॥ १३ ॥

कुररिका—

कुररिका नरौ गौ स्यात् १४ IIISISSS २४

कुररिकेति । यत्र प्रतिपादम् नगणरगणौ गुरुद्वयञ्च, तद्वृत्तं कुररिकानाम स्यात् ॥ १४ ॥

मनोला—

मनोला यसगा गश्चेत् १५ ISSIISSS २६

मन इति । चेत् प्रतिपादम् यगणसगणौ गुरुद्वयञ्च, तद्वृत्तम् मनोलानाम ॥ १५ ॥ २६ ॥

पञ्चशिखा-रमणीयशिखा च—

रमणीयशिखा सौ गौ १६ IISIISSS २८

रमणीयेति । यत्र प्रतिपादम् सगणद्वयं गुरुद्वयञ्च, तद्वृत्तं रमणीयशिखानाम । पञ्चशिखेत्यपि नामास्य ॥ १६ ॥ २८ ॥

भाङ्गी-

जसौ गुरुयुगं भाङ्गी १७ ISIIISSS

जेति । यत्र प्रतिपादम् जगणसगणौ गुरुद्वयञ्च, तद्वृत्तम्भाङ्गीनाम ॥ १७ ॥ ३० ॥

रुद्राली—

नसगगुरु रुद्राली १८ IIIIISSS ३२

नेति । यत्र प्रतिपादम् नगणसगणौ गुरुद्वयञ्च, तद्वृत्तं रुद्रालीनाम ॥ १८ ॥ ३२ ॥

पारान्तचारी—

यतौ गौ पारान्तचारी १९ ISSSISS ३४

यतीति। यत्र प्रतिपादम् यगणतगणौ द्वौ गुरू च, तद्वृत्तं पारान्तचारीति नाम्ना प्रसिद्धम् ॥ १९ ॥ ३४ ॥

कौचमारः—

सतगा गः कौचमारः २० IISSSISS ३६

सतीति। यत्र प्रतिपादम् सगणतगणौ द्वौ गुरू च, तद्वृत्तं कौचमारनामकम् ॥ २० ॥ ३६ ॥

वारिशाला-वितानञ्च—

वितानमुक्तं जतौ गौ २१ ISISSISS ३८

वितानमिति। यत्र प्रतिपादम् जगणतगणौ द्वौ गुरू च, तद्वृत्तं वितानानामकमुक्तम्। अस्य वारिशालेत्यपि नाम ॥ २१ ॥ ३८ ॥

वान्तभारः—

नतगगा वान्तभारः २२ IIISSISS ४०

नेति। यत्र प्रतिपादम् नगणतगणौ द्वौ गुरू च, तद्वृत्तं वान्तभारनामकम् ॥ २२ ॥ ४० ॥

दिग्गीशः—

सजगा गुरुर्दिग्गीशः २३ IISISISS ४४

सेति। यत्र प्रतिपादम् सगणजगणौ द्वौ गुरू च, तद्वृत्तं दिग्गीशनामकम् ॥ २३ ॥ ४४ ॥

कराली—

तौ गौ भवेतां कराली २४ SSISSISS ३७

ताविति। यत्र प्रतिपादम् द्वौ तगणौ द्वौ गुरू च भवेतां, तद्वृत्तं करालीनामकम् ॥ २४ ॥ ३७ ॥

सिंहलेखा—

र्जौ च गौ च सिंहलेखा २५ SISISISS ४३

र्जाविति। यत्र प्रतिपादम् रगणजगणौ द्वौ गुरू च, तद्वृत्तं सिंहलेखानाम ॥ २५ ॥ ४३ ॥

सारावनदा—

सारावनदा तजौ गौ २६ SSIISISS ४५

सारेति। यत्र प्रतिपादम् तगणजगणौ द्वौ गुरू च, तद्वृत्तं सारावनदा नाम ॥ २६ ॥ ४५ ॥

कृष्णगतिका—

कृष्णगतिका भजौ गौ २७ SIIISISS ४७

कृष्णेति । यत्र प्रतिपादम् भगणजगणौ द्वौ गुरू च, तद्वृत्तं कृष्णगतिकानाम ॥ २७ ॥ ४७ ॥

प्रतिसीरा—

मो भो गौ स्यात्प्रतिसीरा २८ ऽऽऽऽ।।ऽऽ ४९

म इति । यत्र प्रतिपादम् मगणभगणौ द्वौ गुरू च, तद्वृत्तं प्रतिसीराख्यम् ज्ञेयम् ॥ २८ ॥ ४९ ॥

अतिमोहा—

अतिमोहा सभगा गः २९ ।।ऽऽ।।ऽऽ ५२

अतीति । यत्र प्रतिपादम् सगणभगणौ गुरूद्वयंच, तद्वृत्तम् अतिमोहानाम ॥ २९ ॥ ५२ ॥

चतुरीहा—

जभौ गुरू चतुरीहा ३० ।ऽ।ऽ।।ऽऽ ५४

जेति । यत्र प्रतिपादम् जगणभगणौ गुरुद्वयी च, तद्वृत्त चतुरीहासंज्ञकम् ॥ ३० ॥ ५४ ॥

चित्रपदा—

चित्रपदा यदि भौ गौ ३१ ऽ।।ऽ।।ऽऽ ५५

चित्रेति । यदि प्रतिपादम् भगणद्वयं गुरुद्वयच, तर्हि चित्रपदानाम वृत्तम् ॥ ३१ ॥ ५५ ॥

वृतमुखी—

वृतमुखी नभगा गः ३२ ।।।ऽ।।ऽऽ ५६

वृतेति । यत्र प्रतिपादम् नगणभगणौ गुरुद्वयश्च, तद्वृत्तं वृतमुखीनाम ॥ ३२ ॥ ५६ ॥

हंसरुतम्—

म्नौ गौ हंसरुतमुक्तम् ३३ ऽऽऽ।।।ऽऽ ५७

मिति । यत्र प्रतिपादम् मगणनगणौ द्वौ गुरू च, तद्वृत्तं हंसरुतनामकम् उक्तम् ॥ ३३ ॥ ५७ ॥

सन्ध्या भवति तनौ गौ ३४ ऽऽ।।।।ऽऽ ६१

सन्ध्या—

सन्ध्येति । यत्र प्रतिपादम् तगणनगणौ गुरुद्वयंच, तद्वृत्तं सन्ध्यानामकं भवति ॥ ३४ ॥ ६१ ॥

तुङ्गा—

ननगगकृततुङ्गा ३५ ।।।।।।ऽऽ ६४

नेति । यत्र प्रतिपादम् नगणद्वयं गुरुद्वयंच, तद्वृत्तं तुङ्गानामकम ॥ ३५ ॥ ६४ ॥

विहावा—

विहावा यदा यौ लगौ ३६ ISSISSIS ७४

विहावेति । यदा प्रतिपादम् द्वौ यगणौ लघुगुरू च, तदा विहावा-नाम वृत्तम् ॥ ३६ ॥ ७४ ॥

हेमरूपम्—

हेमरूपं च रौ लगौ ३७ SISSISIS ८३

हेमेति । यत्र प्रतिपादम् रगणद्वय लघुगुरू च, तद्वृत्त हेमरूप नाम ॥ ३७ ॥ ८३ ॥

शल्लकप्लुतम्—

स्रलगाः शल्लकप्लुतम् ३८ IISSISIS ८४

स्रिति । यत्र प्रतिपादम् सगणरगणलघुगुरवः, तद्वृत्तं शल्लकप्लुतं नाम ॥ ३८ ॥ ८४ ॥

नाराचिका—

नाराचिका तरौ लगौ ३९ SSISISIS ८५

नाराचिकेति । यत्र प्रतिपादम् तगणरगणलघुगुरवः, तद्वृत्त नारा-चिका नाम ॥ ३९ ॥ ८५ ॥

प्रमाणिका नगस्वरूपिणी च—

प्रमाणिका जरौ लगौ ४० ISISISIS ८६

प्रमाणिकेति । यत्र प्रतिपादम् जगणरगणलघुगुरवः, तद्वृत्तं प्रमा-णिकानाम । नगस्वरूपिणीत्यपि नामाऽस्य बोध्यम् ॥ ४० ॥ ८६ ॥

उपलिनी कृतवती च—

उपलिनी नरौ लगौ ४१ IIISISIS ८८

उपेति । यत्र प्रतिपादम् नगणरगणलघुगुरवः, तद्वृत्तमुपलिनीनाम । कृतवतीत्यपि नामाऽस्य बोध्यम् ॥ ४१ ॥ ८८ ॥

कलिला करिला च—

कलिला यदि सौ लगौ ४२ IISIISIS ९२

कलिलेति । यदि प्रतिपादम् सगणद्वयम् अनु लघुगुरू, तर्हि तद्वृत्तं कलिलानामक । करिलेत्यपि नामास्य ॥ ४२ ॥ ९२ ॥

लसदसु कमलञ्च—

लसदसु नसौ लगौ ४३ IIIIISIS ९६

लसदिति । यदि प्रतिपादम् नगणसगणलघुगुरवः, तदा तद्वृत्तं लसदसुनाम । कमलमपि नामाऽस्य ॥ ४३ ॥ ९६ ॥

सरघा सस्तौ लघु गौ ४४ IISSSIIS १००

सरघा—

सरघेति । यत्र प्रतिपादम् सगणतगणलघुगुरवः, तद्वृत्त सरघा-नाम ॥ ४४ ॥ १०० ॥

माणवकं माणवकक्रीडञ्च—

भात्तलगाः माणवकम् ४६ SIISSIIS १०३

आदिति । यत्र प्रतिपादम् भगणनगणलघुगुरवः, तद्वृत्त माणवकं नाम । माणवकक्रीडमपि नामाऽस्य ॥ ४६ ॥ १०३ ॥

माण्डवकम्—

नतलगा माण्डवकम् ४७ IIISSIIS १०४

नेति । यत्र प्रतिपादम् नगणतगणलघुगुरवः, तद्वृत्तं माण्डवक नाम ॥ ४७ ॥ १०४ ॥

हठिनी—

मो जो लो गुरुर्हठिनी ४५ SSSISIIS १०५

म इति । यत्र प्रतिपादम् मगणजगणलघुगुरवः, तद्वृत्तं हठिनी नाम ॥ ४५ ॥ १०५ ॥

अद्धरा-उद्धरा च—

अद्धरा रजौ लघु गौ ४८ SISISIIS १०७

अद्धरेति । यत्र प्रतिपादम् रगणजगणलघुगुरवः, तद्वृत्तं अद्धराना-मकम् । उद्धरेत्यपिनामाऽस्य ॥ ४८ ॥ १०७ ॥

विद्या-उदया च—

विद्येह तजौ लघुगौ ४९ SSIISIIS १०९

विद्येति । इह यदि प्रतिपादम् तगणजगणलघुगुरवः, तद्वृत्त विद्यानाम । अस्योदयेत्यपि नाम ॥ ४९ ॥ १०९ ॥

अरालि—

अरालि च जौ लघुगौ ५० ISIISIIS ११०

अरालीति । यत्र प्रतिपादम् जगणद्वय लघुगुरू च, तद्वृत्तम् अरा-लिनाम ॥ ५० ॥ ११० ॥

अखनिः—

नजलघुगुर्वखनिः ५१ IIIISIIS ११२

नेनि । यत्र प्रतिपादम् नगणजगणलघुगुरवः, तद्वृत्तम् अखनिना-मकम् ॥ ५१ ॥ ११२ ॥

कुरुचरी—

गो भलौ ग' कुरुचरी ५२

र इति । यत्र प्रतिपादम् रगणभगणलघुगुरवः, तद्वृत्तं कुरुचरी नाम ॥ ५२ ॥ ११९ ॥

गजगतिः—

नभलगा गजगतिः ५३ IIISIIIS १२०

नेति । यत्र प्रतिपादम् नगणभगणलघुगुरवः, तद्वृत्तं गजगतिनामकम् ॥ ५३ ॥ १२० ॥

शिखिलिखिता—

म्नौ लगौ स्याच्छिखिलिखिता ५४ SSSIIIIS १२१

मिति । यत्र प्रतिपादम् मगणनगणलघुगुरवः, तद्वृत्तं शिखिलिखितानाम स्यात् ॥ ५४ ॥ १२१ ॥

ईडा ईला च—

ईडा यदि तनलगाः ५५ SSIIIIIS १२५

ईडेति । यदि प्रतिपादम् तगणनगणलघुगुरवः, तर्हि ईडानाम वृत्तम् ज्ञेयम् । ईलेत्यपि नाम, डलयोरैक्यादिति भावः ॥ ५५ ॥ १२५ ॥

अरि—

भ्नावरि भवति लगौ ५६ SIIIIIIS १२७

भिति । यत्र प्रतिपादम् भगणनगणलघुगुरवः, तद्वृत्तम् अरिनामककम्भवति ॥ ५६ ॥ १२७ ॥

हरिपदम्-हृतपदश्च—

ननलगु हरिपदम् ५७ IIIIIIIS १२८

नेति । यत्र प्रतिपादम् नगणद्वयं लघुगुरू च, तद्वृत्त हरिपद नाम । हृतपदमित्यन्यस्य नाम ॥ ५७ ॥ १२८ ॥

नागारि—

सयगा लघुर्नागारि ५८ IISISSSI १४०

सेति । यत्र प्रतिपादम् सगणयगणगुरुलघवः, तद्वृत्त नागारिनामकम् ॥ ५८ ॥ १४० ॥

लक्ष्मीः—

रौ गलौ यत्र लक्ष्मीश्च ५९ SISSISSI १४७

राविति । यत्र प्रतिपादम् रगणद्वयम् गुरुलघू च, तद्वृत्त लक्ष्मी-नाम ॥ ५९ ॥ १४७ ॥

वलीकेन्दु—

सरगा लौ वलीकेन्दु ६० IISSISSI १४८

सेति । यत्र प्रतिपादम् सगणरगणगुरुलघवः, तद्वृत्त वलीकेन्दुना-

अमानिका—

अमानिका जरौ ग्लौ च ६१ ।ऽ।ऽ।ऽऽ। १५०

अमानिकेति । यत्र प्रतिपादम् जगणरगणगुरुलघवः, तद्वृत्तम् अमानिकानाम ॥ ६१ ॥ १५० ॥

नखपदा—

नखपदा नरौ ग्लौ च ६२ ।।।ऽ।ऽऽ। १५२

नखेति । यत्र प्रतिपादम् नगणरगणगुरुलघवः, तद्वृत्तं नखपदा नाम ॥ ६२ ॥ १५२ ॥

हरित्—

हरिदिह नसौ ग्लौ च ६३ ।।।।।ऽऽ। १६०

हरिदिति । इह यत्र प्रतिपादम् नगणसगणगुरुलघव., तद्वृत्त हरिन्नामकम् ॥ ६३ ॥ १६० ॥

किष्कु—

तौ गो लघुश्चाऽपि किष्कु ६४ ऽऽ।ऽऽ।ऽ। १६५

ताविति । यत्र प्रतिपादम् तगणद्वयं गुरुलघू चाऽपि, तद्वृत्तं किष्कुनामकम् ॥ ६४ ॥ १६५ ॥

समानिका—मल्लिका च—

ग्लौ रजौ समानिका च६५ ऽ।ऽ।ऽ।ऽ। १७१

गिति । यत्र प्रतिपादम् रगणजगणगुरुलघव', तद्वृत्तं समानिका नाम । मल्लिकेत्यपि नामाऽस्य वृत्तस्य बोध्यम् ॥ ६५ ॥ १७१ ॥

अनृतनर्म—नृतनर्म च—

सभगा क्रो नृतनर्म ६६ ।।ऽऽ।।ऽ। १८०

सेति । यत्र प्रतिपदम् सगणभगणगुरुलघवः, तद्वृत्तम् अनृतनर्मनाम । नृतनमत्यपिनामाऽस्य बोध्यम् ॥ ६६ ॥ १८० ॥

अमरन्दि—

तो भो गलावमरन्दि ६७ ऽऽ।ऽ।।ऽ। १८१

त इति । यत्र प्रतिपादम् तगणभगणगुरुलघवः, तद्वृत्तम् अमरन्दिनाम ॥ ६७ ॥ १८१ ॥

कुलचारि—

जभौ गलौ कुलचारि ६८ ।ऽ।ऽ।।ऽ। १८२

जेति । यत्र प्रतिपादम् जगणभगणगुरुलघवः, तद्वृत्तं कुलचारिनामकम् ॥ ६८ ॥ १८२ ॥

करञ्जि—

करञ्जि जनगलाश्च ६९ ।ऽ।।।।ऽ। १९०

जरग्रविति । यत्र प्रतिपादम् जगणनगणगुरुलघवः, स्तद्वृत्त करञ्जि नाम ॥ ६६ ॥ १२० ॥

वृन्तम्—

सभला लौ वृन्तं यदि ७० ||SSSS|| १९६

सेति । यत्र प्रतिपादम् सगणमगणौ लघुद्वयश्च, तद्वृत्तं वृन्तनामकम् ॥ ७० ॥ १९६ ॥

शाखोटकि—

जमौ लघु शाखोटकि ७१ |S|SSS|| १९८

जेति । यत्र प्रतिपादम् जगणमगणौ लघुद्वयश्च, तद्वृत्तं शाखोटकिनामकम् ॥ ७१ ॥ १९८ ॥

पञ्जरि—

भो मगणो लौ पञ्जरि ७२ S||SSS|| १९९

भ इति । यत्र प्रतिपादम् भगणमगणौ लघुद्वयश्च, तद्वृत्तं पञ्जरिनामकम् ॥ ७२ ॥ १९९ ॥

अप्रीता प्रीता-अतिप्रीता-अलिप्रीता च—

नमललं प्रीता यदि ७३ |||SSS|| २००

नेति । यदि प्रतिपादम् नगणमगणौ लघुद्वयश्च, तदा प्रीतानाम वृत्तम् । अस्य वृत्तस्य अप्रीता-अतिप्रीता-अलिप्रीता चेति नामत्रयमन्यदपि बोद्धव्यम् ॥ ७३ ॥ २०० ॥

मन्थरि—

मो यो लौ भवेन्मन्थरि ७४ SSS|SS|| २०१

म इति । यत्र प्रतिपादम् मगणयगणौ लघुद्वयश्च, तद्वृत्तं मन्थरिनामकम् ॥ ७४ ॥ २०१ ॥

वातुलि—

यकारौ लघू वातुलि ७५ |SS|SS|| २०२

येति । यत्र प्रतिपादम् यगणद्वयं लघुद्वयञ्च, तद्वृत्तं वातुलिनामकम् ॥ ७५ ॥ २०२ ॥

भाषा-सम्भाषा-सम्भासा च—

यरौ भाषा लघू यदि ७६ |SSS|S|| २१०

यराविति । यदि प्रतिपादम् नगणरगणौ लघुद्वयश्च, तदा भाषानामवृत्तम् । सम्भाषा सम्भासो चेति नामद्वयमस्याऽन्यत् ॥ ७६ ॥ २१० ॥

पाकलि—

नरकलश्च पाकलि ७७ |||S|S|| २१६

नेति । यत्र प्रतिपादम् नगणरगणौ लघुद्वयञ्च, तद्वृत्त पाकलिनामकम् ॥ ७७ ॥ २१६ ॥

अमना—

अमना द्विसला लघु ७८ ||S||S|| २२०

अमना इति । यत्र प्रतिपादम् सगणद्वयं लघुद्वयञ्च, तद्वृत्तम् अमनानामकम् ॥ ७८ ॥ २२० ॥

आकतनु—

जतौ लघू आकतनु ७९ |S|SS||| २३०

जताविति । यत्र प्रतिपादम् जगणतगणौ लघुद्वयञ्च, तद्वृत्तम् आकतनुनामकम् ॥ ७९ ॥ २३० ॥

आखेटम्—

रजौ लघू आखेटमिति ८० S|S|S||| २३५

रिति । यत्र प्रतिपादम् रगणजगणौ लघुद्वयञ्च, तद्वृत्तम् आखेटमिति प्रसिद्धमिति शेषः ॥ ८० ॥ २३५ ॥

अतिजनि—

मो भो लौ स्यादतिजनि ८१ SSSS|||| २४१

म इति । यत्र प्रतिपादम् मगणभगणौ लघुद्वयञ्च, तद्वृत्तम् अतिजनिनाम स्यात् ॥ ८१ ॥ २४१ ॥

स्रुतमधु—

सभला लस्स्रुतमधु ८२ ||SS|||| २४४

सेति । यत्र प्रतिपादम् सगणभगणौ लघुद्वयञ्च, तद्वृत्तं स्रुतमधुनामकम् ॥ ८२ ॥ २४४ ॥

मरु—

जभौ लघू यदि मरु ८३ |S|S|||| २४६

जेति । यदि यत्र प्रतिपादम् जगणभगणौ लघुद्वयञ्च, तर्हि तद्वृत्तं मरुनामकम् ॥ ८४ ॥ २४६ ॥

चयनम्—

यनौ लौ चयनमिह ८४ |SS||||| २५०

येति । इह यत्र प्रतिपादम् यगणनगणौ लघुद्वयञ्च, तद्वृत्तम् चयननामकम् ॥ ८४ ॥ २५० ॥

कुशकम्—

रनौ लघू कुशकमिति ८५ S|S||||| २५१

रनाविति । यत्र प्रतिपादम् रगणनगणौ लघुद्वयञ्च, तद्वृत्त कुशकमिति प्रसिद्धम् ॥ ८५ ॥ २५१ ॥

निरुद्धम—

निरुद्धं मनलललघु ८६ ||S||||| २५२

निरुद्धमिति। यत्र प्रतिपादम् सगणनगणौ लघुद्वयञ्च तद्वृत्तं निरुद्धनामकम्। निरुद्धनामकमपीदं प्रसिद्धम् ॥ ८६ ॥ २५२ ॥

सिन्धुक—

सिन्धुक ननलकमिह ८७ SS|||||| २५३

सिन्धुगिति। इह यत्र प्रतिपादम् तगणनगणौ लघुद्वयञ्च, तद्वृत्तं सिन्धुकनाम स्यात् ॥ ८७ ॥ २५३ ॥

क्षर-क्षुरकम—

क्षरञ्च जनलललघु ८८ |S|||||| २५४

क्षरमिति। यत्र प्रतिपादम् जगणनगणौ लघुद्वयञ्च, तद्वृत्तं क्षरनामकम्। अस्य क्षुरमित्यपि नाम ॥ ८८ ॥ २५४ ॥

वेशि—वेषि च—

वेशि भनलललघु च ८९ S||||||| २५५

वेशीति। यत्र प्रतिपादम् भगणनगणौ लघुद्वयञ्च, तद्वृत्तं वेशिनामकम् वषीत्यपि नामास्य ॥ ८९ ॥ २५५ ॥

कृतयु-कृशयुश्च—

द्विनलकृतयुरिति ९० |||||||| २५६

द्वीति। यत्र प्रतिपादम् द्वौ नगणौ द्वौ लघू च, तद्वृत्तं कृतयुरितिनामकम। कृशयुरित्यपि नामास्य बोध्यम् ॥ ९० ॥ २५६ ॥

इत्यनुष्टुप्प्रस्तारे यथालब्धि नामानि नवतिः ॥ ९० ॥

---

# अथ नवाक्षरा वृत्तिः।

९ बृहती— भेदाः ५१२

रूपामाली—

यत्र स्यान्मौ मो रूपामाली १ SSSSSSSSS १

यत्रेति। यत्र प्रतिपादम् त्रयो मगणाः, तद्वृत्त रूपामालीनामकम् स्यात् १ ॥ १

मेघालोक —

भवेद्यो मौ चेन्मेघालोकः २ |SSSSSSSS २

भवेदिति। चेत् प्रतिपादम् यगणो मगणद्वयञ्च, तद्वृत्तं मेघालोकनामकम् भवेत् ॥ २ ॥ २ ॥

निरुद्रम्—

निरुद्रं सनललघु ८६ ||S||||| २५२

निरुद्रमिति । यत्र प्रतिपादम् सगणनगणौ लघुद्वयञ्च तद्वृत्तं निरुद्रनामकम् । निरुद्रनामकमपीदं प्रसिद्धम् ॥ ८६ ॥ २५२ ॥

सिन्धुक्—

सिन्धुक् तनलकमिह ८७ SS|||||| २५३

सिन्धुगिति । इह यत्र प्रतिपादम् तगणनगणौ लघुद्वयञ्च, तद्वृत्तं सिन्धुक्नाम स्यात् ॥ ८७ ॥ २५३ ॥

क्षरम् क्षुरञ्च—

क्षरञ्च जनललघु ८८ |S||||| २५४

क्षरमिति । यत्र प्रतिपादम् जगणनगणौ लघुद्वयञ्च, तद्वृत्तं क्षरनामकम् । अस्य क्षुरमित्यपि नाम ॥ ८८ ॥ २५४ ॥

वेशि—वेषि च—

वेशि भनललघु च ८९ S|||||| २५५

वेशीति । यत्र प्रतिपादम् भगणनगणौ लघुद्वयञ्च, तद्वृत्तं वेशिनामकम् वेषीत्यपि नामास्य ॥ ८९ ॥ २५५ ॥

कृतयुः कृशयुश्च—

द्विनलकृतयुरिति ९० |||||||| २५६

द्वीति । यत्र प्रतिपादम् द्वौ नगणौ द्वौ लघू च, तद्वृत्तं कृतयुरितिनामकम् । कृशयुरित्यपि नामास्य बोध्यम् ॥ ९० ॥ २५६ ॥

इत्यनुष्टुप्प्रस्तारे यथालब्धि नामानि नवतिः ॥ ९० ॥

---

# अथ नवाक्षरा वृत्तिः ।

९ बृहती— भेदाः ५१२

रूपामाली—

यत्र स्यान्मौ मो रूपामाली १ SSSSSSSSS १

यत्रेति । यत्र प्रतिपादम् त्रयो मगणाः, तद्वृत्तं रूपामालीनामकम् स्यात् ॥ १ ॥ १

मेघालोकः—

भवेद्यो मौ चेन्मेघालोकः २ |SSSSSSSS २

भवेदिति । चेत् प्रतिपादम् यगणो मगणद्वयञ्च, तद्वृत्तं मेघालोकनामकम् भवेत् ॥ २ ॥ २ ॥

मायासारी—

यदि नयमा मायासारी ३ ||||SSSSS १६

यदीति । यदि प्रतिपादम् नगणयगणमगणा·, तद्वृत्तम् मायासा·
ीनामकम् ॥ ३ ॥ १६ ॥

खेलाढ्यम्—

यत्र स्यान्मसमाः खेलाढ्यम् ४ SSS||SSSS २५

यत्रेति । यत्र मगणसगणमगणा प्रतिपादम् इति यावत्, तद्वृत्तं
ेलाढ्यं नाम ॥ ४ ॥ २५ ॥

उदरश्रि—उदरस्रक्—उदरास्रक् च—

उदरश्रि भवेत् सौ मश्चेत् ५ ||S||SSSS २८

उदरेति । चेत् प्रतिपादम् द्वौ सगणौ मगणश्चैकः, तद्वृत्तम् उदर
ानामकम्—अस्य उदरस्रक् उदरास्रगित्यपि नामद्वयम् बोध्यम्॥५॥२८॥

वैसारुः—वैसारञ्च—

वैसारुरिह चेत्तः सोमः ६ SS|||SSSS २९

वैसारुरिति । इह वृत्ते चेत् प्रतिपादम् तगणसगणमगणाः, तर्हि
सारुनामक तद्वृत्तं ज्ञेयम् । वैसारमिति नामान्तरमस्य ॥ ६ ॥ २९ ॥

निर्विन्ध्या—निर्वन्ध्या च—

भवन्ति जसमा निर्विन्ध्या ७ |S|||SSSS ३०

भवन्तीति । यत्र प्रतिपादम् जगणसगणमगणाः, तद्वृत्त निर्विन्ध्या·
मकम् । निर्वन्ध्येति नामान्तरमस्य ॥ ७ ॥ ३० ॥

र्मिष्ठा—किर्मिष्ठा च—

चेद्यदि भसमाः कार्मिष्ठा ८ S||||SSSS ३१

चेदिति । यदि प्रतिपादम् भगणसगणमगणाः स्युः, तर्हि तत् कर्मि·
नाम वृत्तं ज्ञेयम् । किर्मिष्ठेति नामान्तरमस्य ॥ ८ ॥ ३१ ॥

३० धृतहाला—

मो भो मश्चेद्धृतहाला स्यात् ९ SSSS||SSS ४९

म इति । चेद् यदि प्रतिपादम् मगणभगणमगणाः स्युः, तर्हि तद्वृत्त
हालानामकं स्यात् इदं वृत्त विलोमकाव्यानुकूलम् ॥ ९ ॥ ४६ ॥

लहम्—

कलहं यर्हि सभौ मस्स्यात् १० ||SS||SSS ५२

कलहमिति । यर्हि प्रतिपादम् सगणभगणमगणाः स्युः, तर्हि तद्वृत्तं

वि० अयनपताका—

चन्म्नाः ऽयनपताका स्यात्   ११   SSS|||SSS   ५७

चन्द्रेति । चेत् प्रतिपादम् मगणनगणयगणाः स्युः, तर्हि तद्वृत्तम् अयनपताकानामकं स्यात् । इदं वृत्तं विलोमकाव्यानुकूलम् ॥११॥ ५७ ॥

वि० रम्भा-

उक्ता तनमगणै रम्भा   १२   SS||||SSS   ६१

उक्तेति । यत्र प्रतिपादम् तगणनगणमगणाः, तद्वृत्तं रम्भानाम ज्ञेयम् इदं विलोमकाव्यानुकूलम् वृत्तम् ॥ १२ ॥ ६१ ॥

भुजगशिशुभृता-वृता-सृता—

भुजगशिशुभृता नौ मः   १३   ||||||SSS   ६४

भुजगेति । यदि प्रतिपादम् द्वौ नगणौ एको मगणश्च, तद्वृत्तं भुजगशिशुभृतानाम ज्ञेयम् । भुजगशिशुवृता भुजगशिशुसृता चेति नामान्तरमस्य ॥ १३ ॥ ६४ ॥

विशल्यम्—

विशल्यं यकारत्रयं स्यात्   १४   |SS|SS|SS   ७४

विशल्यमिति । यत्र प्रतिपादम् त्रयो यगणाः, तद्वृत्तं विशल्यं नाम स्यात् ॥ १४ ॥ ७४ ॥

बिम्बम्—

नसयगणसृष्टबिम्बम्   १५   |||||S|SS   ९६

नेति । यत्र प्रतिपादम् नगणसगणयगणाः, तद्वृत्तं बिम्बनामकं ज्ञेयम् ॥१५॥९६॥

अर्धक्षामा—

अर्धक्षामा स्यान्मतयाश्चेत्   १६   SSSSS||SS   ९७

अर्धेति । चेत् प्रतिपादम् मगणतगणयगणाः, तर्हि अर्धक्षामानाम वृत्तं स्यात् ॥ १६ ॥ ९७ ॥

सम्बुद्धिः—

इह संबुद्धिः सतयाश्चेत्   १७   ||SSS||SS   १००

इहेति । चेत् इह सगणतगणयगणा, तर्हि संबुद्धिनामकं वृत्तं ज्ञेयम्१००

वि० शम्बरधारी—

शम्बरधारी भतयाश्चेत्   १८   S||SS||SS   १०३

शम्बरेति । चेत् प्रतिपादम् भगणतगणयगणाः, तर्हि शम्बरधारी नाम वृत्तम् भवति । इदं वृत्तं विलोमकाव्यानुकूलम् ॥ १८ ॥ १०३ ॥

शरक्रीडा—

यदि नजयाः शरक्रीडा   १९   ||||S||SS   ११२

यदीति । यदि प्रतिपादं नगणजगणयगणाः स्युः, तर्हि तद्वृत्तं शरली-ढानामक स्यात् ॥ १९ ॥ ११२ ॥

कांसीकम्—

कांसीकं भवति मनौ यः  २०  SSSIIIISS  १२१

कांसीकमिति । यत्र प्रतिपादं मगणनगणयगणा॰, तद्वृत्त कासीकं नाम भवति ॥ २० ॥ १२१ ॥

सुगन्धिः—

सनया भवति सुगन्धिः  २१  IISIIIISS  १२४

सेति । यत्र प्रतिपादम् सगणनगणयगणाः, तद्वृत्त सुगन्धिनामकं भवति ॥ २१ ॥ १२४ ॥

कामा—

कामा भवति तनयाश्चेत्  २२  SSIIIIISS  १२५

कामेति । चेत् प्रतिपादम् तगणनगणयगणा॰, तर्हि तद्वृत्तं कामानामक भवति ॥ २२ ॥ १२५ ॥

वि॰ भौरिकं-महालक्ष्मिका च—

रत्रयं चेन्महालक्ष्मिका  २३  SISSISSIS  १४७

रेति । चेत् प्रतिपादम् त्रयो रगणाः, तर्हि महालक्ष्मिकानाम वृत्तं ज्ञेयम् । भौरिकमिति नामान्तरमस्य। इद वृत्तं विलोमकाव्यानुकूलम् ॥ २३ ॥ १४७ ॥

निभालिता—

सतरा उक्ता निभालिता  २४  IISSSISIS  १६४

सेति । यत्र प्रतिपादम् सगणतगणरगणाः, सा निभालिता उक्ता ॥ २४ ॥ १६४ ॥

भुजङ्गसंगता—

सजरैर्भुजङ्गसंगता  २५  IISISISIS  १७२

सेति । यत्र प्रतिपादं सगणजगणरगणाः, सा भुजङ्गसंगता ज्ञेया ॥ २५ ॥ १७२ ॥

रवोन्मुखी—

उक्ता तजरा रवोन्मुखी  २६  SSIISISIS  १७३

उक्तेति । यत्र प्रतिपाद नगणजगणरगणाः, सा रवोन्मुखो उक्ता ॥ २६ ॥ १७३ ॥

अवनिजा—

इतीत । यदि इह प्रतिपादं पूर्वं द्वौ जगणौ तत एको रगण, तर्हि अ
…नामं वृत्तम् ॥ २७ ॥ १७४ ॥

प्रवह्लिका—

भा जगणौ प्रवह्लिका  २८ SIIISISIS  १७५

… इति । यत्र प्रतिपादं भगणजगणरगणा , तत् प्रवह्लिकानाम वृत्त
…म् ॥ २८ ॥ १७५ ॥

हलोद्धता—

यदि नजरा हलोद्धता  २९ IIIISISIS  १७६

…ति । यदि प्रतिपादं नगणजगणरगणा , तर्हि हलोद्धतानाम
वृत्तम् ॥ २९ ॥ १७६ ॥

मधुमल्ली—

मधुमल्ली सभरा यदा  ३० IISSIISIS  १८०

मधि…ति । यदा प्रतिपादम् सगणभगणरगणा., तदा मधुमल्लीनाम वृ
त्तम् ॥ ३० ॥ १८० ॥

महेलिका—

महेलिका जभरा यदा  ३१ ISISIISIS  १८२

महेलिकेति । यदा प्रतिपादं जगणभगणरगणाः, तदा महेलिकाना
मकं वृत्तं ज्ञेयम् ॥ ३१ ॥ १८२ ॥

मदनोद्धुरा—

भौ रगणो मदनोद्धुरा  ३२ SIISIISIS  १८३

भाविति । यत्र प्रतिपादं द्वौ भगणौ एको रगण , तद्वृत्त मदनोद्धु
रानामकं ज्ञेयम् ॥ ३२ ॥ १८३ ॥

करशया—

करशया यदि नो भरौ  ३३ IIISIISIS  १८४

करशयेति । यदि प्रतिपादं नगणभगणरगणा , तर्हि करशयानाम वृत्त
भवति ॥ ३३ ॥ १८४ ॥

वि० भद्रिका—

रो नरौ भवति भद्रिका  ३४ SISIIISIS  १८७

र इति । यत्र प्रतिपादं रगणनगणरगणा , तद्वृत्त भद्रिकानामक
भवति । इद वृत्त विलोमकाव्यानुकूल ज्ञेयम् ॥ ३४ ॥ १८७ ॥

शशिकरी—

सनराश्शशिकरी भवेत्  ३५ IISIIISSI

स इति । यत्र प्रतिपादं सगणनगणरगणाः, तद्वृत्तं शशिकरीनामकं भवेत् ॥ ३५ ॥ १८८ ॥

वि० मणिमध्यं मणिबन्ध च—

स्यान्मणिमध्यं चेद्भमसाः ३६ S||SSS||S १९९

स्यादिति । चेत् प्रतिपाद भगणमगणसगणाः, तर्हि मणिमध्यं नाम वृत्तम् स्यात् । मणिबन्धमिति नामान्तरमस्य । इदं वृत्त विलोमकाव्यानुकूल ज्ञेयम् ॥ ३६ ॥ १९९ ॥

मुखला-सारङ्गिका च—

नयसगणाः स्यान्मुखला ३७ ||||SS||S २०८

नेति । यत्र प्रतिपादम् नगणयगणसगणाः, तद्वृत्तं मुखलानामकं स्यात् । सारङ्गिकेति नामान्तरमस्य ज्ञेयम् ॥ ३७ ॥ २०८ ॥

वि० निषधम्—

भ्रौ सगणो भवेन्निषधम् ३८ S||S|S||S २१५

भ्राविति । यत्र प्रतिपादम् भगणरगणसगणाः, तद्वृत्त निषधनामकं भवेत् । इद वृत्त विलोमकाव्यानुकूलम् ॥ ३८ ॥ २१५ ॥

अर्धकला—

सगणत्रयमर्धकला ३९ ||S||S||S २२०

सगणेति । यत्र प्रतिपाद त्रयस्सगणाः, तद्वृत्तम् अर्धकलानामकं स्यात् ॥ ३९ ॥ २२० ॥

रञ्जकम्—

रञ्जकमिह चेद्भससम् ४० S||||S||S २२३

रञ्जकमिति । चेत् इह प्रतिपादम् पूर्वमेको भगणः ततो द्वौ सगणौ, तर्हि रञ्जकं नाम वृत्तम् ॥ ४० ॥ २२३ ॥

वीरा-अवीरा-पापित्ता च—

उक्ता वीरा यदि मभसाः ४१ SSSS||||S २४१

उक्तेति । यदि प्रतिपाद मगणभगणसगणाः, तदा सा वीरा उक्ता । अवीरा पापित्ता चेति नामद्वयमन्यदपि अस्य वृत्तस्य ज्ञेयम् ॥ ४१ ॥ २४१ ॥

अनवीरा—

अनवीरा यदि सभसाः ४२ ||SS||||S २४४

अनवीरेति । यदि प्रतिपादं सगणभगणसगणाः, तदा अनवीरा-नाम वृत्तं स्यात् ॥ ४२ ॥ २४४ ॥

वि० प्रियतिलका—

...यत्र प्रतिपादं द्वौ भगणौ सगणश्चैकः, तद्वृत्तं प्रियतिल-
क...नामक...। इदं वृत्तं विलोमकाव्यानुकूलम् ॥ ४३ ॥ २४७ ॥

हलमुखी—

...नमाविह हलमुखी ४४ SISIIIIIS २५१

...। चेत् इह प्रतिपादं रगणनगणसगणाः, तर्हि हलमुखीनाम
वृत्तम् ॥ ४४ ॥ २५१ ॥

आकेकरम्—

आकेकरमिह तनसाः ४५ SSIIIIIIS २५३

आकेकरमिति । चेत् इह प्रतिपादं तगणनगणसगणाः, तर्हि आकेकर
नाम वृत्तम् ॥ ४५ ॥ २५३ ॥

धौनिकम्—

धौनिकमिह च भनसाः ४६ SIIIIIIIS २५५

धौनिकमिति । चेत् इह प्रतिपादं भगणनगणसगणाः, तर्हि धौनिकं
नाम वृत्तम् ॥ ४६ ॥ २५५ ॥

मदनकं रतिपदं च—

मदनकमिति ननसम् ४७ IIIIIIIIS २५६

मदनकमिति । यत्र प्रतिपादं नगणद्वयम् ततश्चैकस्सगणः, तद्वृत्तं
मदनकमिति ज्ञेयम् । रतिपदमिति नामान्तरमस्य ॥ ४७ ॥ २५६ ॥

वल्गा—

वल्गाभिधं तत्रयं यत्र ४८ SSISSISSI २९३

वल्गेति । यत्र प्रतिपादं त्रयः तगणाः, तद्वृत्तं वल्गाभिधं ज्ञेयम् ॥४८॥२९३॥

कीटमाला—

सजताश्च कीटमालाऽत्र ४९ IISISISSI ३००

स इति । चेत् अत्र प्रतिपादं सगणजगणतगणाः, तर्हि कीटमाला-
नामकं वृत्तम् ॥ ४९ ॥ ३०० ॥

मसृणकम्—

मसृणकमिति नौ तश्च ५० IIIIIISSI ३२०

मसृणकमिति । यत्र प्रतिपादं द्वौ नगणौ तत एकः तगणः, तद्वृत्तं
मसृणकम् इति ज्ञेयम् ॥ ५० ॥ ३२० ॥

लीला—

न्यजकृतलीलेति नाम ५१ IIIISSISI ३३६

न्यजकृतेति । यत्र प्रतिपादं नगणयगणजगणाः, तस्य वृत्तस्य लीला
इति नाम ज्ञेयम् ॥ ५१ ॥ ३३६ ॥

वारिधियानम्—

वारिधियानं भतजाश्च ५२ SIISSIISI ३५९

वारिधियानमिति । यत्र प्रतिपादं भगणतगणजगणाः, तद्वृत्तं वारिधियानं नाम ज्ञेयम् ॥ ५२ ॥ ३५९ ॥

तोमरम्—

इति तोमरं सजजं च ५३ IISISIISI ३६४

इतीति । यत्र प्रतिपादं एकः सगणः द्वौ जगणौ च, तद्वृत्त तोमरम् इति ज्ञेयम् ॥ ५३ ॥ ३६४ ॥

कुहू—

कुहू जगणत्रयमत्र ५४ ISIISIISI ३६६

कुह्विति । यदि अत्र प्रतिपादं त्रयः जगणाः, तर्हि कुहूनामकं वृत्तं बोध्यम् ॥ ५४ ॥ ३६६ ॥

कठिनास्थि-अहीरि च—

भ्नौ ज इह च कठिनास्थि ५५ SIIIIIISI ३८३

भ्नाविति । यदि इह प्रतिपादम् भगणनगणजगणाः, तर्हि कठिनास्थिनामकं वृत्तम् । अहीरि इति नामान्तरमस्य बोध्यम् ॥ ५५ ॥ ३८३ ॥

विकचवती—

विकचवती न्यौ भो यदि ५६ IIIISSSII ४००

विकचवतीति । यदि प्रतिपादं नगणयगणभगणाः, तर्हि विकचवतीनामकं वृत्तम् ॥ ५६ ॥ ४०० ॥

वन्दारुः—

वन्दारुर्मसभाश्चेदिह ५७ SSSIISSII ५०१

वन्दारुरिति । चेत् इह प्रतिपादं मगणसगणभगणाः, तर्हि वन्दारुनामकं वृत्तम् ॥ ५७ ॥ ४०१ ॥

दधि-उदधि च—

भत्रयमत्र किलोदधि ५८ SIISIISII ४३९

भत्रयमिति । चेत् अत्र प्रतिपादं त्रयो भगणाः, तर्हि उदधिनामकं वृत्तं किल ज्ञेयम् । दधि इति नामान्तरमस्य । दध्यर्धकलयोः प्रतिमानुलोमता ज्ञेया ॥ ५८ ॥ ४३९ ॥

स्फुटघटिता—

स्फुटघटिता न्यौ न इह ५९ IIIISSIII ४६४

स्फुटघटितेति । चेत् इह प्रतिपादम् नगणयगणनगणाः तर्हि स्फुट-

[illegible] –

त्रिनकृतचुलकमिति ६० ||||||||| ५१२

[illegible] । यत्र प्रतिपादं त्रयो नगणा, तद्वृत्त चुलकम् इति [illegible] ॥ ६ [illegible]१२॥

इति वृहतीप्रस्तारे यथाप्राप्तनामानि षष्टि ॥ ६० ॥

## अथ दशाक्षरा वृत्तिः ।

१० पङ्क्तिः भेदाः १०२४

पद्मावर्त —

यत्र स्युर्मो मा गः पद्मावर्त्तः १ SSSSSSSSSS १

[illegible] । यत्र प्रतिपाद त्रयो मगणा स्युः तदनु एको गुरु स्यात्, तद्वृत्त पद्मावर्त्तनामक बोध्यम् ॥ १ ॥ १ ॥

[illegible]—

यमौ मा गो यत्र स्याच्छेफाली २ ISSSSSSSSS २

[illegible] । यत्र प्रतिपाद पूर्वं यगण, ततो मगणद्वय, ततश्च गुरु [illegible] तद्वृत्त शफालीसञ्ज्ञक स्यात् ॥ २ ॥ २ ॥

[illegible]

यदा यौ मगौ स्याता धुम्राली ३ ISSISSSSSS १०

[illegible] । यदा प्रतिपाद द्वौ यगणौ ततो मगण गुरू स्याताम्, तदा धुम्रालीनामक वृत्त ज्ञेयम् ॥ ३ ॥ १० ॥

[illegible]—

सरमा गो यदा स्यान्नीरोहा ४ IISSISSSSS २०

[illegible] । यदा प्रतिपाद सगणरगणमगणगुरवः स्यु, तर्हि नीरोहाना[illegible] वृत्त स्यात् ॥ ४ ॥ २० ॥

[illegible]—

जसौ मगणगो वीरान्ता स्यात् ५ ISIIISSSSS ३०

[illegible] यत्र प्रतिपाद जगणसगणमगणगुरव, तद्वृत्त वीरा[illegible]नामक स्यात् ॥ ५ ॥ ३० ॥

निर्मेधा –

नतमगा यत्र मा निर्मेधा ६ IIISSISSSS ४०

[illegible] । यत्र प्रतिपाद नगणतगणमगणगुरव, सा निर्मेधा नाम [illegible] ॥ ६ ॥ ४० ॥

वि० मध्याधारः—

मो भो मो गो यदि मध्याधारः ७ SSSS।।SSSS ४९

म इति । यदि प्रतिपाद मगणभगणमगणगुरवः, तदा मध्याधारो नाम वृत्तम् । इदं विलोमकाव्यानुकूलम् वृत्तम् ॥ ७४९ ॥

वंशारोपी—

यभौ मो गो यदि वंशारोपी ८ ।SSS।।SSSS ५०

यभाविति । यदि प्रतिपादं यगणभगणमगणगुरवः, तर्हि वंशारोपी-नामकं वृत्तं स्यात् ॥ ८ ॥ ५० ॥

कूलम्—

वृत्तंतनमगसृष्टं कूलम् ९ SS।।।SSSS ६१

वृत्तमिति । यत्र प्रतिपादं तगणनगणमगणगुरवः, तद्वृत्तं कूलना-मकं स्यात् ॥ ९ ॥ ६१ ॥

बोधातुरा सकृद्बोधा च—

यमौ यो गो बोधातुरावृत्तम् १० ।SSSSS।SSS ६६

यमाविति । यत्र प्रतिपादं यगणमगणयगणगुरवः, तद्वृत्तं बोधातु-रानामकं ज्ञेयम् । सकृद्बोधा इति नामान्तरमस्य बोध्यम् ॥ १० ॥ ६६ ॥

सुराक्षी—

भवति सुराक्षी नयौ योगः ११ ।।।।SS।SSS ८०

भवतीति । यत्र प्रतिपादं नगणयगणयगणगुरवः, तद्वृत्तं सुराक्षी-नामकं भवति ॥ ११ ॥ ८० ॥

कलापान्तरिता—

कलापान्तरिता यसौ यो गः १२ ।SS।।S।SSS ९०

कलापान्तरितेति । यत्र प्रतिपाद यगणसगणयगणगुरवः, तद्वृत्तं कलापान्तरितानामक ज्ञेयम् ॥ १२ ॥ ९० ॥

द्वारवहा-भारवहा च—

रस्तयौ गो भारवहावृत्तम् १३ S।SSS।।SSS ९९

र इति । यत्र प्रतिपादं रगणतगणयगणगुरवः, तद्वृत्तं भारवहाना-मकं बोध्यम् । द्वारवहा इति नामान्तरमस्याऽस्ति ॥ १३ ॥ ९९ ॥

वेशाद्ध्च्छायः—

सतयागश्चेद्विशदच्छायः १४ ।।SSS।।SSS १००

सतया इति । चेत् प्रतिपादं सगणतगणयगणगुरवः स्युः, तर्हि वि-शदच्छायनामकं वृत्तम् बोध्यम् ॥ १०० ॥

इन्द्रः ऐन्द्री च—

यदा जगणौ यगुरू ऐन्द्री १५ ।S।।S।।SSS ११०

वज्रेन्द्रनामकं स्यात् । इन्द्र इति नामान्तरमस्य बोध्यम् ॥ १५ ॥ ११० ॥

१६ हीराङ्गी—

मौ नौ यो गुरुरिह हीराङ्गी    १६    SSS|||SSS    १२१

म इति । यदि इह प्रतिपादं मगणनगणयगणगुरव स्युः, तर्हि हीराङ्गीनामकं वृत्तं स्यात् । इदं वृत्तं विलोमकाव्यानुकूलम् ॥१६॥१२१॥

हेमहास वाला च—

रत्रयं गो यदा हेमहासः    १७    SS||S|SS|SS    १४७

रत्रयमिति । यदा प्रतिपादं त्रयो रगणाः एको गुरुश्च, तदा हेमहासनामकं वृत्तं स्यात् ॥ १७ ॥ १४७ ॥

मयूरसारिणी—

रौ जरौ मयूरसारिणी स्यात्    १८    S|S|S|S|SS    १७१

रजाविति । यत्र प्रतिपादं रगणजगणरगणगुरवः, तद्वृत्त मयूरसारिणीनामकं स्यात् ॥ १८ ॥ १७१ ॥

सुखेला—

सजरा गुरुर्यदा सुखेला    १९    ||S|S|S|SS    १७२

स जरा इति । यदा प्रतिपादं सगणजगणरगणगुरवः, तदा सुखेला नामक वृत्त स्यात् ॥ १९ ॥ १७२ ॥

नमेरु लाजवती च—

उक्तस्तजरा गुरुर्नमेरुः    २०    SS||S|S|SS    १७३

उक्त इति । यत्र प्रतिपादं तगणजगणरगणगुरवः, सः नमेरुः उक्तः । लाजवती इति नामान्तरमस्य बोध्यम् । लाजवतीशब्दघटितं लक्षणं यथा-

"स्याल्लाजवती तजौ रगौ चेत्"

अर्थस्तु स एव स्पष्ट. ॥ २० ॥ १७३ ॥

गणदेहा—

गणदेहा प्रोक्ता समसागः    २१    ||SSSS||SS    १९६

गणदेहेति । यत्र प्रतिपादं सगणमगणसगणगुरवः, सा गणदेहा नाम प्रोक्ता ॥ २१ ॥ १९६ ॥

चम्पकमाला-रुक्मवती-रूपवती च—

चम्पकमाला यत्र भमसगाः    २२    S||SSS||SS    १९९

चम्पकमालेति । यत्र प्रतिपादं भगणमगणसगणगुरवः, तद्वृत्त च चम्पकमालानामक ज्ञेयम् । अस्य वृत्तस्य रुक्मवती रूपवती चेति नामद्वयमन्यदपि ज्ञेयम् । तत्र रुक्मवती शब्दघटितलक्षणं यथा

"रुक्मवती सा यत्र भमसगाः"

रूपवतीशब्द घटितं लक्षणं यथा—

"रूपवती सा ––"

स्पष्टम् ॥ २२ ॥ १६९ ॥

नरगा—

यदि नयसा गो नरगा स्यात् २३ ।।।।ऽऽ।।ऽऽ २०८

यदीति । यदि प्रतिपादं नगणयगणसगणगुरव, तर्हि नरगानामक वृत्तं स्यात् ॥ २३ ॥ २०८ ॥

प्रसरा—

रामाश्वैः प्रसरामससंगः २४ ऽऽऽ।।ऽ।।ऽऽ २१७

रामाश्वैरिति । यत्र प्रतिपादं एको मगणः द्वौ सगणौ एको गुरुश्च, त्रिभिः सप्तभिश्च यतिः, तद्वृत्त प्रसरानामक स्यात् ॥ २४ ॥ २१७ ॥

केरम्—

स्याद्यदा रससंगुरुकेरम् २५ ऽ।ऽऽ।।ऽ।।ऽ २१९

स्यादिति । यदा प्रतिपादं रगणः द्वौ सगणौ एको गुरुश्च, तदा तद् वृत्तं केरं नाम स्यात् ॥ १५ ॥ २१६ ॥

उदितम्—

सगणत्रयगावुदितं स्यात् २६ ।।ऽ।।ऽ।।ऽऽ २२०

सगणेति । यदा प्रतिपाद त्रयः सगणाः एको गुरुश्च, तद्वृत्तं केर नाम स्यात् ॥ २६ ॥ २२० ॥

मत्ता—

ज्ञेया मत्ता मभसगसृष्टा २७ ऽऽऽऽ।।।।ऽऽ २४१

ज्ञेयेति । यत्र प्रतिपाद मगणभगणसगणगुरवः, सा मत्ता नाम ज्ञेया ॥ २७ ॥ २४१ ॥

बलधारी—

सभसा गो यदि बलधारी २८ ।।ऽऽ।।।।ऽऽ २४४

सभसा इति । यदि प्रतिपाद सगणभगणसगणगुरवः, तदा बलधारीनामवृत्तम् ॥ २८ ॥ २४४ ॥

अचलपङ्क्तिः—

रो नसौ गुरुरचलपङ्क्तिः २९ ऽ।ऽ।।।।।ऽऽ २५१

र इति । यत्र प्रतिपादं रगणनगणसगणगुरव', तद् अचलपङ्क्तिनामकं वृत्तम ॥ २६ ॥ २५२ ॥

असितधारा—

सनसा गुरुरसितधारा ३० ।।ऽ।।।।।ऽऽ २५२

सनसा इति । यत्र प्रतिपादम् सगणनगणसगणगुरवः, तत् असितधारा नामकं वृत्तम् ॥ ३० ॥ २५२ ॥

वि० उन्नालम्—

उन्नालमिह तनसगाःस्युः ३१ ऽऽ।।।।।।ऽऽ २५३

उन्नालमिति । चेत् इह प्रतिपादं तगणनगणसगणगुरवः स्युः तदा

निरन्तिकम्—

निरन्तिकमिह जनसागः　　३२　ISIIIIIISS　　२५४

निरेति । चेत् इह प्रतिपादं जगणनगणसगणगुरवः, तर्हि निरन्तिकं नाम वृत्तम् बोध्यम् ॥ ३२ ॥ २५४ ॥

उपधाय्या—

भौ नसगुरव उपधाय्या　　३३　SIIIIIISS　　२५५

भ इति । यत्र प्रतिपादं भगणनगणसगणगुरव, तद्वृत्तम् उपधाय्यानामकं स्यात् ॥ २५५ ॥

तनिमा—

ननसगमिह तनिमा स्यात्　　३४　IIIIIIISS　　२५६

ननसगमिति । चेत् इह प्रतिपादं द्वौ नगणौ ततः सगणगुरू स्याताम्, तद्वृत्तं तनिमनामकं स्यात् ॥ ३४ ॥ २५६ ॥

विशालान्तिकम्—

स्यात्त्रय गो विशालान्तिकम्　३५　SSISSISSIS　२९३

स्यादिति । यत्र प्रतिपादं त्रय तगणाः एको गुरुश्च, तद्वृत्तं विशालान्तिकनामकं स्यात् ॥ ३५ ॥ २९३ ॥

विशालप्रभम्—

जनौ तगौ चेद्विशालप्रभम्　　३६　ISISSISSIS　　२९४

जनाविति । चेत् प्रतिपादम् जगणतगणौ नगणगुरू च स्याताम्, तद्वृत्तं विशालप्रभ नाम ॥ ३६ ॥ २९४ ॥

चरपदम्—

चरपद नस्तकारौ गुरुः　　३७　IIISSISSIS　　२९६

चरपदमिति । यत्र प्रतिपादं नगणः द्वौ तगणौ गुरुश्च, तद्वृत्तं चरपद नाम बोध्यम् ॥ ३७ ॥ २९६ ॥

उपसंकुला—

उपसङ्कुला सजौ तो गुरुः　　३८　IISISISSIS　　३००

उपसंकुलेति । यत्र प्रतिपाद सगणजगणतगणगुरवः, तद्वृत्तम् उपसंकुलानामकं ज्ञेयम् ॥ ३८ ॥ ३०० ॥

खेटकम्—

चेद्भजतगा भवेत्खेटकम्　　३९　SIIISISSIS　　३०३

चेदिति । चेत् प्रतिपादं भगणजगणतगणगुरवः, तर्हि खेटकनामकं वृत्तं भवेत् ॥ ३९ ॥ ३०३ ॥

बर्हातुरा—

बर्हातुरा तभताश्चेद्गुरुः　　४०　SSISIISSIS　　३०९

[illegible]ति । चेत् प्रतिपादं [illegible]

मकं वृत्तं बोध्यम् ॥ ४० ॥ ३०६ ॥

नीराञ्जलिः—

नीराञ्जलिरिह तो नस्तगौ ४१ SS।।।।SS।S ३१७

नीराञ्जलिरिति । यदि इह प्रतिपादं तगणनगणतगणगुरवः, तर्हि नीराञ्जलिनामकं वृत्तमिदं बोध्यम् ॥ ४१ ॥ ३१७ ॥

वि० कर्णपालिका—

कर्णपालिका स्याद्रयौ जगौ ४२ S।S।SS।S।S ३३१

कर्णपालिकेति । यत्र प्रतिपाद रगणयगणजगणगुरवः, तद्वृत्त कर्णपालिकानामकं स्यात्। इद वृत्तम्विलोमकाव्यानुकूलमस्ति ॥४२॥३३१॥

सराविका—

जरौ जगौ भवेत्सराविका ४३ ।S।S।S।S।S ३४२

जराविति । यत्र प्रतिपादं जगणरगणजगणगुरवः, तद्वृत्तं सराविकानामकं भवेत् ॥ ४३ ॥ ३४२ ॥

मनोरमा—

नरजगैर्भवेन्मनोरमा ४४ ।।।S।S।S।S ३४४

नरजगैरिति । यत्र प्रतिपादं नगणरगणजगणगुरव, तद्वृत्तं मनोरमानामक भवेत् ॥ ४४ ॥ ३४४ ॥

विराट्-शुद्धविराट् च—

वृत्तं स्याच्च विराड्मसौ जगौ ४५ SSS।।S।S।S ३४५

वृत्तमिति । यत्र प्रतिपादं मगणसगणजगणगुरवः, तद्वृत्तं विराड्नामकं स्यात् । शुद्धविराडिति नामान्तरमस्य बोध्यम् । एतन्नामघटितं लक्षणं यथा—

"वृत्तं शुद्धविराड्मसौ जगौ"

इति ॥ ४५ ॥ ३४५ ॥

अक्षरावली—

रः सजौ गुरुरक्षरावली ४६ S।S।।S।S।S ३४७

र इति । यत्र प्रतिपादं रगणसगणजगणगुरवः, तद्वृत्तम् अक्षरावलीनामकं ज्ञेयम् ॥ ४६ ॥ ३४७ ॥

सहजा—

सहजा ससजं गुरुर्यदा ४७ ।।S।।S।S।S ३४८

सहजेति । यदा प्रतिपाद द्वौ सगणौ जगणगुरू च भवतः, तदा सहजानामकं वृत्तम्बोध्यम् ॥ ४७ ॥ ३४८ ॥

अहिला—

तन्वीति । यदा प्रतिपादं तगणसगणजगणगुरवः, तदा तद् वृत्तम् ...नामकं स्यात् ॥ ४८ ॥ ३४९ ॥

कुप्यम्

कुप्यमिति भवेद्भसौ जगौ ४९ SIIIISISIS ३५१

कुप्यमिति । यत्र प्रतिपादं भगणसगणजगणगुरवः, तद्वृत्तं कुप्यम् इति भवति ॥ ४९ ॥ ३५१ ॥

अनुचायिता—

नसजगुरवोऽनुचायिता ५० IIIIISISIS ३५२

नसजेति । यत्र प्रतिपाद नगणसगणजगणगुरवः, तद्वृत्तम् अनुचायितानामकं वृत्तम् स्यात् ॥ ५० ॥ ३५२ ॥

वमिता—

वमिता यदा रजजं गुरुः ५१ SISISIISIS ३६३

वमितेति । यदा प्रतिपादं रगणजगणौ जगणगुरू च, तदा वमितानामकं वृत्तम्भवेत् ॥ ५१ ॥ ३६३ ॥

संहनिका संयुगा-सयुता च—

सजजं गु संहनिका भवेत् ५२ IISISIISIS ३६४

सजजमिति । यत्र प्रतिपादं सगणजगणौ जगणगुरू च, तद्वृत्त संहनिकानामकं भवेत् । संयुगा सयुता चेति नामान्तरमस्य बोध्यम् ॥ ५२ ॥ ३६४ ॥

उपस्थिता—

तौ जश्च ग एक उपस्थिता ५३ SSIISIISIS ३६५

तजाविति । यत्र प्रतिपाद तगणजगणौ जगणगुरू च, तद्वृत्तम् उपस्थितानामकं ज्ञेयम् ॥ ५३ ॥ ३६५ ॥

जरा—

जग यदि जत्रयगौ भवेत् ५४ ISIISIISIS ३६६

जगेति । यदि प्रतिपाद त्रयो जगणाः एको गुरुश्च, तदा जरानामकं वृत्तं भवेत् ॥ ५४ ॥ ३६६ ॥

भिन्नपदम्—

भिन्नपदं भवति भौ जगौ ५५ SIISIIISIS ३७५

भिन्नपदमिति । यत्र प्रतिपादं द्वौ भगणौ ततो जगणगुरू च, तद्वृत्त भिन्नपदनामकं भवति ॥ ५५ ॥ ३७५ ॥

वह्निसभेदनी—

नभजगा वह्निसभेदिनी ५६ IIISIIISIS ३७६

नभजगा इति । यत्र प्रतिपादं नगणभगणजगणगुरवः, तद्वृत्तं वह्निसभेदिनीनामकं ज्ञेयम् ॥ ५६ ॥ ३७६ ॥

पणवः—

भ्नौ ज्गौ स्यादिह पणवाभिधम् ५७ SSS|||S|S ३७७

भ्नाविति। चेत् इह भगणनगणजगणगुरवः, तर्हि इदं पणवाभिध (पणवसंज्ञक) वृत्त स्यात् ॥ ५७ ॥ ३७७ ॥

चितिभृतम्—

चितिभृतमिति नौ जगौ ५८ ||||||S|S ३८४

चितिभृतमिति। यत्र प्रतिपाद द्वौ नगणौ जगणगुरू च, तद्वृत्तं चितिभृतम् इति (चितिभृतसंज्ञकं) ज्ञेयम् ॥ ५८ ॥ ३८४ ॥

सुषमा—

तो यो भगुरू उक्ता सुषमा ५९ SS||SSS||S ३९७

त इति। यत्र प्रतिपादं तगणयगणभगणगुरवः, सा सुषमा नाम उक्ता ॥ ५९ ॥ ३९७ ॥

फलिनी—

नयभगसृष्टा स्यात्फलिनी ६० ||||SSS||S ४००

नयेति। यत्र प्रतिपाद नगणयगणभगणगुरवः, तद्वृत्तं फलिनीनामक स्यात् ॥ ६० ॥ ४०० ॥

सुरयानवती—

सुरयानवती सौ च भगौ ६१ ||S||SS||S ४१२

सुरयानवतीति। यत्र प्रतिपाद द्वौ सगणौ भगणगुरू च, तद्वृत्तं सुरयानवतीसंज्ञकं स्यात् ॥ ६१ ॥ ४१२ ॥

विरल-कटिका च—

स्याद्भसभगसृष्टं विरलम् ६२ S|||SS||S ४१५

स्यादिति। यत्र प्रतिपादं भगणसगणभगणगुरवः, तद्वृत्त विरलनामक स्यात्। कटिकेत्यपि नामाऽस्य ज्ञेयम् ॥ ६२ ॥ ४१५ ॥

छलितकम्—

छलितकं यत्र नस्तभगाः ६३ |||SS|S||S ४२४

छलितकमिति। यत्र प्रतिपादं नगणतगणभगणगुरवः, तद्वृत्त छलितकनामक स्यात् ॥ ६३ ॥ ४२४ ॥

प्रवादपदा—

सजभा गुरुः प्रवादपदा ६४ ||S|S|S||S ४२८

सजभा इति। यत्र प्रतिपादं सगणजगणभगणगुरवः, तद्वृत्त प्रवा-

वारवती—

इह सो भौ गुरु वारवती ६५ ॥SS॥S॥S ४३६

इहेति । चेत् इह प्रतिपाद् सगणभगणौ भगणगुरू च, तदा एतद्वृत्तं वारवतीनामकं स्यात् ॥ ६५ ॥ ४३६ ॥

परिचारवती—

तो भौ गुरुः परिचारवती ६६ SS।S॥S॥S ४३७

त इति । यत्र प्रतिपाद तगणभगणौ भगणगुरू च, तद्वृत्तं परिचारवतीनामकं स्यात् ॥ ६६ ॥ ४३७ ॥

काण्डमुखी—

जभौ भगौ यदि काण्डमुखी ६७ ।S।S॥S॥S ४३८

जभाविति । यदि प्रतिपादं जगणभगणौ भगणगुरू च, तदा काण्डमुखीनामक वृत्तं स्यात् ॥ ६७ ॥ ४३८ ॥

वि० विश्वमुखी—सारवती च

भत्रयगौ यदि विश्वमुखी ६८ S॥S॥S॥S ४३९

भत्रयगाविति । यदि प्रतिपादं त्रयो भगणा एको गुरुश्च, तर्हि विश्वमुखीनामकं वृत्त स्यात् । सारवती इत्यपि नामाऽस्य बोध्यम् । इद वृत्त विलोमकाव्यानुगुणम् ॥ ६८ ॥ ४३९ ॥

शरत्—

नभभगा भवतीह शरत् ६९ ॥।S॥S॥S ४४०

नभभगा इति । यदि इह प्रतिपादं नगणभगणौ भगणगुरू च, तदा इदं वृत्त शरन्नामकं भवति ॥ ६९ ॥ ४४० ॥

गहना—

चेद्भनभगुरवो गहना ७० S॥॥।S॥S ४४७

चेदिति । चेत् प्रतिपाद भगणनगणभगणगुरवः, तदा गहनानामकं वृत्त स्यात् ॥ ७० ॥ ४४७ ॥

फलधरम्—

फलधरमिह नौ भगुरू ७१ ॥॥॥S॥S ४४८

फलधरमिति । चेत् इह प्रतिपादं द्वौ नगणौ भगणगुरू च, तदा फलधरनामकमिदं वृत्त स्यात् ॥ ७१ ॥ ४४८ ॥

धमनिका—

सजना गुरुश्च धमनिका ७२ ॥S।S॥॥S ४९२

सजना इति । यत्र प्रतिपाद सगणजगणनगणगुरवः, तद्वृत्तं धम-

कानामकं स्यात् ॥ ७२ ॥ ४९२ ॥

प्रमृतगतिः—त्वरितगतिः—मृगलतिका च—

त्वरितगतिश्च नजनगैः ७३ IIISIIIIS ४९६

त्वरितगतिरिति । यत्र प्रतिपाद नगणजगणनगणगुरवः, तद्वृत्तं रितगतिनामक बोध्यम् । अमृतगतिः मृगलतिका चेति नामद्वयमन्य पे अस्य ज्ञेयम् ॥ ७३ ॥ ४९६ ॥

ंसी—

उक्ता हंसी मभनगुरुभिः ७४ SSSSIIIIIS ४९७

उक्तेति । यत्र प्रतिपादं मगणभगणनगणगुरवः, सा हंसी नाम का ॥ ७४ ॥ ४९७ ॥

वे० कृतमणिता–मणिता च—

भद्विनगुरुकृतमणिता ७५ SIIIIIIIIS ४९७

भेति । यत्र प्रतिपाद भगणनगणौ नगणगुरू च, तद्वृत्त कृतमणिता मकं स्यात् । मणितेत्यपि नामास्य बोध्यम् । इदं वृत्त विलोमकाव्या गुणम् अस्ति ॥ ७५ ॥ ५११ ॥

नकरमुखी—

त्रिनगु यदि मकरमुखी ७६ IIIIIIIIIS ५१२

त्रिनग्विति । यदि प्रतिपादं त्रयो नगणाः गुरुश्च, तर्हि तत् मकरमु- खेसञ्ज्ञक वृत्तं स्यात् ॥ ७६ ॥ ५१२ ॥

महिमावसायि—

सभरा लौ महिमावसायि ७७ IISSIISISI ६९२

सभरा इति । यत्र प्रतिपादं सगणभगणरगणलघवः, तद्वृत्तं महिमा- वसायिनामकं स्यात् ॥ ७७ ॥ ६९२ ॥

कामचारि—

तो भो रलौ यदि कामचारि ७८ SSISIISISI ६९३

त इति । यदि प्रतिपादं तगणभगणरगणलघवः, तदा तद्वृत्तं काम- चारिसंज्ञकं स्यात् ॥ ७८ ॥ ६९३ ॥

वे० नेमधारि—

जभौ रलौ यदि नेमधारि ७९ ISISIISISI ६९४

जभाविति । यदि प्रतिपादं जगणभगणरगणलघवः, तर्हि नेमधारि- नामकं वृत्तं स्यात् । इद वृत्त विलोमकाव्यानुकूलम् ॥ ७९ ॥ ६९४ ॥

हीरलम्बि—

भौ रगणो लघु हीरलम्बि ८० ऽ।।ऽ।।ऽ।ऽ। ६९५

भाविति । यत्र प्रतिपादं द्वौ भगणौ रगणलघू च, तद्वृत्तं हीरलम्बिनामकं स्यात् ॥ ८० ॥ ६९५ ॥

वनिताविनोदि—

नभरला वनिताविनोदि ८१ ।।।ऽ।।ऽ।ऽ। ६९६

नभरला इति । यत्र प्रतिपादं नगणभगणरगणलघवः, तद्वृत्त वनिताविनोदिनामकं स्यात् ॥ ८१ ॥ ६९६ ॥

विरेकि—

रो नरौ लघु यदा विरेकि ८२ ऽ ऽ।।।ऽ।ऽ। ६९९

र इति । यदा प्रतिपादं रगणनगणरगणलघवः, तदा तद्वृत्त विरेकिनामकं स्यात् ॥ ८२ ॥ ६९९ ॥

कुकपादि—

नरसला यदा कुकपादि ८३ ।।।ऽ।ऽ।।ऽ। ७२८

नरसला इति । यदा प्रतिपादं नगणरगणसगणलघवः, तदा कुकपादिनामकं वृत्त स्यात् ॥ ८३ ॥ ७२८ ॥

लुलितम्—

सगणत्रयलौ लुलितं च ८४ ।।ऽ।।ऽ।।ऽ। ७३२

सगणेति । यत्र प्रतिपादं त्रयः सगणाः एको लघुश्च, तद्वृत्तं लुलितनामक ज्ञेयम् ॥ ८४ ॥ ७३२ ॥

रसभूम—

सजसा लघुश्च रसभूम ८५ ।।ऽ।ऽ।।।ऽ। ७४८

सजसा इति । यत्र प्रतिपादं सगणजगणसगणलघवः, तद्वृत्तं रसभूमसञ्ज्ञक स्यात् ॥ ८५ ॥ ७४८ ॥

चारुचारणम्—

चारुचारणमिति रनसिलै ८६ ऽ।ऽ।।।।।ऽ। ७६३

चार्विति । यत्र प्रतिपादं रगणनगणसगणलघवः, तद्वृत्तं चारुचारणम् इति ( चारुचारणसञ्ज्ञक ) स्यात् ॥ ८६ ॥ ७६३ ॥

सरसमुखी—

त्नौ स्लौ यदि सरसमुखीह ८७ ऽऽ।।।।।।ऽ। ७६५

त्नाविति । यदि इह प्रतिपादं तगणनगणसगणलघवः, तर्हि इदं सरसमुखीनामकं वृत्तं स्यात ॥ ८७ ॥ ७६५ ॥

ऋतम्--

द्विनसलकृतमृतमत्र ८८ ।।।।।।।।ऽ। ७६८

द्विनेति । चेत् अत्र प्रतिपादं द्वौ नगणौ सगणलघू च, तर्हि इदम् ऋतनामकम्वृत्तं स्यात् ॥ ८८ ॥ ७६८ ॥

कीलालम्—

भो मतलाश्चेत्कीलालं किल ८९ ऽ।।ऽऽऽऽऽ।। ७७५

भ इति । चेत् प्रतिपादं भगणमगणतगणलघवः, तर्हि कीलालनामकम्वृत्तं किल स्यात् ॥ ८९ ॥ ७७५ ॥

खौरलि—

नयतलघु स्याच्चेत्खौरलि ९० ।।।।ऽऽऽऽ।। ७८४

नयतेति । चेत् प्रतिपादं नगणयगणतगणलघवः, तर्हि खौरलिनामकं वृत्तं स्यात् ॥ ९० ॥ ७८४ ॥

कामनिभा—

उक्ता कामनिभा मस्ता लघु ९१ ऽऽऽ।।ऽऽऽ।। ७९३

उक्तेति । यत्र प्रतिपादं मगणसगणतगणलघवः, सा कामनिभा नाम उक्ता ॥ ९१ ॥ ७९३ ॥

विस्रसि—

नसतलघवो विस्रंसि च ९२ ।।।।।ऽऽऽ।। ८००

नसेति । यत्र प्रतिपादं नगणसगणतगणलघवः, तद्वृत्त विस्रसिनामकं स्यात् ॥ ९२ ॥ ८०० ॥

नीरनिधिः—

ननतनला नीरनिधिरिति ९३ ।।।ऽऽ।।।।। १०००

ननतनला इति । यत्र प्रतिपादं नगणतगणनगणलघवः, तद्वृत्तं नीरनिधिः इति ( नीरनिधिनामकम् ) स्यात् ॥ ९३ ॥ १००० ॥

कृतकवलि—

त्रिनलघु च कृतकवलि ९४ ।।।।।।।।।। १०२४

त्रिनेति । यत्र प्रतिपादं त्रयो नगणाः लघुरेकश्च, तद्वृत्तं कृतकवलिनामकं स्यात् ॥ ९४ ॥ १०२४ ॥

चतुरधिकनवतिः ९४ ।

# एकादशाक्षरा वृत्तिः ।

## ११ त्रिष्टुप्—भेदाः २०४८

मारती—भारती च—

मौ मो गौ चेद्यत्र स्यान्मारत्येषा १ SSSSSSSSSSS १

माविति । चेत् यत्र प्रतिपादं त्रयो मगणा· द्वौ गुरू च, तर्हि एषा मारतीनाम स्यात् । भारतीत्यपि नामास्य वृत्तस्य बोध्यम् ॥ १ ॥

आराधिनी—

तो मौ गुरू चेत्स्यादाराधिन्येषा २ SSISSSSSSSS ५

त इति । चेत्प्रतिपादं तगणमगणौ मगणो गुरुद्वय च, तर्हि एषा आराधिनी नाम स्यात् ॥ २ ॥ ५ ॥

अमालीनम्—

अमालीनवृत्तं यौ मो गौ यत्र ३ ISSISSSSSSS १०

अमालीनेति । यत्र प्रतिपाद द्वौ यगणौ एको मगणः द्वौ गुरू च, तद्वृत्तम् अमालीनसंज्ञकं स्यात् ॥ ३ ॥ १० ॥

मेघध्वनिपूरः—

मेघध्वनिपूरः स्यात्तो यो मो गौ ४ SSIISSSSSSS १३

मेघेति । यत्र प्रतिपाद तगणयगणमगणाः द्वौ गुरू च, तद्वृत्तं मेघध्वनिपूरनामकं स्यात् ॥ ४ ॥ १३ ॥

उद्धतिकरी—

उद्धतिकरीयं स्याद्भो यो मो गौ ५ SIIISSSSSSS १५

उद्धतिकरीति । यत्र प्रतिपादं भगणयगणमगणा· द्वौ गुरू च, सा इयम् उद्धतिकरी नाम स्यात् ॥ ५ ॥ १५ ॥

अपयोधा—

अपयोधाऽहिपोक्ता सो रो मो गौ ६ IISSISSSSSS २०

अपेति । यत्र प्रतिपाद सगणरगणमगणाः द्वौ गुरू च, सा अपयोधा नाम अहिपोक्ता शेषेण कथिता इति यावत् ॥ ६ ॥ २० ॥

अन्तर्वनिता—

स्यादन्तर्वनिता मः सो मो गौ चेत् ७ SSSIISSSSSS २५

स्यादिति । चेत् प्रतिपादं मगणसगणमगणाः द्वौ गुरू च, तर्हि अन्तर्वनितानामकं वृत्तं स्यात् ॥ ७ ॥ २५ ॥

प्रफुल्लकदली—

प्रफुल्लकदलीयं जः सो मो गौ ८ ।S।।।SSSSSS ३०

प्रफुल्लेति । यत्र प्रतिपादं जगणसगणमगणाः द्वौ गुरू च, सेयं फुल्लकदलीनाम स्यात् ॥ ८ ॥ ३० ॥

लक्षणलीला—

लक्षणलीला भवेद्भस्तो मो गौ ९ S।।SS।SSSSS ३९

लक्षणेति । यत्र प्रतिपाद भगणतगणमगणाः द्वौ गुरू च, तद्वृत्तं लक्षणलीलासंज्ञकं भवेत् ॥ ९ ॥ ३९ ॥

कूलचारिणी—कूलिका च—

कूलचारिणी रजौ मो गौ यत्र १० S।S।S।SSSSS ४३

कूलेति । यत्र प्रतिपाद रगणजगणमगणाः द्वौ गुरू च, तद्वृत्तं कूलचारिणीसंज्ञकं स्यात् । कूलिकेति नामान्तरमस्य बोध्यम् ॥ ४३ ॥

विलुलितमञ्जरी—

विलुलितमञ्जरी नो जो मो गौ ११ ।।।।S।SSSSS ४८

विलुलितेति । यत्र प्रतिपाद नगणजगणमगणाः द्वौ गुरू च, तद्वृत्तं विलुलितमञ्जरीसंज्ञकं स्यात् ॥ ११ ॥ ४८ ॥

भूरिघटकम्—

वृत्तं भूरिघटकं मो नो मो गौ १२ SSS।।।SSSSS ५७

वृत्तमिति । यत्र प्रतिपादं मगणनगणमगणाः द्वौ गुरू च, तद्वृत्तं भूरिघटकसंज्ञकं स्यात् ॥ १२ ॥ ५७ ॥

कलितकमलमाला—

कलितकमलमाला नौ मो गौ १३ ।।।।।।SSSSS ६४

कलितेति । यत्र प्रतिपादं द्वौ नगणौ एको मगणः द्वौ गुरू च, तद्वृत्तं कलितकमलमालासंज्ञकं स्यात् ॥ १३ ॥ ६४ ॥

वल्लवीविलास—

वल्लवीविलासो यदा रो यौ गौ १४ S।S।SS।SSSS ५७

वल्लवीति । यदा प्रतिपादमेको रगणः द्वौ यगणौ द्वौ गुरू च, तर्हि वल्लवीविलाससंज्ञकं वृत्त स्यात् ॥ १४ ॥ ५७ ॥

विकसितपद्मावली—

विकसितपद्मावली नो यौ गौ १५ ।।।।SS।SSSS ८०

विकसितेति । यत्र प्रतिपादम् एको नगणः द्वौ यगणौ द्वौ गुरू च

अमोघमालिका—

अमोघमालिका जरौ यो गौ स्यात् १६ ।S।S।S।SSSS ८६

अमोघेति । यत्र प्रतिपाद जगणरगणमगणाः द्वौ गुरू च, तद्वृत्तम् अमोघमालिकासंज्ञक स्यात् ॥ १६ ॥ ८६ ॥

ललितागमनम्—

ललितागमनं यदा सौ यो गौ १७ ।।S।।S।SSSS ९२

ललितेति । यदा प्रतिपादं द्वौ सगणौ एको यगणः, द्वौ गुरू च, तदा ललितागमनसंज्ञकं वृत्तं स्यात् ॥ १७ ॥ ९२ ॥

संस्तुतशोभासारः—

सतया गौ संस्तुतशोभासारः १८ ।।SSS।।SSSS १००

सतया इति । यत्र प्रतिपादं सगणतगणयगणाः द्वौ गुरू च, तद्वृत्तं संस्तुतशोभासारसंज्ञक स्यात् ॥ १८ ॥ १०० ॥

ललितालबालम्—

ललितालबालमिदं स्जौ यो गौ १९ ।।S।S।।SSSS १०८

ललितेति । चेत् अत्र प्रतिपाद सगणजगणयगणाः द्वौ गुरू च, तदा इद ललितालबालसंज्ञकं वृत्तं स्यात् ॥ १९ ॥ १०८ ॥

वार्त्ताहारी—

नजयगगा यदि वार्त्ताहारी २० ।।।।S।।SSSS ११२

नजयेति । यदि प्रतिपाद नगणजगणयगणाः द्वौ गुरू च, तर्हि वार्त्ताहारीसंज्ञक वृत्त स्यात् ॥ २० ॥ ११२ ॥

कडारम्—

कडारं भवति च यो नो यो गौ २१ ।SS।।।SSSS १२२

कडारमिति । यत्र प्रतिपादं यगणनगणयगणाः द्वौ गुरू च, तद्वृत्तं कडारनामकं भवति ॥ २१ ॥ १२२ ॥

उदितदिनेशः—

सनया उदितदिनेशः स्याद्गौ २२ ।।S।।।SSSS १२४

सनया इति । यत्र प्रतिपादं सगणनगणयगणाः द्वौ गुरू च, तद्वृत्त उदितदिनेशनामक वृत्तं स्यात् । सौधाङ्घ्रिरिति नामान्तरमस्य बोध्यम् । एतन्नामघटित लक्षणं यथा "सनयागुरुयुगलं सौधाङ्घ्रिः" अर्थस्तु स एव स्पष्टः ॥ २२ ॥ १२४ ॥

जालपादः—

समरा इति । चेत् प्रतिपादं सगणभगणरगणाः स्युः द्वौ गुरू च स्याताम्, तर्हि जालपादसञ्ज्ञकं वृत्तं स्यात् ॥ २३ ॥ १३२ ॥

दारदेहा—दारुदेहा च—

दारुदेहा भवेद्रत्रय गौ चेत् २४ SISSISSISSS १४७

दारुदेहेति । चेत्प्रतिपाद त्रयो रगणा द्वौ गुरू च, तर्हि दारुदेहासंज्ञक वृत्तं भवेत् । दारदेहा इत्यपि नामाऽस्य बोध्यम् ॥ २४ ॥ १४७ ॥

सुधाधारा—

रात्परैर्नरगगैः सुधाधारा २५ SISIIISISSS १८७

रादिति । यत्र प्रतिपादं रगणनगणरगणाः द्वौ गुरू च, तद्वृत्तं सुधाधारानामकं स्यात् ॥ २५ ॥ १८७ ॥

कन्दविनोदः—

कन्दविनोदः स्याद्भमसागौ चेत् २६ SIISSSIISSS १९९

कन्दविनोद इति । चेत् यत्र प्रतिपादं भगणमगणसगणाः द्वौ गुरू च, तदा तद्वृत्तं कन्दविनोदसंज्ञक स्यात ॥ २६ ॥ १९८ ॥

विलम्बितमध्या—

मःसौ गौ च विलम्बितमध्या स्यात् २७ SSSIISIISSS २१७

म इति । यत्र प्रतिपादम् एको मगणः द्वौ सगणौ द्वौ गुरू च, तद्वृत्तं विलम्बितमध्यासञ्ज्ञकं स्यात् ॥ २७ ॥ २१७ ॥

विष्टम्भः—

सगणत्रयगद्वयिविष्टम्भः २८ IISIISIISSS २२०

सगणेति । यत्र प्रतिपाद त्रयःसगणाः द्वौ गुरू च, तद्वृत्तं विष्टम्भसञ्ज्ञकं स्यात् ॥ २८ ॥ २२० ॥

क्रोशितकुशला—

क्रोशितकुशला भससं गौ चेत् २९ SIIIISIISSS २२३

क्रोशितेति । चेत् यत्र प्रतिपादम् एको भगण· द्वौ सगणौ द्वौ गुरू च, तर्हि तद्वृत्तं क्रोशितकुशलासञ्ज्ञकं स्यात् ॥ २९ ॥ २२३ ॥

उपहितचण्डी—

सभसङ्गावुपहितचण्डी स्यात् ३० IISSIIIISSS २४४

सभसमिति । यत्र प्रतिपादं सगणभगणसगणाः द्वौ गुरू च, तद्वृत्तम् उपहितचण्डीसञ्ज्ञकं स्यात् ॥ ३० ॥ २४४ ॥

श्रितकमला—

भाविति । चेत् प्रतिपादं द्वौ भगणौ एकः सगणः द्वौ गुरू च, तर्हि श्रितकमलानामक वृत्तं स्यात् ॥ ३१ ॥ २४७ ॥

रथपदं-वृत्ताच-सुकृतिश्च—

रथपदमिह यदि नौ सो गौ ३२ ||||||||SSS २५६

रथेति । यदि इह प्रतिपादं द्वौ नगणौ एकः सगणः द्वौ गुरू च, तर्हि इद वृत्तं रथपदसञ्ज्ञक स्यात् । वृत्ता-सुकृतिश्चेति नामद्वयमन्यदप्यस्य वृत्तस्य बोध्यम् ॥ ३२ ॥ २५६ ॥

उपस्थितम्—

जसौ तगगमाहोपस्थितं तत् ३३ |S|||SSS|SS २८६

जसाविति । यत्र प्रतिपाद जगणसगणतगणाः द्वौ गुरू च, तद्वृत्तं उपस्थितसंज्ञम् आह वक्ति । पिङ्गलः इति शेषः ॥ ३३ ॥ २८६ ॥

शालिनी—

मात्तौ गौ चेच्छालिनी वेदलोकैः ३४ SSSSS|SS|SS २८९

मादिति । चेत्प्रतिपादम् एको मगणः द्वौ तगणौ द्वौ गुरू च, चतुर्भिः सप्तभिश्च विरतिः, तर्हि शालिनीसञ्ज्ञक वृत्तं स्यात् ॥ ३४ ॥ २८९ ॥

वि० प्राकारबन्धः—

प्राकारबन्धस्तकारत्रय गौ ३५ SS|SS|SS|SS २९३

प्राकारेति । यत्र प्रतिपादं त्रयः तगणाः द्वौ गुरू च, तद्वृत्तं प्राकारबन्धसंज्ञकं स्यात् । इद वृत्त विलोमकाव्यानुगुणम् बोध्यम् ॥ ३५ ॥ २९३ ॥

विहारिणी-भासिनी च-

सजता विहारिणी गौ यदा स्यात् ३६ ||S|S|SS|SS ३००

सजता इति । यदा प्रतिपादं सगणजगणतगणाः द्वौगुरू च, तदा विहारिणीसंज्ञक वृत्तं स्यात् । भासिनीति नामान्तरमस्य ज्ञेयम्॥३६॥३००॥

वातोर्मी—

वातोर्मीयं गदिता म्भौ तगौ गः ३७ SSSS||SS|SS ३०५

वातोर्मीति । यदि अत्र प्रतिपाद मगणभगणतगणाः द्वौ गुरू च, तर्हि इयं वातोर्मी नाम गदिता ॥ ३७ ॥ ३०५ ॥

ईहामृगी—

ईहामृगी किल चेत्तो भतौ गौ ३८ SS|S||SS|SS ३०९

ईहेति । चेत्प्रतिपादं तगणभगणतगणाः द्वौ गुरू च, तर्हि ईहामृगी-

परिमलललितम्—

पारिमललिलतं नौ तगौ गः ३९ ||||||SS|SS ३२०

परिमलेति । यत्र प्रतिपादं द्वौ नगणौ एकस्तगणः द्वौ गुरू च, तद्वृत्त परिमलललितसञ्ज्ञक स्यात् ॥ ३९ ॥ ३२० ॥

विश्वविराट्—

वृत्तं विश्वविराड् मसौ जगौ गः ४० SSS||S|S|SS ३४५

वृत्तमिति । यत्र प्रतिपादं मगणसगणजगणाः द्वौ गुरू च, तद्वृत्तं विश्वविराट्सञ्ज्ञकं स्यात् ॥ ४० ॥ ३४१ ॥

विमला—

विमला ससजं गुरू यदा स्यात् ४१ ||S||S|S|SS ३४८

विमलेति । यदा प्रतिपादं द्वौ सगणौ एको जगणः द्वौ गुरू च, तदा विमलासंज्ञक वृत्त स्यात् ॥ ४१ ॥ ३४८ ॥

सरोजवनिका—

सरोजवनिका जसौ जगौ गः ४२ |S|||S|S|SS ३५०

सरोजेति । यत्र प्रतिपाद जगणसगणजगणाः द्वौ गुरू च, तद्वृत्त सरोजवनिकासञ्ज्ञक स्यात् ॥ ४२ ॥ ३५० ॥

अमन्दपादः—

स्याद्भसजगगा अमन्दपादः ४३ S||||S|S|SS ३५१

स्यादिति । यत्र प्रतिपाद भगणसगणजगणाः द्वौ गुरू च, तद्वृत्तम् अमन्दपादसंज्ञकं स्यात् ॥ ४३ ॥ ३५१ ॥

पञ्चशाखी—

इह नसजगा गु पञ्चशाखी ४४ |||||S|S|SS ३५२

इहेति । चेत् इह प्रतिपादं नगणसगणजगणाः द्वौ गुरू च, तर्हि इदं पञ्चशाखीसञ्ज्ञकं वृत्तं स्यात् ॥ ४४ ॥ ३५२ ॥

वि० इन्द्रवज्रा—

स्यादिन्द्रवज्रा यदि तौ जगौ गः ४५ SS|SS||S|SS ३५७

स्यादिति । यदि प्रतिपाद द्वौ तगणौ एको जगणः द्वौ गुरू च, तर्हि इन्द्रवज्रासंज्ञक वृत्तं स्यात् । इदं वृत्तं विलोमकाव्यानुगुणम्बोध्यम् ॥ ४५ ॥ ३५७ ॥

वि० उपेन्द्रवज्रा—

उपेन्द्रवज्रा जतजा गयुग्मम् ४६ |S|SS||S|SS ३५८

उपेन्द्रेति । यत्र प्रतिपादं जगणतगणजगणाः द्वौ गुरू च तद्वृत्त

उपेन्द्रवज्रासञ्ज्ञकं स्यात् । इदं वृत्तं विलोमकाव्यानुगुणं बोध्यम्॥४६॥३५८॥

उपजातिः—

चेदिन्द्रवज्राचरणानि यस्यामुपेन्द्रवज्राचरणानि च स्युः ॥
तदोपजातिः कथिता कवीन्द्रैर्भेदा भवन्तीह चतुर्दशाऽस्याः ॥ १ ॥

| | | | |
|---|---|---|---|
| वाणी | १ | ISSS | उ० इ० इ० इ० |
| माला | २ | SISS | इ० उ० इ० इ० |
| साला | ३ | IISS | उ० उ० इ० इ० |
| हंसी | ४ | SSIS | इ० इ० उ० इ० |
| माया | ५ | ISIS | उ० इ० उ० इ० |
| जाया | ६ | SIIS | इ० उ० उ० इ० |
| बाला | ७ | IIIS | उ० उ० उ० इ० |
| आर्द्रा | ८ | SSSI | इ० इ० इ० उ० |
| भद्रा | ९ | ISSI | उ० इ० इ० उ० |
| प्रेमा | १० | SISI | इ० उ० इ० उ० |
| रामा | ११ | IISI | उ० उ० इ० उ० |
| वृद्धिः | १२ | SSII | इ० इ० उ० उ० |
| बुद्धिः | १३ | ISII | उ० इ० उ० उ० |
| मसृणा | १४ | SIII | इ० उ० उ० उ० |

चेदिति । चेत् यस्याम् इन्द्रवज्रायाः चरणानि उपेन्द्रवज्रायाः चरणानि च स्युः । तदा सा कवीन्द्रैः उपजातिः नाम कथिता । इह छन्दःशास्त्रे अस्याः उपजातेः चतुर्दश भेदाः भवन्ति ॥ १ ॥

इकारेण इन्द्रवज्रा

उकारेण उपेन्द्रवज्रा

यत्र प्रथमपादः उपेन्द्रवज्रायाः अन्ये त्रयः इन्द्रवज्रायाः सा वाणी नाम उपजातिः ज्ञेया । एवं सर्वाः अपि सङ्केतलिखिताः बोध्याः ॥

पट्टपट्टिका—

पट्टपट्टिका सजजं गुरू चेत् ४७ IISISIISISS ३६४

पट्विति । चेत् प्रतिपादम् एकः सगणः द्वौ जगणौ द्वौ गुरू च, तदा पट्टपट्टिकासञ्ज्ञक वृत्तं स्यात् ॥ ४७ ॥ ३६४ ॥

उपस्थिता—

त्जौ ज्गौ गुरुणेयमुपस्थितोक्ता ४८ SSIISIISISS ३६५

त्जाविति। यत्र प्रतिपादम् एकः तगणः द्वौ जगणौ द्वौ गुरू च, इयम् उपस्थिता नाम उक्ता। पिङ्गलेनेति शेषः ॥ ४८ ॥ ३६५ ॥

श्रुतकीर्त्तिः—

नयभगगा यत्र श्रुतकीर्त्तिः ४९ IIIISSSIISS ४००

नयेति। यत्र प्रतिपाद नगणयगणभगणाः द्वौ गुरू च, तद्वृत्त श्रुतकीर्त्तिसंज्ञक स्यात् ॥ ४९ ॥ ४०० ॥

वर्णबलाका—

इह वर्णबलाका ससभं गौ ५० IISIISSIISS ४१२

इहेति। चेत् इह प्रतिपाद द्वौ सगणौ एकः भगणः द्वौ गुरू च, तर्हि इदं वृत्तं वर्णबलाकासंज्ञक स्यात् ॥ ५० ॥ ४१२ ॥

अमितशिखण्डी—

स्यादमितशिखण्डी भसभं गौ ५१ SIIISSIISS ४१५

स्यादिति। यत्र प्रतिपादं भगणसगणभगणाः द्वौ गुरू च, तद्वृत्तं अमितशिखण्डिसंज्ञकं स्यात् ॥ ५१ ॥ ४१५ ॥

दोधक—बन्धुश्च

दोधकमिच्छति भत्रितयाद्गौ ५२ SIISIISIISS ४३९

दोधकमिति। यत्र प्रतिपादं त्रयः भगणाः द्वौ गुरू च, तद्वृत्तं दोधकनामकं स्यात् इति इच्छति पिङ्गलनामकः आचार्यः इति शेषः ॥ ५२ ॥ ४३९ ॥

रोधकम्—

नभभगा गुरुरोधकवृत्तम् ५३ IIISIISIISS ४४०

नभेति। यत्र प्रतिपादम् एकः नगणः द्वौ भगणौ–द्वौ गुरू च, तद्वृत्तम् रोधकनामकं स्यात् ॥ ५३ ॥ ४४० ॥

स्वागता—

स्वागता रनभगैर्गुरुणा च ५४ SISIIISIISS ४४३

स्वागतेति। यत्र प्रतिपाद रगणनगणभगणाः द्वौ गुरू च, तद्वृत्तं स्वागतासंज्ञकं स्यात् ॥ ५४ ॥ ४४३ ॥

मदनमाला—

नरनगागुरुर्मदनमाला ५५ IIISISIIISS ४७२

नरेति। यत्र प्रतिपादम् नगणरगणनगणाः द्वौ गुरू च, तद्वृत्त मदनमालासंज्ञक स्यात ॥ ५५ ॥ ४७२ ॥

उदितविजोहा—

तौ नो गुरू चेदुदितविजोहा ५६ SSISSIIIISS ४८५

ताविति। चेत् यत्र प्रतिपाद द्वौ तगणौ एकः नगणः द्वौ गुरू च, तर्हि तद्वृत्तम् उदितविजोहासंज्ञकं स्यात् ॥ ५६ ॥ ४८५ ॥

अनुकूला-श्रीः-मौक्तिकमाला च—

स्यादनुकूला भतनगगाश्चेत् ५७ SIISSIIIISS ४८७

स्यादिति। चेत् प्रतिपाद भगणतगणनगणाः द्वौ गुरू च, तर्हि अनुकूलासंज्ञक वृत्त स्यात्। श्रीः मौक्तिकमाला चेति नामद्वयमन्यदप्यस्य वृत्तस्य बोध्यम् ॥ ५७ ॥ ४८७ ॥

मात्रा—

मो नौ गाविह भवति च मात्रा ५८ SSSIIIIIISS ५०५

म इति। चेत् इह प्रतिपादम् एको मगणः द्वौ नगणौ द्वौ गुरू च, तर्हि इदं मात्रासंज्ञक वृत्तं भवति ॥ ५८ ॥ ५०५ ॥

सुवृत्तिः—

इह चेत्सननगगुसुवृत्तिः ५९ IISIIIIIISS ५०८

इहेति। चेत् इह प्रतिपादम् एकः सगणः द्वौ नगणौ द्वौ गुरू च, तर्हि इदं सुवृत्तिसंज्ञकं वृत्तं स्यात् ॥ ५९ ॥ ५०८ ॥

भुजङ्गी—

भुजङ्गी त्रयो या लगौ कीर्त्तिता ६० ISSISSISSIS ५८६

भुजङ्गीति। यत्र प्रतिपादं त्रयः यगणाः लघुगुरू च, सा भुजङ्गी नाम कीर्त्तिता ॥ ६० ॥ ५८६ ॥

जवनशालिनी—

जवनशालिनी नरौ यो लगौ ६१ IIISIISISSIS ६००

जवनेति। यत्र प्रतिपाद नगणरगणयगणलघुगुरवः, तद्वृत्त जवनशालिनीसंज्ञक स्यात् ॥ ६१ ॥ ६०० ॥

प्रसृमरकरा—

प्रसृमरकरा नसौ यो लगौ ६२ IIIIISISSIS ६०८

प्रसृमरकरेति। यत्र प्रतिपादं नगणसगणयगणलघुगुरवः, तद्वृत्तं प्रसृमरकरासंज्ञक स्यात् ॥ ६२ ॥ ६०८ ॥

गल्लकम्—

नयुगलयलघुगा गल्लकम् ६३ IIIIIIISSIS ६४०

नयुगलेति। यत्र प्रतिपाद द्वौ नगणौ यगणलघुगुरवश्च, तद्वृत्तं गल्लकसंज्ञक स्यात् ॥ ६३ ॥ ६४० ॥

प्रपातावतारम्—

प्रपातावतारं यौ रलौ गुरुः ६४ ।ऽऽ।ऽऽऽ।ऽ।ऽ ६५०

प्रपातेति । यत्र प्रतिपादं द्वौ यगणौ रगणलघुगुरवश्च, तद्वृत्तं प्रपातावतारसञ्ज्ञकं स्यात् ॥ ६४ ॥ ६५० ॥

गह्वरम्—

रत्रयं यत्र लो गश्च गह्वरम् ६५ ऽ।ऽऽ।ऽऽ।ऽ।ऽ ६५९

रत्रयमिति । यत्र प्रतिपादं त्रयः रगणाः लघुगुरू च, तद्वृत्तं गह्वरसंज्ञकं स्यात् ॥ ६५ ॥ ६५९ ॥

वारयात्रिकम्—

भ्रौ रलगा भवेद्वारयात्रिकम् ६६ ऽ।।ऽ।ऽऽ।ऽ।ऽ ६६३

भ्राविति । यत्र प्रतिपादम् एकः भगणः द्वौ रगणौ लघुगुरू च, तद्वृत्तं वारयात्रिकसंज्ञकं भवेत् ॥ ६६ ॥ ६६३ ॥

कनक मञ्जरी–इन्दिरा–भाविनी–भामिनी च—

कनकमञ्जरी नश्चरौ लगौ ६७ ।।।ऽ।ऽऽ।ऽ।ऽ ६६४

कनकेति। यत्र प्रतिपादम् एको नगणः द्वौ रगणौ लघुगुरू च, तद्वृत्तं कनकमञ्जरीसंज्ञकं स्यात् । इन्दिरा भाविनी-भामिनी चेति नामत्रयमन्यदप्यस्य वृत्तस्य बोध्यम् । इन्दिरानामघटितं लक्षणं यथा—

यदि नरौ रलौ गस्तदेन्दिरा ।

भाविनीनामघटितं लक्षणं यथा—

भवति भाविनी न्रौ रलौ गुरू ।

भामिनीनामघटितं लक्षणं यथा--

भवति भामिनी त्रौ रलौ गुरुः ।

एतेषां लक्षणानामर्थाः स्पष्टाः ॥ ६७ ॥ ६६४ ॥

श्येनी–श्येनिका–सेनिका च—

सेनिका भवेद्रजौ रलौ गुरुः ६८ ऽ।ऽ।ऽ।ऽ।ऽ।ऽ ६८३

सेनिकेति । यत्र प्रतिपादं रगणजगणरगणलघुगुरवः तद्वृत्तं सेनिकासञ्ज्ञकं भवेत् । सेनिकेत्यत्र श्येनिकेति पाठे तन्नामघटितं लक्षणं बोध्यम् ॥ ६८ ॥ ६८३ ॥

सीधु—

इह सीधुः सभरा लगौ यदा ६९ ।।ऽऽ।।ऽ।ऽ।ऽ ६९२

इहेति । यदा इह प्रतिपादं सगणभगणरगणलघुगुरवः, तदा इदं सीधुसंज्ञकं स्यात् ॥ ६९ ॥ ६९२ ॥

रथोद्धता—

रात्परैर्नरलगै रथोद्धता ७० SISIIISISIS ६९९

रादिति । यत्र प्रतिपाद रगणनगणरगणलघुगुरवः तद्वृत्तं रथोद्धतासंज्ञक स्यात् ॥ ७० ॥ ६९९ ॥

प्रतारिता—

सनरा लघुगुरुप्रतारिता ७१ IISIIISISIS ७००

सनरा इति । यत्र प्रतिपादं सगणनगणरगणलघुगुरवः, तद्वृत्तं प्रतारितासंज्ञकं स्यात् ॥ ७१ ॥ ७०० ॥

नीला—

नीला भवति तनौ रलौ गुरुः ७२ SSIIIISISIS ७०१

नीलेति । यत्र प्रतिपादं तगणनगणरगणलघुगुरवः तद्वृत्तं नीलासंज्ञक स्यात् ॥ ७२ ॥ ७०१ ॥

सुभद्रिका—समुद्रिका च—

ननरलगु समुद्रिका भवेत् ७३ IIIIIISISIS ७०४

ननरेति । यत्र प्रतिपादं द्वौ नगणौ एकः रगणः लघुगुरू च, तद्वृत्तं समुद्रिकासंज्ञकं भवेत् । सुभद्रिकेति नामान्तरमस्य बोध्यम् ॥७३॥७०४॥

सौरभवर्द्धिनी—

नयसलगाः सौरभवर्द्धिनी ७४ IIIISSIISIS ७२०

नयसेति । यत्र प्रतिपाद नगणयगणसगणलघुगुरवः-तवृद्वत्तं सौर भवर्द्धिनीसंज्ञक स्यात् ॥ ७४ ॥ ७२० ॥

भुजगहारिणी—

भुजगहारिणी नरसा लगौ ७५ IIISISIISIS ७२८

भुजगेति । यत्र प्रतिपादं नगणरगणसगणलघुगुरवः तद्वृत्तं भुजगहारिणीसंज्ञकं स्यात ॥ ७५ ॥ ७२८ ॥

उपचित्रं-सुचित्रं-नरेशश्च—

उपचित्रमिदं ससमं लगौ ७६ IISIISIISIS ७२२

उपचित्रमिति । यत्र प्रतिपाद त्रयः सगणाः लघुगुरूच, तदिदम् उपचित्रसंज्ञकं वृत्तं स्यात् । सुचित्र-नरेशश्चेति नामद्वयमन्यदप्यस्य वृत्तस्य बोध्यम् ॥ ७६ ॥ ७२२ ॥

संमदमालिका—

नससलगि संमदमालिका ७७ IIIIISIISIS ७३६

नससेति । यत्र प्रतिपादमेकः नगणः द्वौ सगणौ लघुगुरू च, तद्वृत्त समदमालिकासंज्ञकं स्यात् ॥ ७७ ॥ ७३६ ॥

कनककामिनी—

**जतौ सलौ गः कनककामिनी** ७८ ISISSIIISIS ७४२

जताविति । यत्र प्रतिपादं जगणतगणसगणलघुगुरवः, तद्वृत्तं कनककामिनीसंज्ञकं स्यात् ॥ ७८ ॥ ७४२ ॥

उपदारिका—

**रो जसौ लगौ तदुपदारिका** ७९ SISISIIISIS ७४७

र इति । यत्र प्रतिपादं रगणजगणसगणलघुगुरवः, तद्वृत्तमुपदारिकासंज्ञकं स्यात् ॥ ७९ ॥ ७४७ ॥

दारिका—

**सजसा लगौ भवति दारिका** ८० IISISIIISIS ७४८

सजसा इति । यत्र प्रतिपादं सगणजगणसगणलघुगुरवः, तद्वृत्तं दारिकासंज्ञकं भवेत् ॥ ८० ॥ ७४० ॥

मालविका—

**स्यान्मालविका तजसला गुरुः** ८१ SSIISIIISIS ७४९

स्यादिति । यत्र प्रतिपादं तगणजगणसगणलघुगुरवः, तद्वृत्तं मालविकासंज्ञकं स्यात् ॥ ८१ ॥ ७४९ ॥

नाभसम्—

**भवेज्जजसं लगुरु नाभसम्** ८२ ISIISIIISIS ७५०

भवेदिति । यत्र प्रतिपादं द्वौ जगणौ सगणलघुगुरवश्च, तद्वृत्तं नाभससंज्ञकं भवेत् ॥ ८२ ॥ ७५० ॥

सौभगकला—

**सौभगकला भजसला गुरुः** ८३ SIIISIIISIS ७५१

सौभगेति । यत्र प्रतिपादं भगणजगणसगणलघुगुरवः, तद्वृत्तं सौभगकलासंज्ञकं स्यात् ॥ ८३ ॥ ७५१ ॥

वीवधः—

**नजसलगा भवति वीवधः** ८४ IIIISIIISIS ७५२

नजसेति । यत्र प्रतिपादं नगणजगणसगणलघुगुरवः, तद्वृत्तं वीवधसंज्ञकं भवति ॥ ८४ ॥ ७५२ ॥

आशापादः—

**आशापादो मभसलगा यदा** ८५ SSSSIIIISIS ७५३

आशेति । यदा यत्र प्रतिपादं मगणभगणसगणलघुगुरवः, तदा तद्वृत्तं आशापादसंज्ञकं स्यात् ॥ ८५ ॥ ७५३ ॥

भुजलता—

इह भुजलता नस्सस्तलगाः ८६ ।।।।।SSS।।S ८००

इहेति । यत्र प्रतिपाद नगणसगणतगणलघुगुरवः, तद्वृत्तं भुजलतासञ्ज्ञक स्यात् ॥ ८६ ॥ ८०० ॥

हरिकान्ता—

हरिकान्ता यदि सो भस्तलगाः ८७ ।।SS।।SS।।S ८२०

हरिकान्तेति । यदि प्रतिपाद सगणभगणतगणलघुगुरवः, तर्हि हरिकान्तासंज्ञकं वृत्तं स्यात् ॥ ८७ ॥ ८२० ॥

कलस्वनवंशः—

भौ च कलस्वनवंशस्तलगाः ८८ S।।S।।SS।।S ८२३

भाविति । यत्र प्रतिपादं द्वौ जगणौ तगणलघुगुरवश्च, तद्वृत्तं कलस्वनवंशसंज्ञक स्यात् ॥ ८८ ॥ ८२३ ॥

मदनया—

भवति मदनया नौ तलगाः ८९ ।।।।।।SS।।S ८३२

भवतीति । यत्र प्रतिपाद द्वौ नगणौ तगणलघुगुरवः, तद्वृत्तं मदनयासंज्ञकं भवति ॥ ८९ ॥ ८३२ ॥

मोटनकम्—

स्यान्मोटनकं तजगं लगुरू ९० SS।।S।।S।।S ८७७

स्यादिति । यत्र प्रतिपादं तगणजगणौ जगणलघुगुरवश्च, तद्वृत्तं मोटनकसंज्ञकं स्यात् ॥ ९० ॥ ८७७ ॥

खटका—

त्रयो जगणलगुरू खटका ९१ ।S।।S।।S।।S ८७८

त्रय इति । यत्र प्रतिपादं त्रयः जगणाः लघुगुरू च, तद्वृत्तं खटकासञ्ज्ञकं स्यात् ॥ ९१ ॥ ८७८ ॥

शल्कशकलम्—

शल्कशकलं भजजं लघुगौ ९२ S।।।S।।S।।S ८७९

शकलेति । यत्र प्रतिपाद भगणजगणौ जगणलघुगुरवश्च, तद्वृत्तं शल्कशकलसंज्ञकं स्यात् ॥ ९२ ॥ ८७९ ॥

सुमुखी—

नजजलगैर्गदिता सुमुखी ९३ ।।।।S।।S।।S ८८०

नजेति । यत्र प्रतिपादं नगणजगणौ जगणलघुगुरवश्च, सा सुमुखी नाम गदिता । पिङ्गलेनेति शेषः ॥ ९३ ॥ ८८० ॥

कामला—

नयुगलमिह मो यो लो गुरुः कामला ४२ ४६७२

। । । । । । ऽ ऽ ऽ । ऽ ऽ । ऽ

नेति । यदि इह प्रतिपादं नगणौ मगणयगणौ लघुगुरू च स्याताम्, तदा कामलानामकं वृत्तं ज्ञेयम् ॥ ४२ ॥ ४६७२ ॥

प्रपातः—

प्रपातश्चतुर्भिर्यकारैर्लगाभ्यां भवेत् ४३ ४६८२

। ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ

प्रपात इति । यत्र प्रतिपादं चत्वारो यगणाः स्युः लघुगुरू च स्याताम्, तद्वृत्तं प्रपातनामकम्भवेत् ॥ ४३ ॥ ४६८२ ॥

जलदरसिता—

जलदरसिता नसौ यौ लगौ चेत्तदा ४४ ४७०४

। । । । । ऽ । ऽ ऽ । ऽ ऽ । ऽ

जलदेति । चेत् प्रतिपादं नगणसगणयगणा लघुगुरवः स्युः, तदा जलदरसितानामकं वृत्तं बोध्यम् ॥ ४४ ॥ ४७०४ ॥

पथ्या—

सजसा यलौ गुरुरपीह पथ्या मता ४५ ४८४४

। । ऽ । ऽ । । । ऽ । ऽ ऽ । ऽ

सेति । चेत् इह प्रतिपादं सगणजगणसगणयगणलघुगुरवः स्युः, तदा सा पथ्या मता ॥ ४५ ॥ ४८४४ ॥

कल्पमीलिता—

रेफकाणां चतुष्कं लगौ कल्पमीलिता ४६ ५२६७

ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ । ऽ

रेफेति । यत्र प्रतिपादं चत्वारो रगणाः स्युः ततो लघुगुरू च स्याताम्, तद्वृत्तं कल्पमीलितानामकं ज्ञेयम् ॥ ४६ ॥ ५२६७ ॥

सुधाधरा—

चेद्रजौ तरौ लगौ यत्र सा सुधाधरा ४७ ५४१९

ऽ । ऽ । ऽ । ऽ ऽ । ऽ । ऽ । ऽ

चेत् इति । चेत् यत्र प्रतिपादं रगणजगणतगणरगणलघुगुरवः स्युः, सा सुधाधरा नाम स्यात् ॥ ४७ ॥ ॥ ५४१९ ॥

कलाधरः—

रद्वयं जो रलौ गुरुर्यदा कलाधरः ४८ ५४५९

ऽ । ऽ ऽ । ऽ । ऽ । ऽ । ऽ । ऽ

रद्वयमिति । यदा प्रतिपादं द्वौ रगणौ स्याताम् ततः जगणरगणलघुगुरवश्च स्युः, तदा कलाधरनामकं वृत्तं ज्ञेयम् ॥ ४८ ॥ १४५९ ॥

कुडङ्गिका—

जरौ जरौ लगौ यदा तदा कुडङ्गिका ४९ ५४६२

। ऽ । ऽ । ऽ । ऽ। ऽ । ऽ । ऽ

जराविति । यदा प्रतिपाद जगणरगणजगणरगणलघुगुरवः स्युः, तदा कुडङ्गिकानामक वृत्त स्यात् ॥ ४९ ॥ ५४६२ ॥

वितानिता—

त्रिनरलगुरुविरचिता वितानिता ५० ५६६२

। । । । । । । । । । ऽ । ऽ । ऽ

त्रिनेति । यत्र प्रतिपाद त्रयः नगणाः रगणलघुगुरवश्च स्युः, तद्वृत्त वितानिता नामकम्बोध्यम् ॥ ५० ॥ ५६६२ ॥

अलकालिका—अलिकालका च—

स्यादत्र तो भरसा लगावलकालिका ५१ ५८१३

ऽ ऽ । ऽ । । ऽ । ऽ । । ऽ । ऽ

स्यादिति । चेत् अत्र प्रतिपाद तगणभगणरगणसगणलघुगुरव. स्युः तद्वृत्तम् अलकालिकानामकं स्यात् । अलिकालकेत्यस्य नामान्तरम्बोध्यम् ॥ ५१ ॥ ५८१३ ॥

गगनोद्गता—

रो नरौ सगणलौ गुरुर्गगनोद्गता ५२ ५८१९

ऽ । ऽ । । । ऽ । ऽ । । ऽ । ऽ

र इति । यत्र प्रतिपादं रगणनगणरगणसगणलघुगुरवस्स्युः, तद्वृत्त गगनोद्गतानामक भवेत् ॥ ५२ ॥ ५८१९ ॥

अपराजिता—

नयुगरसलगैः स्वरैरपराजिता ५३ ५८२४

। । । । । । ऽ । ऽ । । ऽ । ऽ

न इति । यत्र प्रतिपाद द्वौ नगणौ तदनु रगणसगणलघुगुरवश्च स्युः, सप्तभिः सप्तभिश्च विरतिः स्यात, तद्वृत्तम् अपराजितानामकं ज्ञेयम् ॥ ५३ ॥ ५८२४ ॥

विनन्दिनी—

सचतुष्टयलौ गुरु चापि विनन्दिनी ५४ ५८५२

। । ऽ । । ऽ । । ऽ । । ऽ । ऽ

सेति । यत्र प्रतिपाद चत्वारः सगणाः स्युः तदनु लघुगुरू च स्याताम्, तद्वृत्त विनन्दिनीनामक स्यात् ॥ ५४ ॥ ५८५२ ॥

भूरिशिखा—

यदि सौ मतला गुर्वत्र स्याद्भूरिशिखा ५५ ६१७२

यदीति । यदि अत्र प्रतिपादं द्वौ सगणौ भवेताम् ततः भगणतगण लघुगुरवश्च स्युः, तदा भूरिशिखानामकं वृत्तमिदं स्यात् ॥५५॥६१७२॥

क्रीडायतनम्—क्रीडावसथम्—

सगणत्रयतौ लघुगौ क्रीडावसथम् ५६ ६३६४

। । S । । S । । S S S । । S

सगणेति । यत्र प्रतिपादं त्रयः सगणाः तगणलघुगुरवश्च स्युः, तद्वृत्तं क्रीडावसथनामकं स्यात् । क्रीडायतनमप्यस्य नाम बोध्यम् ॥५६॥६३६४॥

नासाभरणम्—

नासाभरणं तो यो भतला गश्च यदा ५७ ६५४१

S S । । S S S । । S S । । S

नासेति । यदा प्रतिपादं तगणयगणभगणतगणलघुगुरवस्स्युः, तदा नासाभरणनामकं वृत्तं स्यात् ॥ ५७ ॥ ६५४१ ॥

कर्णिशरः—

कर्णिशरो यदि भत्रितयं तो लघुगौ ५८ ६५८३

S । । S । । S । । S S । । S

कर्णिशर इति । यदि प्रतिपादं त्रयः भगणाः तगणलघुगुरवश्च स्युः, तर्हि कर्णिशरनामकं वृत्तं स्यात् ॥ ५८ ॥ ६५८३ ॥

विपाकवती—

नभजजा लघुगुरू च विपाकवती ५९ ७०३२

। । । S । । । S । । S । । S

नेति । यत्र प्रतिपादं नगणभगणजगणाः जगणलघुगुरवश्च स्युः, तद्वृत्तं विपाकवतीनामकम्बोध्यम् ॥ ५९ ॥ ७०३२ ॥

काकिणिका—

भवेदिह जौ भजौ लगुरू काकिणिका ६० ७०८६

। S । । S । S । । । S । । S

भवेदिति । चेत् इह प्रतिपादं द्वौ जगणौ भगणजगणौ लघुगुरू च स्याताम्, तदा काकिणिकानामकं वृत्तं भवेत् ॥ ६० ॥ ७०८६ ॥

कारविणी—

भो जभजला गुरुर्भवति कारविणी ६१ ७०८७

S । । ।S। S । । ।S। । S

भ इति । यदि प्रतिपादं भगणजगणभगणजगणलघुगुरवः स्युः, तदा कारविणीनामकं वृत्तम्भवति ॥ ६१ ॥ ७०८७ ॥

कुररीरुता—

इह कुररीरुता नजभजैर्लगयुक् ६२ ७०८८

। । । ।S।S। । ।S। ।S

इहेति । चेत् इह प्रतिपाद नगणजगणभगणजगणलघुगुरवः स्युः तदा कुररीरुतानामकं वृत्तं ज्ञेयम् ॥ ६२ ॥ ७०८८ ॥

कूर्चललितम्—

**रत्रय चेद्भकारो लगौ कूर्चललितम्** ६३ ७३१५

S I S S I S S I S S I I I S

रत्रयमिति । चेत् प्रतिपाद त्रय रगणा भगणलघुगुरवश्च स्युः, तदा कूर्चललितनामक वृत्त स्यात् ॥ ६३ ॥ ७३१५ ॥

कलहेतिका—

**कलहेतिका सजजं भलौ गुरुरियम्** ६४ ७५३२

I I S I S I I S I S I I I S

कलेति । चेत् अत्र प्रतिपादं सगणजगणौ जगणभगणौ लघुगुरू च स्याताम्, तदा इयम् कलहेतिकानामक वृत्त स्यात् ॥ ६४ ॥ ७५३२ ॥

अश्वलवती—

**अश्वलवती भजजं भलौ गुरुरसौ** ६५ ७५३५

S I I I S I I S I S I I I S

अश्वलवतीति । यत्र प्रतिपाद भगणजगणौ जगणभगणौ लघुगुरू च स्याताम् , असावश्वलवतीनाम ज्ञेया ॥ ६५ ॥ ७५३५ ॥

गगनगतिका—

**चेद्रसौ जनला गुरुर्गगनगतिका** ६६ ८०२७

S I S I I S I S I I I I I S

चेदिति । चेत् प्रतिपाद रगणसगणजगणनगणलघुगुरवः स्युः, तदा गगनगतिकानामक वृत्त स्यात् ॥ ६६ ॥ ८०२७ ॥

निर्मुक्तमाला—

**प्रोक्ता निर्मुक्तमाला मरभनलघुगैः** ६७ ८०८१

S S S S I S S I I I I I I S

प्रोक्तेति । यत्र प्रतिपाद मगणरगणभगणनगणलघुगुरवः स्युः, सा निर्मुक्तमाला नाम प्रोक्ता ॥ ६७ ॥ ८०८१ ॥

प्रहरणकलिका—

**नयुगभनलगैः प्रहरणकलिका** ६८ ८१२८

I I I I I I S I I I I I I S

नेति । यत्र प्रतिपाद द्वौ नगणौ भगणनगणौ लघुगुरू च स्याताम् तद्वृत्त प्रहरणकलिकानामक वृत्तं स्यात् ॥ ६८ ॥ ८१२८ ॥

चक्रम्—

**[illegible] च भननननलघुगुरवः** ६९ ८१९१

चक्रमिति । चेत् इह प्रतिपाद भगणनगणौ द्वौ नगणौ लघुगुरू च स्याताम्, तदा इद चक्रनामक वृत्तं भवेत् ॥ ६९ ॥ ८१९१ ॥

कामशाला—

कामशाला चतूरेफतो गो लघुश्चापि ७० ९३६३

S I S S I S S I S S I S S I

कामशालेति । यत्र प्रतिपादम् चत्वार. रगणा स्युः गुरुलघू च स्याताम्, तद्वृत्त कामशालानामक स्यात् ॥ ७० ॥ ९३६३ ॥

उन्नर्म—

भौ सगणौ गुरु लघु चेदिह चोन्नर्म ७१ ९९७५

S I I S I I I I S I I S S I

भाविति । चेत् इह प्रतिपाद द्वौ भगणौ द्वौ सगणौ गुरुलघू च स्याताम्, तदा इदम् उन्नर्मनामक वृत्तम् भवेत् ॥ ७१ ॥ ९९७५ ॥

उपकारिका—

उपकारिका सजजं भगौ लघु यत्र ७२ ११६२८

I I S I S I I S I S I I S I

उपेति । यत्र प्रतिपाद सगणजगणौ जगणभगणौ गुरुलघू च स्याताम्, तद्वृत्तम् उपकारिकानामक स्यात् ॥ ७२ ॥ ११६२८ ॥

हेममिहिका—

हेममिहिकेह भजौ जभौ गुरुलौ च ७३ ११६३१

S I I I S I I S I S I I S I

हेमेति । चेत् इह प्रतिपाद भगणजगणौ जगणभगणौ गुरुलघू च स्याताम्, तदा इद हेममिहिकानामकं वृत्तम्भवेत् ॥ ७३ ॥ ११६३१ ॥

हेतिः—

नजजभगा लघु यत्र हेतिरसौ च ७४ ११६३२

I I I I S I I S I S I I S I

नेति । यत्र प्रतिपाद नगणजगणौ जगणभगणौ गुरुलघू च स्याताम्, असौ हेतिर्नाम स्यात् ॥ ७४ ॥ ११६३२ ॥

मधुपालि—

मधुपालि चतुः सगणाश्च लघू यदि ७५ १४०४४

I I S I I S I I S I I S I I

मध्विति । यदि प्रतिपादं चत्वारः सगणाः स्युः द्वौ लघू च स्याताम्, तर्हि मधुपालिनामकं वृत्तम्भवेत् ॥ ७५ ॥ १४०४४ ॥

वेशम्भरि—

ननयनललघूवेशम्भरि भवति ७६ १६०००

I I I I I I I I S S I I I I I

नेति । यत्र प्रतिपाद द्वौ नगणौ यगणनगणौ द्वौ लघू च स्याताम् तद्वृत्त वेशम्भरिनामक भवति ॥ ७६ ॥ १६००० ॥

अकहरि—अकुहरि—

जलधिनगणलघुयुगमकहरि ७७ १६३८४

। । । । । । । । । । । । । । ।

जलधीति । यत्र प्रतिपाद चत्वार नगणाः स्युः द्वौ लघू च स्याताम्, तद्वृत्तम् अकहरिनामक स्यात् । अकुहरिनामाऽप्यस्य ज्ञेयम् ॥ ७७ ॥ १६३८४ ॥

इति शक्वरीप्रस्तारे यथोपपन्न नामानि७७सप्तसप्तति । इति शम् ॥

## अथ पञ्चदशाक्षरा वृत्तिः ।

### १५ अतिशक्करीभेदाः ३२७६८

लीलालेखः—सारङ्गी—कामक्रीडा च—

एकन्यूनौ विद्युन्मालापादौ चेल्लीलालेखः १ १

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

एकेति । चेत् प्रतिपादम् एकेन गुरुणा न्यूनौ द्वौ विद्युन्मालापाद स्याताम्, अर्थात् पञ्चदशगुरवः स्युः इति यावत् , तर्हि लीलालेखनामव वृत्त स्यात् । सारङ्गी-कामक्रीडेति नामद्वयमन्यदप्यस्य बोध्यम् ॥१॥१।

वज्राली—

नागैस्तुरगैर्विश्रामश्चेन्यौ मौ मो वज्राली २ १३

ऽ ऽ । । ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

नागैरिति । चेत् प्रतिपादं नगणयगणौ स्याताम् त्रयः मगणाश्च स्यु अष्टभिः सप्तभिश्च वर्णैः विरतिः स्यात्,तदा वज्रालीनामक वृत्तं स्यात्॥२॥१

स्फोटक्रीडम्—

दशशरविश्रामश्चेन्यौ मौ मः स्फोटक्रीडम् ३ १६

। । । । ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

दशेति । चेत् प्रतिपादं नगणयगणौ स्याताम् त्रय· मगणाश्च स्यु दशभिः पञ्चभिश्चाक्षरैः यतिः स्यात् , तदा स्फोटक्रीडनामक वृत्त स्यात् ॥ ३ ॥ १६ ॥

क्रीडितकटका—

क्रीडितकटका यदि भस्सौ मौ रुद्रैर्वेदैः ४ २२३

ऽ । । । । ऽ । । ऽ ऽ ऽ ऽ ऽ ऽ ऽ

क्रीडितेति । यदि प्रतिपाद भगणसगणौ सगणमगणौ च स्याताम् एको मगणश्च स्यात् एकादशभिः चतुर्भिश्चाक्षरैः यतिः स्यात्, तर्हि क्रीडितकटकानामक वृत्तं स्यात् ॥ ४ ॥ २२३ ॥

चार्वटकम्—

मो भौ मौ चेत्खलु चार्वटक स्याद्दिग्भिर्वाणैः ५ ४३३
s s s s । । s । । s s s s s s

म इति । चेत् प्रतिपादम् एको मगणः द्वौ भगणौ द्वौ मगणौ च स्याताम् दशभिः पञ्चभिश्चाक्षरैः यतिः स्यात्, तदा चार्वटकनामक वृत्तं स्यात् ॥ ५ ॥ ४३३ ॥

आनद्धम्—

दिक्शरैरनसतमकारास्स्युस्तदानद्धम् ६ २२९९
s । s । । । । । s s s । s s s

दिगिति । यदा प्रतिपादं रगणनगणसगणतगणमगणाः स्युः दशभिः पञ्चभिश्चाक्षरैः यतिः स्यात्, तदा आनद्धनामक वृत्त स्यात् ॥६॥२२९९॥

बहुलाभ्रम्—

बहुलाभ्रं सभसभमाश्चेन्नवभिः षड्भिः ७ ३३१६
। । s s । । । । s s । । s s s

बहुलाभ्रमिति । चेत् प्रतिपादं सगणभगणसगणभगणमगणाः स्युः नवभिः षड्भिश्चाक्षरैः यतिः स्यात, तद्वृत्त बहुलाभ्रनामक स्यात् ॥७॥३३१६॥

वाणीभूषा—

नागैरश्वैर्वाणीभूषा ममतनमा यत्र ८ ३८४१
s s s s s s s s । । । । s s s

नागैरिति । यत्र प्रतिपाद द्वौ मगणौ स्याताम् तगणनगणमगणाश्च स्युः तथा अष्टभिः सप्तभिश्चाक्षरैः यतिः स्यात्, तद्वृत्त वाणीभूषानामक स्यात् । अत्र पादान्तस्थ लघु विकल्पेन गुरु ज्ञयम् ॥ ८ ॥ ३८४१ ॥

चित्रा—

चित्रा नामच्छन्दः प्रोक्त चेत्त्रयो मा यकारौ ९ ४६०९
s s s s s s s s s । s s । s s

चित्रेति । चेत् प्रतिपाद त्रयः मगणाः स्युः द्वौ यगणौ च स्याताम्, तदा चित्रानामक छन्दः प्रोक्तम् । पिङ्गलेनेति शेषः ॥ ९ ॥ ४६०९ ॥

चन्द्रलेखा—

म्रौ मो यौ चेद्भवेतां सप्ताष्टकैश्चन्द्रलेखा १० ४६७८

म्राविति । चेत् प्रतिपादं मगणरगणमगणाः द्वौ यगणौ च भवेताम् तथा सप्तभिः अष्टभिश्चाक्षरैः यतिः स्यात्, तर्हि चन्द्रलेखानामकं वृत्तं स्यात् ॥ १० ॥ ४६२५ ॥

मालिनी—

ननमयययुतेयं मालिनी भोगिलोकैः  ११  ४६७२
। । । । । । ऽ ऽ ऽ । ऽ ऽ ऽ । ऽ ऽ

नेति । यत्र प्रतिपादं द्वौ नगणौ मगणयगणौ च स्याताम् तथा यगणश्च स्यात् तथा अष्टभिः सप्तभिश्चाक्षरैः यतिः स्यात्, तत् मालिनीनामकं वृत्तं स्यात् ॥ ११ ॥ ४६७२ ॥

सिंहपुच्छम्—

यकारा भवेयुर्यदा पञ्च तत्सिंहपुच्छम्  १२  ४६८२
। ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ

यकारा इति । यदा प्रतिपादं पञ्च यगणाः भवेयुः, तदा तत् सिंहपुच्छनामकं वृत्तं स्यात् ॥ १२ ॥ ४६८२ ॥

कुमारलीला—

यत्र स्युर्मननरयगणाः कुमारलीला  १३  ५५२६
ऽ ऽ ऽ । । । । । । ऽ । ऽ । ऽ ऽ

यत्रेति । यत्र प्रतिपादं मगणनगणौ स्याताम् तथा नगणरगणयगणा स्युः, तद्वृत्तं कुमारलीलानामक स्यात् ॥ १३ ॥ ५६२५ ॥

दीपकम्—

दीपकवृत्त भवति भतौ नस्तयकारौ  १४  ६६३१
ऽ । । ऽ ऽ । । । । ऽ ऽ । । ऽ ऽ

दीपकेति । यत्र प्रतिपादं भगणतगणनगणतगणयगणाः स्युः, तद्वृत्तं दीपकनामकं स्यात् ॥ १४ ॥ ६६३१ ॥

परिमलम्—

परिमलमेतद्भवति नयौ नजयाश्चेत्  १५  ७१२०
। । । । ऽ ऽ । । । । । ऽ । । ऽ ऽ

परिमलमिति । चेत् प्रतिपाद नगणयगणनगणजगणयगणा भवन्ति, तदा एतत् परिमलनामकं वृत्तम्भवति ॥ १५ ॥ ७१२० ॥

शरकल्पा—

ननसनयगणकृता किल शरकल्पा  १६  ७९३६
। । । । । । । । ऽ । । । । ऽ ऽ

नेति । यत्र प्रतिपादं द्वौ नगणौ सगणमगणयगणाश्च स्युः, तद्वृत्त

एला—

सजना नयौ शरदशयतिरियमेला १७ ८१७२

। । S । S । । । । । । । । S S

यत्र प्रतिपादं सगणजगणनगणाः स्युः नगणयगणौ च स्याताम् तथा पञ्चभिः दशभिश्चाक्षरैः यतिः स्यात्, इयम् एलानाम ज्ञेया ॥१७॥८१७२॥

लास्यकारी—

पञ्च रेफा भवेयुर्यदा लास्यकारी तदा १८ ९३६३

S । S S । S S। S S । S S । S

पञ्चेति । यदा प्रतिपादं पञ्च रगणाः स्युः, तदा लास्यकारी नाम वृत्तं स्यात् ॥ १८ ॥ ९६६३ ॥

मदनमालिका—

मदनमालिका भवति नोरनौ रौ यदा १९ ९६९८

। । । S । S । । । S । S S । S

मदनेति । यदा प्रतिपाद नगणरगणनगणाः द्वौ रगणौ च स्याताम्, तदा मदनमालिकानामक वृत्तं भवति ॥ १९ ॥ ९६८८ ॥

विपिनतिलकम्—

विपिनतिलकं नसनरेफयुग्मैर्भवेत् २० ९६९६

। । । । । S । । । S । S S । S

विपिनेति । यत्र प्रतिपादं नगणसगणनगणाः स्युः द्वौ च रगणौ स्याताम्, तद्विपिनतिलकनामक वृत्तम्भवेत् ॥ २० ॥ ९६९६ ॥

तूणक–पञ्चयामल च—

तूणकं समानिकापदद्वय विनान्तिमम् २१ १०९२३

S । S । S । S । S । S । S । S

तूणकमिति । यत्र प्रतिपादम् अन्तिमम् एक वर्णं विना समानिका-पदद्वयं स्यात् अर्थात् रगणजगणरगणजगणरगणाः स्युः, तद्वृत्त तूण-कनामक स्यात् । पञ्चयामलमित्यस्य नामान्तर ज्ञेयम् ॥ २१ ॥ १०९२३ ॥

प्रभद्रकम्—

भवति नजौ भजौ रसहितौ प्रभद्रकम् २२ ११०८४

। । । । S । S । । । S । S । S

भवति इति । यत्र प्रतिपादं नगणजगणभगणजगणरगणाः स्युः, तत्प्र-भद्रकनामकं वृत्तम्भवति ॥ २२ ॥ ११०८४॥

प्लवङ्गमः—

भौ तगणो भगणो रः प्लुवङ्गमनामकम् २३ ११५७५

भाविति। यत्र प्रतिपादं द्वौ भगणौ तगणभगणरगणाश्च स्युः, तद्वृत्तं प्लवङ्गमनामकं स्यात् ॥ २३ ॥ ११५७५ ॥

मणिहंसः—

मणिहंसवृत्तमिदं भवेत्सजजं भरौ २४ ११६२८

। । ऽ । ऽ । । ऽ । ऽ । । ऽ । ऽ

मणिहंसेति। चेत् अत्र प्रतिपादं सगणजगणौ जगणभगणरगणाश्च स्युः, तर्हि इदं मणिहंसनामकं वृत्तं भवेत् ॥ २४ ॥ ११६२८ ॥

मयूवदना—

स्यादिह मयूवदना यदा भजजं भरौ २५ ११६३१

ऽ । । । ऽ । । ऽ । ऽ । । ऽ । ऽ

स्यादिति। यदा इह प्रतिपादं भगणजगणौ जगणभगणरगणाश्च स्युः, तदा मयूवदनानामकं वृत्तं स्यात् ॥ २५ ॥ ११६३१ ॥

नूतनं—सूक्ष्णं च—

रो नभौ भरगणौ किल चेदिह नूतनम् २६ ११७०७

ऽ । ऽ । । । ऽ । । ऽ । । ऽ । ऽ

र इति। चेत् इह प्रतिपादं रगणनगणभगणाः भगणरगणौ च स्याताम्, तर्हि इदं नूतननामकं वृत्तं स्यात्। सूक्ष्णमपि नामास्यास्ति। द्वारवती सारसिका इत्यपि नामान्तरमस्य बोध्यम् ॥ २६ ॥ ११७०७ ।

सारिणी—

रो नरौ नरगणौ यदा भवति सारिणी २७ ११९६३

ऽ । ऽ । । । ऽ । ऽ । । । ऽ । ऽ

र इति। यदा प्रतिपादं रगणनगणरगणनगणरगणाः स्युः, तदा सारिणीनामकं वृत्तं भवति ॥ २७ ॥ ११९६३ ॥

चमरीचरम्—

नयुगलरगणौ नरौ हि चमरीचरम् २८ ११९६८

। । । । । । ऽ । ऽ । । । ऽ । ऽ

नेति। यत्र प्रतिपादं द्वौ नगणौ रगणनगणरगणाश्च स्युः, तद्वृत्तं चमरीचरं नाम स्यात् ॥ २८ ॥ ११९६८ ॥

निशिपालम्—

वृत्तं निशिपालमिदमत्र भजसा नरौ २९ १२०११

ऽ । । । ऽ । । । ऽ । । । ऽ । ऽ

वृत्तेति। चेत् अत्र प्रतिपादं भगणजगणसगणनगणरगणाः स्युः, त

जननिधिवेला—

जननिधिवेला यदि नो यः सो मः सगणः ३० १२४९६

। ।।। ऽऽ ।। ऽ ऽ ऽ ऽ ।।ऽ

जनेति । यदि प्रतिपादं नगणयगणसगणमगणसगणाः स्युः, तर्हि जननिधिवेलानामकं वृत्तं स्यात् ॥ ३० ॥ १२४९६ ॥

लीलाचन्द्रम्—

लीलाचन्द्रं नागैरश्वैरहृचेन्मौ तयसाः ३१ १३०५७

ऽ ऽ ऽ ऽ ऽ ऽऽऽ।।ऽ ऽ।।ऽ

लीलेति । चेत् इह प्रतिपादं द्वौ मगणौ तगणयगणसगणाश्च स्युः, तथा अष्टभिः सप्तभिश्चाक्षरैः यतिः स्यात्, तदा लीलाचन्द्रनामकं वृत्तं स्यात् ॥ ३१ ॥ १३०५७ ॥

धोरितम्—

धोरितमथ नवर्तुभिश्चेद्भनौ ररसम् ३२ १३५०२

ऽ ।।।। ।ऽ।ऽ ऽ।ऽ ।।ऽ

धोरितमिति । चेत् प्रतिपादं भगणनगणरगणाः रगणसगणौ च स्यातां तथा नवभि षड्भिश्च वर्णैर्यतिः स्यात्तदा धोरितनामकं वृत्तं स्यात् ॥ ३२ ॥ १३५०३ ॥

शान्तसुरभिः—

शान्तसुरभिरियं यदा च भनौ रससम् ३३ १४०१५

ऽ। ।।। ।ऽ ।ऽ। ।ऽ ।।ऽ

शान्तेति । यदा प्रतिपादं भगणनगणरगणाः द्वौ सगणौ च स्याताम्, तदा इयं शान्तसुरभिः नाम ज्ञेया ॥ ३३ ॥ १४०१५ ॥

भ्रमरावलिका—

इह पञ्च सकारकृता भ्रमरावलिका ३४ १४०४४

।। ऽ। ।ऽ।।ऽ ।।ऽ। ।ऽ

इहेति । इह यत्र प्रतिपादं पञ्च सगणाः स्युः, तद्वृत्तं भ्रमरावलिका नामकं स्यात् ॥ ३४ ॥१४०४४ ॥

कर्णलता—

सगणो भद्वयसद्वयमिह कर्णलता ३५ १४२६०

।।ऽ ऽ।।ऽ।।।। ऽ।।ऽ

सगण इति । चेत् इह सगणभगणौ भगणसगणौ च स्याताम् अनन्तरमेकः सगणश्च स्यात्, तदा कर्णलतानामकं वृत्तं भवेत् ॥ ३५॥ १४२६०॥

विशकलिता—

मो भः सो भस्सगण इह स्याद्विशकलिता ३६ १५६०१

म इति । चेत् इह प्रतिपाद मगणभगणसगणभगणसगणाः स्युः तदा इद विशकालेतानामक वृत्त स्यात् ॥ ३६ ॥ १५६०१ ॥

शीर्षविरहिता—

तो यो भयुगं सः स्यादिह शीर्षविरहिता ३७ १५७५७

S S I I S S S I I S I I I I S

त इति । इह चेत् प्रतिपाद तगणयगणभगणाः भगणसगणौ च स्याताम्, तदा शीर्षविरहितानामक वृत्तं स्यात् ॥ ३७ ॥ १५७५७ ॥

शङ्कावली—

शङ्कावली खलु चेत्तभौ चरनसगणाः ३८ १६०५३

S S I S I I S I S I I I I I S

शङ्केति । चेत् प्रतिपादं नगणभगणरगणनगणसगणाः स्युः, तर्हि शङ्कावलीनामक वृत्त स्यात् ॥ ३८ ॥ १६०५३ ॥

शशिकला-स्रक्-मणिगुणनिकरः-मणिनिकरः-शरभम्—

गुरुनिधनमनुलघुरिति शशिकला ३९ १६३८४

I I I I I I I I I I I I I I S

गुर्विति । यत्र प्रतिपाद चतुर्दश लघवः स्युः अन्ते एको गुरुश्च स्यात्, तत् शशिकलानामक वृत्तं स्यात् ॥ ३९ ॥ १६३८४ ॥

स्रगियमपि च रसनवरचितयतिः ।
वसुमुनियतिरिति मणिगुणनिकरः ॥
दशशरविरतिरिति च मणिनिकरः ।
शरशरशरयतिरिति किल शरभम् ॥ १ ॥

स्रगिति । यदि अत्र एव षड्भि· नवभिश्चाक्षरैः यतिः स्यात्, तर्हि इदम् स्रग्नामकं वृत्तम् भवति, तथा च यदि अत्र अष्टभिः सप्तभिश्चाक्षरैः यतिः स्यात् तर्हि इदं मणिगुणनिकरनामक वृत्तम् भवति, तथा यदि अत्र दशभि· पञ्चभिश्चाक्षरैः यति स्यात्, तदा इदम् मणिनिकरनामक वृत्त स्यात, तथा यदि अत्र पञ्चभिः पञ्चभि· पञ्चभिश्चाक्षरै· यति· स्यात्, तदा इदमेव शरभनामक वृत्त बोध्यम् ॥ १ ॥

ऊहिनी—

अष्टसप्तभिरूहिनी चेद्रसौ यजजं च ४० २३१३१

S I S I I S I S S I S I I S I

अष्टेति । चेत् प्रतिपादं रगणसगणयगणाः द्वौ जगणौ च स्याताम् तथा अष्टभिः सप्तभिश्चाक्षरैः यतिः स्यात्, तदा ऊहिनीनामक वृत्तं· स्यात ॥ ४० ॥ २३१३१ ॥

मितसक्थि—

नससजजकारविनिर्मितं मितसक्थि ४१ ३२२६४

। । । । । S । । S । S । । S ।

नेति । यत्र प्रतिपादम् एको नगण' द्वौ सगणौ द्वौ जगणौ च स्याताम् , तद्वृत्तं मितसक्थिनामकं स्यात् ॥ ४१ ॥ ३२२६४ ॥

शरहतिः—

शरामितनगणकृतशरहतिरिति ४२ ३२७६८

। । । । । । । । । । । । । । ।

शरेति । यत्र प्रतिपाद पञ्च नगणाः स्युः, तद्वृत्त शरहतिनामक स्यात् ॥ ४२ ॥ ३२७६८ ॥

इत्यतिशक्करीप्रस्तारे यथोपनतनामानि ४२ द्वाचत्वारिंशत् ।

## षोडशाक्षरा वृत्तिः ।

१६ अष्टिः भेदाः ६५५३६

चन्द्रापीडम्–ब्रह्म च—

विद्युन्मालापादौ यत्र स्यात्तद्वृत्तं चन्द्रापीडम् १

S S S S S S S S S S S S S S S S

विद्युदिति । यत्र प्रतिपादं द्वौ विद्युन्मालापादौ स्याताम् अर्थात् षोडश गुरव स्युः, तद्वृत्त चन्द्रापीडनामक स्यात्, ब्रह्मेति नामान्तरमस्य ज्ञेयम् ॥ १ ॥ १ ॥

माल्योपस्थम्—

त्रिनगणयमगणगुरुसृष्टं माल्योपस्थम् २ १०२४

। । । । । । । । । । S S S S S S

त्रिनगणेति । यत्र प्रतिपाद त्रयो नगणाः यगणमगणगुरवश्च स्युः, तद्वृत्तं माल्योपस्थनामकं स्यात् ॥ २ ॥ १०२४ ॥

कल्पाहारी—

जलनिधिनगणमगणगुरुकल्पाहारी ३ ४०९६

। । । । । । । । । । । । S S S S

जलेति । यत्र प्रतिपाद चत्वार नगणाः मगणगुरू च स्याताम् ,

प्रतीपवल्ली—

सगणद्वयभौयौ च गुरुः प्रतीपवल्ली स्यात् ४ ५५३६

। । ऽ । । ऽ ऽ । । ऽ । ऽ । ऽ ऽ ऽ

सगणेति । यत्र प्रतिपादं द्वौ सगणौ भगणरगणौ यगणगुरू च स्याताम्, तद्वृत्तम्प्रतीपवल्लीनामकं स्यात् ॥ ४ ॥ ५५३६ ॥

आरभटी—

आरभटीयुगभगणनजा यगणो गश्चेत् ५ ७१५९

ऽ । । ऽ । । । । । । ऽ । । ऽ ऽ ऽ

आरभटीति । चेत् प्रतिपादं द्वौ भगणौ नगणजगणौ यगणगुरू च स्याताम्, तदा आरभटीनामकं वृत्तं स्यात् ॥ ५ ॥ ७१५९ ॥

वक्रावलोकः—

ननमररगसृष्टो वक्रावलोकोऽहिनोक्तः ६ ९२८०

। । । । । । ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ

नेति । यत्र प्रतिपादं द्वौ नगणौ मगणरगणौ रगणगुरू च स्याताम्, तद्वृत्तं वक्रावलोकनामकं स्यात्, चक्रावलोक इत्यपि नामान्तरमस्य बोध्यम् ॥ ६ ॥९२८० ॥

प्रवरललितम्—

यमौ नः स्रौ गश्च प्रवरललितं नाम वृत्तम् ७ १०१७८

। ऽ ऽ ऽ ऽ ऽ । । । । । ऽ ऽ । ऽ ऽ

यमाविति । यत्र प्रतिपादं यगणमगणनगणसगणरगणगुरवः स्युः, तत् प्रवरललितं नाम वृत्तं स्यात् ॥ ७ ॥ १०१७८ ॥

अभिधात्री—

सगणत्रयजौ रगुरू यदा तदाऽभिधात्री ८ १०९७२

। । ऽ । । ऽ । । ऽ । ऽ । ऽ । ऽ ऽ

सगणेति । यदा प्रतिपादं त्रयः सगणाः जगणरगणगुरवश्च स्युः, तदा अभिधात्रीनामकं वृत्तं स्यात् ॥ ८ ॥ १०९७२ ॥

वाणिनी—

नजभजरैर्यदा भवति वाणिनी गयुक्तैः ९ ११९८४

। । । । ऽ । ऽ । । । । ऽ । ऽ । ऽ ऽ

नेति । यदा प्रतिपादं नगणजगणभगणजगणरगणगुरवः स्युः, तदा वाणिनीनामकं वृत्तं भवति ॥ ९ ॥ ११९८४ ॥

अनिलोहा—

अनिलोहा भवतीयं यदि सो भस्तयसा गः १० १३१०८

। । ऽ ऽ । । ऽ ऽ । । ऽ ऽ । ऽ ऽ ऽ

अनिलोहेति। यदि प्रतिपादं सगणभगणतगणयगणसगणगुरव भवन्ति, तदा इयम् अनिलोहा नाम भवति ॥ १० ॥ १३१०८ ॥

भोगावलिः—

भोगावलिरियमिह यदि तो नौ यसगाः स्यात् ११ १३३०९
S S I I I I I I I I I S S I I S S

भोगावलिरिति। इह यदि प्रतिपाद तगणनगणौ नगणयगणौ सगणगुरू च स्याताम्, तदा इयम् भोगावलिः नाम स्यात् ॥११॥१३३०९॥

कलधौतपदम्—

कलधौतपद सगणा यदि पञ्चगुरुः स्यात् १२ १४०४४
I I S I I S I I S I I S I I S S

कलेति। यति प्रतिपाद पञ्च सगणाः स्युः एकः गुरुश्च स्यात, तदा कलधौतनामक वृत्तं स्यात् ॥ १२ ॥ १४०४४ ॥

वलिवदनम्—

बलिवदनं स्यान्नो यो मो भः सगणगुरू चेत् १३ १५३७६
I I I I S S S S S S I I I I S S

वलिवदनमिति। चेत् प्रतिपाद नगणयगणमगणभगणसगणगुरवः स्युः, तदा वलिवदननामक वृत्तं स्यात् ॥ १३ ॥ १५३७६ ॥

सुतशिखा—

नन्दैस्तुरगैः सुताशिखा चेत्तयसभसा गः १४ १५५६९
S S I I S S I I S S I I I I S S

नन्दैरिति। चेत् प्रतिपादं तगणयगणसगणभगणसगणगुरव· स्युः तथा नवभिः सप्तभिश्चाक्षरै· यतिः स्यात्, तदा सुतशिखानामक वृत्तं भवेत् ॥ १४ ॥ १५५६९ ॥

परिखायतनम्-परिखापतनञ्च—

परिखायतनं ससस भः सगणगुरू चेत् १५ १५५८०
I I S I I S I I S S I I I I S S

परिखेति। चेत् प्रतिपादं त्रयस्सगणाः भगणसगणगुरवश्च स्यु·, तदा परिखायतनं नाम वृत्तं स्यात्, परिखापतनम् इत्यपि नामास्य ज्ञेयम् ॥ १५ ॥ १५५८० ॥

मालावलयम्—

उक्तं मायावलयमिदं चेन्मभसभसा गः १६ १५६०१
S S S S I I I I S S I I I I S S

उक्तमिति। चेत् प्रतिपाद मगणभगणसगणभगणसगणगुरवः स्युः,

भीमावर्त्तः—

भीमावर्त्तो भवति च यदि मभननमा गः १७ १६३६९

S S S S । । । । । । । । । । S S

भीमावर्त्त इति । यदि प्रतिपादं मगणभगणनगणा नगणसगणगुरवश्च स्युः, तदा भीमावर्त्तनामकं वृत्तं भवति ॥ १७ ॥ १६३६६ ॥

शिशुभरणम्—

जलधिनगणसगणगुरुशिशुभरण स्यात् १८ १६३८४

। । । । । । । । । । । । । । S S

जलधीति । यत्र प्रतिपाद चत्वारः नगणाः स्युः सगणगुरू च स्याताम्, तद्वृत्तं शिशुभरणनामकं स्यात् ॥ ॥१८ ॥ १६३८४ ॥

गरुडरुतम्—

गरुडरुत नजौ भजतगा यदा स्युस्तदा १९ १९३७६

। । । । S । S । । । S । S S । S

गरुडेति । यदा प्रतिपादं नगणजगणभगणजगणतगणगुरवः स्युः, तदा गरुडरुतनामक वृत्तं स्यात् ॥ १९ ॥ १९३७६ ॥

नराचः—

प्रमाणिकापदद्वय भवेन्नराचसंज्ञकम् २० २१८४६

। S । S । S । S । S । S । S । S

प्रमाणिकेति । यत्र प्रतिपादं प्रमाणिकापदद्वय स्यात् अर्थात् जगण रगणजगणरगणजगणगुरवः स्युः, तद्वृत्तं नराचसंज्ञक भवेत् ॥२१८४६॥

तरवारिका—

नससजजगा खलु चेत्तदा तरवारिका २१ २३२६४

। । । । । S । । S । S । । S । S

नेति । चेत् प्रतिपाद नगणसगणौ सगणजगणौ जगणगुरू च स्याताम्, तदा तरवारिकानामकं वृत्त स्यात् ॥ २१ ॥ २३२६४ ॥

कमलपरम्–कमलकरम्–कमठकरञ्च—

कमलकरं स्यान्नयनयभा गो यर्हि तदा २२ २५५५२

। । । । S S । । । । S S S । । S

कमलेति । यर्हि प्रतिपाद नगणयगणौ नगणयगणौ भगणगुरू च स्याताम्, तदा कमलकरनामकं वृत्तं स्यात्, कमलपरम्–कमठकरम् इति नामद्वयमन्यदप्यस्य ज्ञेयम् ॥ २२ ॥ २५५५२ ॥

त्रोटकम –

नजरभभा गुरुर्यदा त्रोटकवृत्तमिदम् २३ २७८२४

। । । । S । S । S S । । S । । S

नेति। यदा प्रतिपादं नगणजगणरगणभगणाः स्युः भगणगुरू च स्याताम्, तदा इदं त्रोटकवृत्तं स्यात् ॥ २३ ॥ २७८२४ ॥

खगतिः-नीलम्-विशेषिका च—

पञ्चभकारयुता खगतिर्यदि चान्तगुरुः २४ २८०८७
S I I S I I S I I S I I S I I S

पञ्चेति। यदि प्रतिपादम् पञ्च भगणाः स्युः एकः गुरुश्च स्यात्, तर्हि खगतिनामकं वृत्तं स्यात्। नीलम् विशेषिका चेति नामद्वयमन्यदप्यस्यास्ति ॥ २४ ॥ २८०८७ ॥

कलहकरम्—

जलनिधिनभगुरु कलहकरं भवति २५ २८६७२
I I I I I I I I I I I I S I I S

जलेति। यत्र प्रतिपाद चत्वारः नगणाः स्युः भगणगुरू च स्याताम्, तद्वृत्तं कलहकरनामकम्भवति। अत्र पादान्तस्थं लघु विकल्पेन गुरु बोध्यम् ॥ २५ ॥ २८६७२ ॥

मदनललिता—

म्भौ नो म्नौ गो मदनललिता वेदैः षड्तुभिः २६ २९१६९
S S S S S I I I I I S S S I I I S

म्भाविति। यत्र प्रतिपादं मगणभगणनगणमगणनगणगुरवः स्युः तथा चतुर्भिः षड्भिः षड्भिश्चाक्षरैः विरतिः स्यात्, तद्वृत्त मदनललितानामकं भवेत् ॥ २६ ॥ २९१६९ ॥

नरशिखी—

नरशिखी नभजसा नगणगौ यदि तदा २७ ३०५८४
I I I S I I I S I I I S I I I S

नरेति। यदि प्रतिपाद नगणभगणजगणसगणनगणगुरवः स्युः, तदा नरशिखानाम वृत्त स्यात् ॥ २७ ॥ ३०५८४ ॥

चकिता—

भात्समतनगैरष्टच्छेदैः स्यादिह चकिता २८ ३०७५१
S I I I I S S S S S S I I I I S

भादिति। चेत् इह प्रतिपादं भगणसगणमगणतगणनगणगुरव स्युः तथा अष्टभिः अष्टभिश्चाक्षरैः यतिः स्यात्, तर्हि इदं चकितानामक वृत्तम्बोध्यम् ॥ २८ ॥ ३०७५१ ॥

सारवरोहा—

सारवरोहा भवति यदा भस्तनतनगाः २९ ३१२०७
S I I S S I I I I S S I I I I S

सारेति । यदा प्रतिपाद भगणतगणनगणतगणनगणगुरवः स्युः तदा सारवरोहानामकं वृत्तं स्यात् ॥ २९ ॥ ३१२०७ ॥

ऋषभगजविलसितम्—

भ्रत्रिनगैः स्वराङ्कमृषभगजविलसितम् ३० ३२७२७

S I I S I S I I I I I I I I I I S

भ्रेति । यत्र प्रतिपाद भगणरगणौ त्रयः नगणाः एको गुरुश्च स्यात तथा सप्तभिः नवभिश्चाक्षरैः यतिः स्यात्, तद्वृत्त ऋषभगजविलसित नामक भवेत् ॥ ३० ॥ ३२७२७ ॥

दन्तालिका—

दन्तालिका सा तो मो रमौ यो लैकं भवेदत्र ३१ ३६९९७

S S I S S S S I S S S S I S S I

दन्तालिकेति । चेत् अत्र प्रतिपादम् तगणमगणरगणमगणयगणलघवः स्युः, तर्हि सा इयम् दन्तालिकानाम भवेत ॥ ३१ ॥ ३६९८७ ॥

कल्पधारि-चारि च—

रत्रय चेत्ततो जश्च रश्च लश्च कल्पधारि ३२ ४३६६७

S I S S I S S I S I S I S I S I

रत्रयमिति । चेत् प्रतिपादम् त्रयो रगणाः ततो जगणरगणलघवः स्युः, तदा कल्पधारिनामक वृत्तं स्यात् । चारि इति नामान्तरमस्य ज्ञेयम् ॥ ३२ ॥ ४३६६७ ॥

चित्रं-चञ्चला च—

चित्रसंज्ञमीरितं समानिकापदद्वयं तु ३३ ४३६९१

S I S I S I S I S I S I S I S I

चित्रेति । यत्र प्रतिपादं समानिकापदद्वय स्यात् अर्थात् रगणजगणरगणजगणरगणलघवः स्युः, तद्वृत्तं चित्रसज्ञक स्यात् । चञ्चलेति नामान्तरमस्य ज्ञेयम् ॥ ३३ ॥ ४३६९१ ॥

कुल्यावृत्तं च-कुल्यावर्त्तश्च—

कुल्यावर्त्तं षड्भिर्दशभिर्मौ सभता लो यदि ३४ ५२४१७

S S S S S S I I S S I I S S I I

कुल्येति । यदि प्रतिपादं द्वौ मगणौ तथा सगणभगणतगणलघव. स्युः तथा षड्भिः दशभिश्च वर्णैः विरतिः स्यात्, तदा कुल्यावर्त्तनामक भवेत् । कुल्यावृत्तमिति नामान्तरमस्य ज्ञेयम् ॥ ३४ ॥ ५२४१७ ॥

अचलधृतिः—

द्विगुणितवसुलघुभिरचलधृतिरिह ३५ ६५५३६

I I I I I I I I I I I I I I I I

द्विगुणितेति । इह यत्र प्रतिपादं षोडशलघवः स्युः, तद्वृत्तम् अचलधृतिनामकं भवेत् ॥ ३५ ॥ ६५५३६ ॥

इत्यष्टिप्रस्तारे यथाप्तिनामानि ३५ पञ्चत्रिंशत् ॥ इति शम् ॥

## अथ सप्तदशाक्षरा वृत्तिः ।

### १७ अत्यष्टिः । भेदाः १३१०७२

मानाक्रान्ता—

पञ्च स्युर्मा गौ चेद्यत्र स्यात्तद्वृत्तं मानाक्रान्ताख्यम् १
S S  S S S  S S S  S  S S S  S S S S S

पञ्चेति । चेत् यत्र प्रतिपादं पञ्च मगणाः स्युः द्वौ गुरू च स्याताम्, तर्हि तद्वृत्तं मानाक्रान्ताख्यं स्यात् ॥ १ ॥ १ ॥

वीरविश्रामः—

ननरनरगगा यदा भवति वीरविश्रामः २ ११९६८
I I I I I I S I S I I I S I S S S

नेति । यदा प्रतिपादं द्वौ नगणौ ततः रगणनगणरगणाः ततो द्वौ गुरू च स्याताम्, तदा वीरविश्रामनामकं वृत्तम्भवेत् ॥ २ ॥ ११९६८ ॥

वल्वजं-वल्गुज च—

वल्वजवृत्तमिदं भद्वयतनसगुयुग्मं चेत् ३ १६१८३
S I I S I I S S I I I I I I S S S

वल्वजेति । चेत् अत्र प्रतिपाद, द्वौ भगणौ ततः तगणनगणसगणाः ततो द्वौ गुरू स्याताम्, तदेदं वल्वजनामक वृत्त स्यात् । वल्गुजमिति नामान्तरमस्य बोध्यम् ॥ ३ ॥ १६१८३ ॥

कूराशनं-कुराशनं-कूरासनं-कुरासनं च—

कूरासनमिह वृत्तं तनतनसगगैः सृष्टम् ४ १६१८९
S S I I I I S S I I I I I I S S S

कूरेति । चेत् इह प्रतिपादं तगणनगणतगणनगणसगणाः स्युः, ततो द्वौ गुरू च स्याताम्, तदा कूरासनं नाम वृत्तं स्यात् । कूराशनम्-कूरासनम्-कूराशनं चेति नामत्रयमन्यदप्यस्य बोध्यम् ॥ ४ ॥ १६१८९ ॥

मन्दाक्रान्ता—

मन्दाक्रान्ताऽम्बुधिरसनगैर्मो भनौ तौ गयुग्मम् ५ १८९२९
S S S S I I I I I S S I S S I S S

तगणौ द्वौ गुरू च स्याताम् तथा चतुर्भि षड्भि सप्तभिश्च वर्णैर्विरति स्यात्, तद्वृत्त मन्द्राक्रान्तानामक भवेत् ॥ ५ ॥ १८९२४ ॥

कामरूपम्—

मो रो भो नस्तगौ गौ भवति किल चेत्कामरूपम् ६ २०३६८
S S S S I S S I I I I I S S I S S

म इति । चेत् प्रतिपाद मगणरगणभगणनगणतगणा स्युः ततो द्व गुरू स्याताम्, तर्हि कामरूपनामक वृत्तम्भवति ॥ ६ ॥ २०३६८ ॥

अतिशायिनी—

दिग्गैरतिशायिनी भवेत्ससजभा जगौ गः ७ २३९८८
I I S I I S I S I S I I I S I S S

दिगिति । यत्र प्रतिपाद द्वौ सगणौ ततो जगणभगणजगणा. ततो द्वौ गुरू च स्याताम् तथा दशभि सप्तभिश्च वर्णैं विरति. स्यात, तद्वृत्तम् अतिशायिनीनामक भवेत् ॥ ७ ॥ २३९०० ॥

शायिनी—

नसजभजगा गुरुर्यदा भवति शायिनी सा ८ २३९०४
I I I I I S I S I S I I I S I S S

नेति । यदा प्रतिपाद नगणसगणजगणा स्यु द्वौ गुरू च स्याताम् तदा सा शायिनीनाम वृत्तव्यक्तिर्भवति ॥ ८ ॥२३९०४ ॥

सलेखा —

ननमननगगाश्चेत्स्युः किल भवति सलेखा ९ ३२३२०
I I I I I I S S S I I I I I I S S

नेति । चेत् प्रतिपाद द्वौ नगणौ ततो मगण ततो द्वौ नगणौ ततो द्व गुरू च स्याताम्, तदा सलेखानामक वृत्त भवति ॥ ९ ॥ ३२३२० ॥

तितिक्षा—

चेद्भनयननगगाः स्युः किल भवति तितिक्षा १० ३२३८
S I I I I I I S S I I I I I I S S

चेदिति । चेत्प्रतिपाद भगणनगणयगणा स्यु ततो द्वौ नगणौ तत द्वौ गुरू च स्याताम्, तदा तत् तितिक्षानामक वृत्त भवति ॥१०॥३२३८

हारिणी—

वेदर्त्वश्वैर्मभनयलगाश्चेत्तदा हारिणी ११ ३७८७
S S S S I I I I I I S S I S S I S

वेदेति । चेत्प्रतिपाद मगणभगणनगणाः स्यु., ततो द्वौ यगणौ स्याताम् ततो लघुगुरू च स्याताम् तथा चतुर्भिः षड्भि. सप्तभिश्च वर्णै. वि

पृथ्वी—

जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः १२ ३८७५०

। ऽ । । । ऽ । ऽ। । । ऽ । ऽ ऽ । ऽ

जसाविति। यत्र प्रतिपाद जगणसगणजगणसगणयगणलघुगुरवः स्युः तथा अष्टभिः नवभिश्च वर्णैः यतिः स्यात्, तदा पृथ्वीनामक वृत्तं भवति ॥ १२ ॥ ३८७५० ॥

बालविक्रीडितम्—

चेद्भसजसया लगौ भवति बालविक्रीडितम् १३ ३८७५१

ऽ । । । । ऽ । ऽ । । । ऽ । ऽ ऽ । ऽ

चेदिति। चेत् प्रतिपाद भगणसगणजगणसगणयगणलघुगुरवः स्युः, तदा बालविक्रीडित नाम वृत्तम् भवति ॥ १३ ॥ ३८७५१ ॥

मालाधरः—

नसजसयला गुरुर्भवति यत्र मालाधरः १४ ३८७५२

। । । । । ऽ । ऽ। । । ऽ। ऽ ऽ । ऽ

नेति। यत्र प्रतिपादं नगणसगणजगणसगणयगणलघुगुरवः स्युः तद्वृत्तं मालाधरनामक भवति ॥ १४ ॥ ३८७५२ ॥

कालसारोद्धतः—

जतौ जसौ यो लघुगौ भवति कालसारोद्धतः १५ ३८७५८

। ऽ । ऽ ऽ । । ऽ । । । ऽ । ऽ ऽ । ऽ

जताविति। यत्र प्रतिपाद जगणतगणजगणसगणयगणलघुगुरवः स्युः, तद्वृत्तं कालसारोद्धतनामक भवति ॥ १५ ॥ ३८७५८ ॥

हरिणी—

नसमरसला गः षड्वेदैर्हयैर्हरिणी मता १६ ४६११२

। । । । । ऽ ऽ ऽ ऽ ऽ । ऽ । । ऽ । ऽ

नेति। यत्र प्रतिपाद नगणसगणमगणरगणसगणलघुगुरवः स्युः तथा षड्भिः चतुर्भिः सप्तभिश्च वर्णैर्विरतिः स्यात्, सा हरिणीनाम छन्दो व्यक्तिः मता इष्टा ॥ १६ ॥ ४६११२ ॥

भाराक्रान्ता—

भाराक्रान्ता मभनरसला गुरुः श्रुतिषड्हयैः १७ ४६५७७

ऽ ऽ ऽ ऽ । । । । । ऽ । ऽ । । ऽ । ऽ

भाराक्रान्तेति। यत्र प्रतिपादं मगणभगणनगणरगणसगणलघुगुरवः स्युः तथा चतुर्भिः षड्भिः सप्तभिश्च वर्णैः यतिः स्यात, तद्वृत्तं भारा-

विरुद्रुतम्—

मो भः सो भो विरुद्रुतं चेत्तलगा यत्र भवेत् १८ ५२४६५

S S S S I I I I S S I I S S I I S

म इति । चेत् यत्र प्रतिपाद् मगणभगणसगणभगणतगणलघुगुरव स्युः, तदा तद्वृत्तं विरुद्रुतनामकं भवेत् ॥ १८ ॥ ५२४६५ ॥

कासारम्—

कासार स्यान्मौ तो नस्तो लघुगुरु नागैर्नवभिः १९ ५२९९३

S S S S S S S S I I I I S S I I S

कासारमिति । यत्र प्रतिपाद द्वौ मगणौ स्याताम् तदनु तगणनगण तगणलघुगुरवः स्युः तथा अष्टभिः नवभिश्च वर्णैः विरतिः स्यात्, तद्वृत्तं कासारनामकं भवेत् ॥ १९ ॥ ५२९९३ ॥

वंशलः—

वंशलवृत्तं खलु चेद्भतजा जयुगं लगुरू २० ५६१६७

S I I S S I I S I I S I I S I I S

वंशलेति । चेत् प्रतिपाद भगणतगणौ ततो जगणत्रयं लघुगुरू च स्याताम्, तदा वंशलनामक वृत्तं भवेत् ॥ २० ॥ ५६१६७ ॥

नर्दटकम्-कोकिलक च—

इह खलु चेन्नजौ भजजला गुरु नर्दटकम् २१ ५६२४०

I I I I S I S I I I S I I S I I S

इहेति । इह चेत् प्रतिपाद् नगणजगणौ ततो भगणजगणौ ततो जगणलघुगुरवश्च स्युः, तदा नर्दटकनामक वृत्त भवेत्, अस्यैव कोकिलमिति नामान्तर बोध्यम्, केचित्तु सप्तभिः दशभिश्च वर्णैरत्र यतिश्चेद्भवेत् तदा नर्दटकनामकवृत्तमिद भवेत्, सप्तभिः षड्भिः चतुर्भिश्च वर्णैर्यतिः स्याच्चेत्तदेद कोकिलकनामक वृत्त भवेदिति वदन्ति, तथा चोक्तं वृत्तरत्नाकरे—

"हयदशभिर्नजौ भजजला गुरु नर्दटकम्" इति ।

"मुनिगुहकार्णवः कृतयति वद कोकिलकम्" इति च ॥

छन्दोमञ्जर्यां च—

"यदि भवतो नजौ भजजला गुरु नर्दटकम्" ।

हयऋतुसागरैर्यतियुतं यदि कोकिलकम्" इति च ॥

तथा केचित् नर्दटकमित्यत्र नर्कुटकमिति पठन्ति तेषाम्मते नर्कुटकमिति नाम बोध्यम् ॥ २१ ॥ ५६२४० ॥

शिखरिणी—

रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी २२ ५९३३०

रसैरिति । यत्र प्रतिपाद यगणमगणनगणभगणलघुगुरवः स्युः तथा षड्भिः एकादशभिश्च वर्णैर्यतिः स्यात्, तद्वृत्तं शिखरिणीनामकं ज्ञेयम् ॥ २२ ॥ ५९३३० ॥

विधुरविरहिता—

यदि बाणार्कैः सतया भनौ लगौ विधुरविरहिता २३ ६४६१२

। । ऽ ऽ ऽ । । ऽ ऽ ऽ । । । । । । । ऽ

यदीति । यदि प्रतिपादं सगणतगणयगणभगणनगणलघुगुरवः स्युः तथा पञ्चभिः द्वादशभिश्च वर्णैर्यतिः स्यात्, तदा तद्वृत्तं विधुरविरहितानामकं भवेत् ॥ २३ ॥ ६४६१२ ॥

शुकवनिता-शिशुकवनिता च—

सगणौ भगणौ न्लौ गुरु यत्र च शिशुवनिता २४ ६४९२४

। । ऽ । । ऽ ऽ । । ऽ । । । । । । ऽ

सगणाविति । यत्र प्रतिपादं द्वौ सगणौ द्वौ भगणौ च स्याताम् ततो नगणलघुगुरवश्च स्युः, तद्वृत्तं शिशुवनितानामकं बोध्यम्, शुकवनितेति नामान्तरमस्य ज्ञेयम् ॥ २४ ॥ ६४९२४ ॥

वाहान्तरितम्—

वाहान्तरितमिदं तनभा भनलगुरु यदा २५ ६४९४७

ऽ ऽ । । । । । ऽ । । ऽ । । । । । । ऽ

वाहेति । यदा प्रतिपादं तगणनगणभगणाः भगणनगणलघुगुरवश्च स्युः, तदेदं वाहान्तरितनामक वृत्त स्यात् ॥ २५ ॥ ६४९४७ ॥

वंशपत्रपतितम्-वंशपत्रं च—

दिङ्मुनिवंशपत्रपतितं भरनभनलगैः २६ ६४९८३

ऽ । । ऽ । ऽ । । । ऽ । । । । । । ऽ

दिगिति । यत्र प्रतिपाद भगणरगणनगणभगणनगणलघुगुरवः स्युः तथा दशभिः सप्तभिश्च वर्णैः यतिः स्यात्, तद्वृत्त वंशपत्रपतितनामकं भवेत्, वंशपत्रमित्यपि नामास्य ज्ञयम् ॥ २६ ॥ ६४९८३ ॥

कर्णस्फोटम्—

प्रभवति कर्णस्फोटं नयतनमा गो लैकं च २७ ६९३९२

। । । । ऽ ऽ ऽ ऽ । । । । ऽ ऽ ऽ ऽ ।

प्रभवतीति । यत्र प्रतिपाद नगणयगणतगणनगणमगणगुरुलघवः स्युः तद्वृत्तं कर्णस्फोटनामक भवति ॥ २७ ॥ ६९३९२ ॥

प्रतीहारः—

पञ्च रेफा गलौ स्युस्तदा स्यात्प्रतीहारनामाऽत्र २८ ७४८६९

पञ्चेति। अत्र यदा प्रतिपादं पञ्च रगणाः ततो गुरुलघू च स्याताम्, तदा प्रतीहारनामकं वृत्तं स्यात् ॥ २८ ॥ ७४८९९ ॥

कान्तारम्—

यमौ नः सो रो गो लघु भवति कान्तारनामात्र २९ ७५७१४
। S S S S S । । । । । S S । S S ।

यम इति। अत्र चेत् प्रतिपादं यगणमगणनगणसगणरगणगुरुलघवः स्युः, तदा कान्तारनामकं वृत्तं भवति ॥ २९ ॥ ७५७१४ ॥

फल्गुः—

रसषट्पञ्चभिरिह सो भः सभसगलाः फल्गु ३० ८११४०
। । S S । । । । S S । । । । S S ।

रसेति। इह चेत् प्रतिपादं सगणभगणसगणभगणसगणगुरुलघवः स्युः तथा षड्भिः षड्भिः पञ्चभिश्च वर्णैर्यतिः स्यात्, तदा फल्गुनामकं वृत्तं ज्ञेयम् ॥ ३० ॥ ८११४० ॥

अचलनयनम्—

शरमितनललकृतमचलनयनमिह ३१ १३१०७१
। । । । । । । । । । । । । । । । । ।

शरेति। इह चेत् प्रतिपादं पञ्च नगणाः स्युः द्वौ लघू च स्याताम् तदा अचलनयननामकं वृत्तं स्यात् ॥ ३१ ॥ १३१०७१ ॥

इति अत्यष्टिप्रस्तारे यथोपनतनामानि ३१एकत्रिंशत् ॥ इति शम् ॥

# अष्टादशाक्षरा वृत्तिः।

## १८ धृतिः। भेदाः २६२१४४

मञ्जीरा—

मौ भो मः सो मः स्युश्चेत्खलु मञ्जीरा फणिपेन प्रोक्ता १ १२६७
S S S S S S S । । S S S । । S S S S

माविति। चेत् प्रतिपादं द्वौ मगणौ ततो भगणः ततः सगणमग च स्याताम्, तदा मञ्जीरानाम वृत्तव्यक्तिः फणिपेन प्रोक्ता॥१॥१२६७

परामोदः—

यकारः सगणौ जनमा भवेयुरिह परामोदः २ ३१४५
। S S । । S । । S । S । । । । S S S

यकार इति। इह चेत् प्रतिपादं यगणसगणौ ततस्सगणजगणौ त

विलुलितवनमाला—

**ननमनमयुक्तेय विलुलितवनमाला स्यात्** ३ ३२३२०

। । ।। । । ऽऽऽ । । । । । । ऽ ऽ ऽ

नेति । यत्र प्रतिपाद द्वौ नगणौ मगणनगणौ नगणमगणौ च स्याताम्, तद्वृत्त विलुलितवनमालानामकं स्यात् ॥ ३ ॥ ३२३२० ॥

नीलशार्दूलम्–नीलशालूरम्–नीलमालूर च—

**ननमययय कारैर्निर्मितं नीलशार्दूलवृत्तम्** ४ ३७४४०

। ।। । । । ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ

नेति । यत्र प्रतिपादं द्वौ यगणौ मगणयगणौ द्वौ यगणौ च स्याताम्, तद्वृत्तं नीलशार्दूलनामकं स्यात्, नीलशालुरम्–नीलमालुरम्–इति नामद्वयमन्यदप्यस्य ज्ञेयम् ॥ ४ ॥ ३७४४० ॥

क्रीडचन्द्रम्–वारवाणावृत्तम्–क्रीडगा–चन्द्रिका च—

**यदा षड्यकारा भवेयुस्तदा क्रीडचन्द्राख्यवृत्तम्** ५ ३७४५०

। ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ

यदेति । यदा प्रतिपादं षड् यगणाः भवेयुः, तदा क्रीडचन्द्रनामकं वृत्तं स्यात वारवाणावृत्तम् क्रीडगा चन्द्रिका चेति नामत्रयमन्यदप्यस्य ज्ञेयम् ॥ ५ ॥ ३७४५० ॥

कुसुमितलतावेल्लिता—

**स्याद् भूतर्त्वश्वैः कुसुमितलतावेल्लिता म्तौ नयौ यौ** ६ ३७८५७

ऽ ऽऽऽ ऽ । । । । । ऽ ऽ । ऽ ऽ । ऽ ऽ

स्यादिति । यत्र प्रतिपादं मगणतगणौ नगणयगणौ द्वौ यगणौ च स्याताम्, तथा पञ्चभिः षड्भिः सप्तभिश्च वर्णैर्यति स्यात्, तद्वृत्तं कुसुमितलतावेल्लितानामकं स्यात् ॥ ६ ॥ ३७८५७ ॥

चन्द्रलेखा–चित्रलेखा च—

**मन्दाक्रान्ता नपरलघुयुता कीर्तिता चन्द्रलेखा** ७ ३७८७३

ऽ ऽ ऽ ऽ । । । । । । ऽ ऽ । ऽ ऽ । ऽ ऽ

मन्दाक्रान्तेति । नपरलघुयुता नगणात् परः यः लघुः तेन युता मन्दाक्रान्ता एव चन्द्रलेखा कीर्तिता, अर्थात् यत्र प्रतिपाद मगणभगणौ नगणयगणौ द्वौ यगणौ च स्याताम्, तद्वृत्तं चन्द्रलेखानामकं स्यात्, चित्रलेखेति नामान्तरमस्य बोध्यम् ॥ ७ ॥ ३७८७३ ॥

सत्केतुः—

**सत्केतुर्मननजरयगणा यदा भवेत्तदानीम्** ८ ४४०२५

ऽ ऽ ऽ । । । । । । । ऽ । ऽ । ऽ । ऽ ऽ

सदिति । यदा प्रतिपादं मगणनगणौ नगणजगणौ रगणयगणौ च

सिन्धुसौवीरम्—

रेफषट्कं यदा स्यात्तदा सिन्धुसौवीरवृत्तं भवेत् ९ ७४८९९
S I S S I S S I S S I S S I S S I S

रेफेति। यदा प्रतिपादं षड्रगणाः स्युः तदा सिन्धुसौवीरनामकं वृत्तं भवेत् ॥ ९ ॥७४८९९ ॥

नाराचं-महामालिका च—

इह ननरचतुष्कसृष्टं तु नाराचमाचक्षते १० ७४९४४
I I I I I I S I S S I S S I S S I S

इहेति। इह चेत् प्रतिपादं द्वौ नगणौ स्याताम् ततश्चत्वारः रगणा स्युः तदा नाराचनामक वृत्तम् आचक्षते वदन्ति छन्दः शास्त्रज्ञाः इति शेषः, अस्य महामालिकेति नामान्तरं बोध्यम् ॥ १० ॥ ७४९४४ ॥

नन्दनम्—

नजभजरैस्तु रेफसहितैः शिवैर्हयैर्नन्दनम् ११ ७६७२०
I I I I S I S I I I S I S I S S I S

नेति। यत्र प्रतिपादं नगणजगणौ भगणजगणौ द्वौ रगणौ च स्याताम् तथा एकादशभिः सप्तभिः वर्णैश्च यतिः स्यात् तत् वृत्त नन्दननामकं भवेत् ॥ ११ ॥ ७६७२० ॥

पर्विणी—

ननरनररनिर्मिता नवयतिर्भवेत्पर्विणी १२ ७७५०४
I I I I I I S I S I I I S I S I S

नेति। यत्र प्रतिपाद द्वौ नगणौ रगणनगणौ द्वौ रगणौ च स्याताम् तथा नवभिर्नवभिश्च वर्णैः यतिःस्यात्, तद्वृत्त पर्विणीनामकं भवेत् ॥ १२ ॥ ७७५०४ ॥

क्रोडक्रीडम्—

क्रोडक्रीडं मभननररगणसृष्टकाय भवेत् १३ ७७८०९
S S S S I I I I I I I I S I S S I S

क्रोडेति। यत्र प्रतिपादं मगणभगणौ द्वौ नगणौ द्वौ रगणौ च भवेताम्, तद्वृत्तं क्रोडक्रीडनामक स्यात् ॥ १३॥ ७७८०९ ॥

वसुपदमञ्जरी—

वसुपदमञ्जरी भवति यत्र नजौ भजौ जरौ १४ ८९००
I I I I S I S I I I S I I S I S I S

वस्विति। यत्र प्रतिपाद नगणजगणौ भगणजगणौ जगणरगणौ

[ह]रिणप्लुतम्—

[भ]ात्सो जौ भरसंयुतौ करिवाणकैर्हरिणप्लुतम् १५ ९३०१७

S S IIS I S I I S I S I I S I S

मादिति। यत्र प्रतिपाद मगणसगणौ द्वौ जगणौ भगणरगणौ च [भ]वेताम् तथा अष्टभिः पञ्चभि· पञ्चभिश्च वर्णैः यतिः स्यात्, तद्वृत्तं [ह]रिणप्लुतनामक ज्ञेयम् ॥ १५ ॥ ९३०१७ ॥

मत्तकोकिलम्-चर्चरी च-कूर्पर च-चञ्चरी च-कापि—

[म]त्तकोकिलवृत्तमेतदवेहि रः सजजं भरौ १६ ९३०१९

S I S I I S I S I I S I S I I S I S

मत्तेति। यत्र प्रतिपादं रगणसगणौ द्वौ जगणौ भगणरगणौ च भवे[त]ाम्, तद्वृत्तं मत्तकोकिलनामक स्यात् इत्यवेहि, चर्चरी-कूर्परम् च [च]ञ्चरी चेति नामत्रयमन्यदप्यस्य ज्ञेयम् ॥ १६ ॥ ९३०१९ ॥

षट्पदेरितम्—

भवति षट्पदेरितमिदं नरौ नरगणौ नरौ १७ ९५७०४

I I I S I S I I I S I S I I I S I S

भवतीति। यत्र प्रतिपादं नगणरगणौ पुन· नगणरगणौ पुनः नगणर-गणौ च भवेताम्, तद्वृत्त षट्पदेरितनामक भवति ॥ १७ ॥ ९५७०४ ॥

पार्थिवम्—

जसौ जमनरा यदा रविरसैर्भवति पार्थिवम् १८ ९६०९४

I S I I I S I S I I I S I I I S I S

जसाविति। यदा प्रतिपाद जगणसगणौ पुनः जगणसगणौ ततो· नगणरगणौ च स्यातां तथा द्वादशभि· षड्भिश्च वर्णैः यतिः स्यात्, तदा पार्थिवनामक वृत्तम्भवति ॥ १८ ॥ ९६०९४ ॥

परिपोषकम्—

सगणा यदि षट्परिपोषकवृत्तमिदं हि तदा १९ ११२३४८

I I S I I S I I S I I S I I S I I S

सगणा इति। यदि प्रतिपादं षट् सगणाः स्युः, तदा इदम् परिपोषक-नामक वृत्तम् भवेत ॥ १९ ॥ ११२३४८ ॥

शार्दूलललितम्—

मः सो जः सतसा दिनेशऋतुभिः शार्दूलललितम् २० ११६५६९

S S S I I S I S I I I S S S I I S

म इति। यत्र प्रतिपादं मगणसगणजगणसगणतगणसगणाः स्यु[ः] तथा द्वादशभिः षड्भिश्च वर्णैः यतिः स्यात्, तद् वृत्तं शार्दूलललि[त] [न]ामकं भवेत ॥ २० ॥ ११६५६९ ॥

अश्वगतिः—

पञ्च भकारकृताश्वगतिर्यदि चान्तसनिरता २१ १२६३९१

ऽ। ।ऽ।। ऽ।।ऽ।। ऽ।। ।।ऽ

पञ्चेति। यदि प्रतिपादं पञ्च भगणाः स्युः ततः एकः सगणः स्यात् तदा अश्वगतिनामकं वृत्तम्बोध्यम् ॥ २१ ॥ १२६३९१ ॥

अर्धान्तरालापि-अद्धान्तरालापि च—

षड्भिस्तकारैरिदं निर्मितं वृत्तमर्द्धान्तरालापि २२ १४९७२७

ऽ ऽ ।ऽऽ।ऽ ऽ ।ऽ ऽ।ऽऽ ।ऽऽ ।

षड्भिरिति। चेत् अत्र प्रतिपादं षट् तगणाः भवेयुः, तदा इदम् अर्द्धान्तरालापि नामकं वृत्तं भवेत्, अद्धान्तरालापि इत्यपि नामास्य बोध्यम् ॥ २२ ॥ १४९७२७ ॥

पतङ्गपादः—

पतङ्गपादस्तदा जस्तकारा भवेयुर्यदा पञ्च २३ १४९७९८

।ऽ।ऽऽ। ऽ ऽ। ऽऽ ।ऽऽ।ऽ ऽ।

पतङ्गेति। यदा प्रतिपादम् एकः जगणः स्यात् ततः पञ्च तगणाः भवेयुः, तदा पतङ्गपादनामकं वृत्तं भवेत् ॥ २३ ॥ १४९७९८ ॥

हीरकहारधरम्—

हीरकहारधरं भवतीह च षड् भगणा यदि २४ २२४६९५

ऽ।।ऽ।।ऽ ।।ऽ। । ऽ ।।ऽ ।।

हीरकेति। यदि प्रतिपादं षड्भगणाः भवेयुः, तदा हीरकहारधरनामकं वृत्तम्भवति ॥ २४ ॥ २२४६९५ ॥

दण्डी—

वृत्तं तनतनताः सः किल यदि दण्डी प्रभवति २५ २४९६६१

ऽऽ।।।।ऽ ऽ । । । । ऽ ऽ ।।।ऽ

वृत्तमिति। यदि प्रतिपादं तगणनगणतगणनगणतगणसगणाः स्युः तदा दण्डिनामकं वृत्तं प्रभवति ॥ २५ ॥ २४९६६१ ॥

तुमुलकम्—

रसमितनगणरचितमिह तुमुलकमिति २६ २६२१४४

।।।।।।।।।। ।।।।।।। । ।

रसेति। इह चेत् प्रतिपादं षड् नगणाः स्युः, तदा इदं तुमुलकनामकं वृत्तं स्यात् ॥ २६ ॥ २६२१४४ ॥

इति धृतिप्रस्तारे यथालाभ नामानि २६ षड्विंशतिः।

# अथोनविंशत्यक्षरा वृत्तिः।

१९ अतिधृतिः भेदाः ५२४२८८

शम्भुः—

सतया भो मौ गुरु चेद्यत्र स्युरिदं वृत्त नाम्ना शम्भुः १ ३१७२
। । ऽ ऽ ऽ । । ।  ऽ ऽ ऽ । । ऽ ऽ ऽ ऽ ऽ ऽ ऽ

सतया इति। चेत् यत्र प्रतिपादं सगणतगणयगणभगणाः, स्युः तदनु द्वौ भगणौ स्याताम् ततश्चैको गुरुः स्यात्, तदा इद शम्भुनामकं वृत्त स्यात् १॥ ॥ ३१७२ ॥

झिल्लीलीला—

नयमभजा मो गश्चेन्नागैरुद्रैर्भवेच्च झिल्लीलीला २ २०४९६
। । । । ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ । ऽ । ऽ ऽ ऽ ऽ

नेति। चेत् प्रतिपादं नगणयगणमगणाः मगणजगणमगणगुरवश्च स्युः, तथा अष्टभिः एकादशभिश्च वर्णैः विरतिः स्यात्, तदा झिल्लीलीला-नामकं वृत्त भवेत् ॥ २ ॥ २०४९६ ॥

विधुनिधुवनम्—

स्यादेतद्विधुनिधुवनवृत्तं मननतना मो गश्चेत् ३ ३१२२५
ऽ ऽ ऽ । । । । । । ऽ ऽ । । । । ऽ ऽ ऽ ऽ

स्यादिति। चेत् प्रतिपाद मगणनगणौ नगणतगणौ नगणमगणौ गुरुरेकश्च स्यात्, तदा विधुनिधुवननामकं वृत्त, स्यात् ॥ ३ ॥ ३१२२५ ॥

माराभिसरणम्—

माराभिसरणमेतद् वृत्तं भवति तनौ मभौ स्यौ गः ४ ४८१८९
ऽ ऽ । । । । ऽ ऽ ऽ ऽ । । । । ऽ । ऽ ऽ ऽ

मारेति। चेत् प्रतिपाद तगणनगणमगणभगणसगणयगणगुरवः स्युः, तदा एतद् माराभिसरणनामकं वृत्तं भवति ॥ ४ ॥ ॥ ४८१८९ ॥

लोललोलम्बलीलम्—

लोललोलम्बलीलं तदा रेफषट्कं गकारो यदा स्यात् ५ ७४८९९
ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ

लोलेति। यदा प्रतिपादं षड्रगणाः स्युः एकश्च गुरुः स्यात्, तदा लोललोलम्बलीलनामकं वृत्तं भवेत् ॥ ५ ॥ ७४८९९ ॥

मेघविस्फूर्जिता—

रसर्त्वश्वैर्यमौ न्सौ रयुगगयुतौ मेघविस्फूर्जिता स्यात् ६ ७५७१४

रसेति । यत्र प्रतिपादं यगणमगणनगणसगणाः तथा द्वौ रगणौ गुरुश्चैकः स्यात् तथा षड्भिः पुनः षड्भि सप्तभिश्च वर्णैः विरतिः स्यात्, तद् वृत्तं मेघविस्फूर्जितानामक स्यात् ॥ ६ ॥ ७५७१४ ॥

फुल्लदाम—

मोगौ नौ तौ गौ शरहयतुरगैः फुल्लदाम प्रसिद्धम् ७ ८५७४५
S S S S S I I I I I I S S I S S I S S

म इति । यत्र प्रतिपादं प्रथम मगण एकः ततो द्वौ गुरू ततो द्वौ नगणौ ततो द्वौ तगणौ ततो द्वौ गुरू च स्याताम् अर्थाद् मगणतगणनगणसगणरगणाः रगणगुरू च स्याताम् तथा पञ्चभिः सप्तभिः पुनः सप्तभिश्च वर्णैः यतिः स्यात् तत् फुल्लदामनामक वृत्त प्रसिद्धम् ॥७॥८५७४५॥

किरणकीर्त्तिः—

अश्वैरविभिर्यदा तो जतौ भनसगु किरणकीर्त्तिः ८ १३०३४९
S S I I S I S S I S I I I I I I I S S

अश्वैरिति । यदा प्रतिपाद तगणजगणतगणभगणनगणसगणगुरवः स्युः, तदा किरणकीर्त्तिनामक वृत्त बोध्यम् ॥ ८ ॥ १३०३४९ ॥

शार्दूलविक्रीडितम्—

सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् ९ १४९३३७
S S S I I S I S I I I S S S I S S I S

सूर्यैति । तत्र प्रतिपाद मगणसगणजगणसगणतगणा स्युः तत त गणगुरू च स्याता तथा द्वादशभिः सप्तभिश्च वर्णैः यतिः स्यात् तद्वृत्तंशार्दूलविक्रीडितनामकं भवेत् ॥ ९ ॥ १४९३३७ ॥

छाया—

भवेच्छायावृत्तं यमनसतयुग्मं स्याद्यदा गस्तदा १० १४९४४२
I S S S S S I I I I I S S S I S S I S

भवेदिति । यदा प्रतिपाद यगणमगणनगणसगणाः स्युः ततः द्वौ तगणौ स्यातां ततश्चैको गुरुः स्यात्, तदा छायानामकम् वृत्तं भवेत् ॥ १० ॥ १४९४४२ ॥

शिलीमुखोज्जृम्भितम्—

मः सो जो नजता गुरुर्भवति च शिलीमुखोज्जृम्भितम् ११ १५५४८
S S S I I S I S I I I I I I S I S S I S

म इति । यत्र प्रतिपाद मगणसगणजगणनगणजगणतगणगुरवः स्युः तद्वृत्त शिलीमुखोज्जृम्भितनामकं भवति ॥ ११ ॥ १५५४८१ ॥

कलापदीपकम्—

स्याद्रजौ रजौ रजौ गुरुर्यदा तदा कलापदीपकम् १२ १७४७६

स्यादिति । यदा प्रतिपादं रगणजगणरगणजगणरगणजगणगुरवः स्युः, तदा कलापदीपकं नाम वृत्तं स्यात् ॥ १२ ॥॥ १७४७६३

प्रपञ्चचामरम्-प्रपञ्चं च—

नयुगगुरुलघुर्निरन्तरं यदा प्रपञ्चचामरम् १३ १७४७८४

। ।-। । । । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ

नयुगेति । यदा प्रतिपादं द्वौ नगणौ स्यातां तदनु निरन्तरं गुरुलघू स्याताम् अर्थात् नगणद्वयानन्तरं रगणजगणरगणजगणगुरवः स्युः तत्प्रपञ्चचामरनामकं वृत्तं भवेत् , प्रपञ्चमिति नामान्तरमस्य ज्ञेयम् ॥ १३ ॥ १७४७८४ ॥

कल्पलतापताकिनी—

यत्र स्यान्मननससजगुरु कल्पलतापताकिनी १४ १७८१६९

ऽ ऽ ऽ । । । । । । । । । ऽ । । ऽ । ऽ । ऽ

यत्रेति । यत्र प्रतिपादं मगणनगणौ नगणसगणौ सगणजगणौ गुरुरेकश्च स्यात्, तद्वृत्तं कल्पलतापताकिनीनामकं स्यात् ॥१४॥१७८१६९॥

निर्गलितमेखला—

ननरनभजगा यदा भवति निर्गलितमेखला १५ १९२१९२

। । । । । । ऽ । ऽ । । । ऽ । । । ऽ । ऽ

नेति । यदा प्रतिपादं द्वौ नगणौ रगणनगणौ यगणजगणौ तथा एकः गुरुश्च स्यात्, तदा निर्गलितमेखलानामकं वृत्तं भवति।१५।१९२१९२

ग्रावास्तरणम्—

दिग्भिर्नन्दैर्मभसभमा भो गुरु यत्र ग्रावास्तरणम् १६ १९९९२१

ऽ ऽ ऽ ऽ । । । । ऽ ऽ । । ऽ ऽ ऽ ऽ । । ऽ

दिग्भिरिति । यत्र प्रतिपादं मगणभगणसगणभगणमगणभगणगुरवः स्युः तथा दशभिः नवभिश्च वर्णैः यतिः स्यात्, तद्वृत्तं ग्रावास्तरणनामकं स्यात् ॥ १६ ॥ १९९९२१ ॥

सुरसा—

म्रौ भ्नौ यो नो गुरुश्चेत्स्वरमुनिकरणैराह सुरसाम् १७ २३७४५७

ऽ ऽ ऽ ऽ । ऽ ऽ । । । । । । ऽ ऽ । । । ऽ

म्राविति । चेत् प्रतिपादं मगणरगणभगणनगणयगणनगणगुरवः स्युः तथा सप्तभिः पुनः सप्तभिः पञ्चभिश्च वर्णैः यतिः स्यात् , तदा तद्वृत्तं सुरसानामकम् आह वक्ति पिङ्गल इति शेषः ॥ १७ ॥ २३७४५७॥

टङ्कणम्—

टङ्कणं भवति रो नरौ नरनगानवान्तविरतिः १८ २४१३३९

टङ्कणमिति । यत्र प्रतिपादं रगणनगणरगणनगणरगणनगणगुरवः स्युः तथा नवभिः दशभिश्च वर्णैः यतिः स्यात्, तद्वृत्तं टङ्कणनामक बोध्यम् ॥ १८ ॥ २४१३३९ ॥

धवलम्—

धवलमिह भवति रसमितनगणगुरु यदा १९ २६२१४४

। । । । । । । । । । । । । । । । । । । s

धवलमिति । इह यदा प्रतिपादं षड् नगणाः स्युः एकः गुरुश्च स्यात् तदा धवलनामकं वृत्तं भवति ॥ १९ ॥ २६२१४४ ॥

इत्यतिधृतिप्रस्तारे यथोपगत नामानि १९ ऊनविंशतिः ॥ इति शम् ॥

## अथ विंशत्यक्षरा वृत्तिः ।

२० कृतिः भेदा १०४८५७६

वाणीवाणः—

वाणीवाणो ममसभता यो गुरुयुग्मे यदि दिग्भिर्दिग्भिः । ५२४६९

s s s s । । । । । s s । । s s । । s s s s

वाणीति । यदि प्रतिपादं मगणभगणौ सगणभगणौ तगणयगणौ द्वौ गुरू च स्यातां तथा दशभिः पुनः दशभिश्चाक्षरः यतिः स्यात्, तदा वाणीवाणनामकं वृत्त भवेत् ॥ १ ॥ ५२४६९ ॥

भेकालोकः—

स्यादिह भेकालोकाख्यं तद् वृत्तं भमभतनसगा गश्चेत् २ १२९०३१

s । । s s s s s s s s । । । । । । s s s

स्यादिति । इह चेत् प्रतिपादं भगणमगणौ मगणतगणौ नगणसगणौ द्वौ गुरू च स्याताम्, तदा तद् वृत्तं भेकालोकाख्य स्यात् ॥२॥१२९०३१॥

विष्वग्वितानम्—

विष्वग्वितानमिदमत्र तभजनास्तद्वय गद्वयं स्यात् ३ १५१४१३

s s । s । । । s । । । । s s । s s । s s

विष्वगिति । अत्र चेत् प्रतिपादं तगणभगणौ जगणनगणौ द्वौ मगणौ द्वौ गुरू च स्याताम्, तदा इद विष्वग्वितानमामक वृत्त स्यात् ।३।१५१४१३।

भूरिशोभा—

अङ्गाश्वागैर्मो मो नयुगतयुगगा गस्तदा भूरिशोभा ४ १५१४८९

s s s s s s । । । । । । s s । s s । s s

अङ्गेति । यदा प्रतिपाद द्वौ मगणौ द्वौ नगणौ द्वौ तगणौ द्वौ गुरू च ... पुनः सप्तभिश्च वर्णैः विरतिः स्यात्, तदा

शोभा—

रसाश्वाङ्गैर्यो मो नयुगतयुगगा गस्तदा नामशोभा ५ १५१४९०
I S S S S S I I I I I I S S I S S I S S

रसेति। यदा प्रतिपादं यगणमगणौ द्वौ नगणौ द्वौ तगणौ द्वौ गुरू च स्याताम् षड्भिः सप्तभिः पुनः सप्तभिश्च वर्णैः यतिः स्यात्, तदा शोभा नाम वृत्तं स्यात्॥ ५॥ १५१४९०॥

संलक्ष्यलीला—

नरनरा नतौ गुरुयुगं यदा भवति संलक्ष्यलीला ६ १६१२४०
I I I S I S I I I S I S I I I S S I S S

नेति। यदा प्रतिपादं नगणरगणनगणरगणनगणतगणाः स्युः ततो द्वौ गुरू च स्याताम्, तदा संलक्ष्यलीलानामकं वृत्तं भवति॥ ६॥१६१२४०॥

भारावतारः—हारावतारश्च—

नतजना नस्तगुरू गुरु यदि भवति हारावतारः ७ १६३६८८
I I I S S I I S I I I I I I I S S I S S

नेति। यदि प्रतिपाद नगणतगणजगणनगणाः स्युः ततः नगणतगणौ द्वौ गुरू च स्याताम्, तदा हारावतारनामकं वृत्तं भवति। भारावतारइत्यपि नामास्य बोध्यम्॥ ७॥ १६३६८८॥

वीरविमानम्—

षड् भगणाश्च गुरू यदि वीरविमानमिदं खलु वृत्तम् ८ २२४६९५
S I I S I I S I I S I I S I I S I I S S

षडिति। यदि अत्र प्रतिपाद षड भगणाः स्युः, ततो द्वौ गुरू च स्याताम्, तर्हि इदं वीरविमाननामकं वृत्तं खलु ज्ञेयम्॥ ८॥ २२४६९५॥

मत्तेभविक्रीडितम्—

सभरा नो मयला गुरुश्च कथितं मत्तेभविक्रीडितम्॥ ९ २९८६७६
I I S S I I S I S I I I S S S I S S I S

सेति। चेत् यत्र प्रतिपादं सगणभगणरगणनगणमगणयगणाः स्युः लघुगुरू च स्याताम्, तर्हि तत् मत्तेभविक्रीडितनामकं वृत्तंकथितम्॥ ९॥ २९८६७६॥

अवन्ध्योपचारः—

अवन्ध्योपचारो यदा षड् यकारा लगौ चान्तगौ स्यात्तदा १० २९९५९४
I S S I S S I S S I S S I S S I S S I S

अवन्ध्येति। यदा प्रतिपादं षड् भगणाः स्युः तदनु लघुगुरू च स्याताम्, तदा अवन्ध्योपचारनामकं वृत्तं स्यात्॥ १०॥ २९९५९४॥

उत्पलमालिका—

भो रनभा भरौ लघुगुरू यदि चोत्पलमालिका भवेत् ११ ३५५७९९
S I I S I S I I I S I I S I I S I S I S

अवन्त्येति। यदि प्रतिपादं भगणरगणनगणभगणाः स्युः तथा भगणरगणौ लघुगुरू च स्याताम्, तर्हि उत्पलमालिकानामकं वृत्तं भवेत् ॥ ११ ॥ ३५५७९९ ॥

गीतिका—

ससजं भरौ सलगा यदा कथिता तदा खलु गीतिका १२ ३७२०७६
I I S I S I I S I S I I S I S I I S I S

सेति। यदा प्रतिपादं द्वौ सगणौ जगणभगणौ च रगणसगणौ च लघुगुरू च स्याताम्, तदा उत्पलमालिकानामकं वृत्त भवेत्॥१२॥३७२०७६॥

सुवदना—

ज्ञेया सप्ताश्वषड्भिर्मरभनयमला गश्चेत्सुवदना १३ ४६६८३३
S S S S I S S I I I I I I S S S I I I S

ज्ञेयेति। चेत् प्रतिपादं मगणरगणभगणनगणयगणभगणलघुगुरवः स्युः तथा सप्तभिः पुनः सप्तभिः पुनः षड्भिः वर्णैः विरतिः स्यात्, तदा नाम्नेति शेषः सुवदना ज्ञेया ॥ १३ ॥ ४६६८३३ ॥

सौरभशोभासारः—

सौरभशोभासारः स्याद्भमतनसनला गुरुरिह चेत् १४ ५०७६५५
S I I S S S S S I I I I I I S I I I I S

सौरभेति। चेत् इह प्रतिपादं भगणमगणतगणनगणसगणनगणलघुगुरवः स्युः, तर्हि इदं सौरभशोभानामकं वृत्तं स्यात्॥१४॥५०७६५५॥

ईदृशम्–मादृशं च–गण्डका कापि—

वृत्तमीदृश तु नामतो रजौ रजौ रजौ गुरुर्लघुश्च १५ ६९९०५१
S I S I S I S I S I S I S I S I S I S I

वृत्तमिति। यत्र प्रतिपादं रगणजगणरगणजगणरगणजगणगुरुलघवः स्युः तत् नामतः नाम्ना ईदृशम् ईदृशनामकमिति यावत् वृत्त भवेत्, अस्य मादृशमिति नामान्तर बोध्यम्, कापि गण्डकानामकमेतत्प्रसिद्धम् ॥ १५ ॥ ६९९०५१ ॥

इति कृतिप्रस्तारे यथालब्धनामानि पञ्चदश ॥ १५ ॥ इति शम्

## अथ एकविंशत्यक्षरा वृत्तिः ।

२१ प्रकृतिः भेदाः २०९७१५२

अशोकलोकः अशोकलोकालोकश्च—

**चत्वारो मास्तो रेफो मो यत्र स्युश्चेत्स स्यादशोकलोकालोकः १ ८१९२१**

S S S  S  S S S  S S S  S  S S S  S  I  S  I S S S  S

चत्वार इति । चेत् यत्र प्रतिपादं चत्वारो मगणाः स्युः ततः तगण-रगणमगणा स्युः तर्हि स अशोकलोकालोकः नाम्नेति शेषः स्यात्, अशोकलोक इत्यपि नामास्य बोध्यम् ॥ १ ॥ ८१९२१ ॥

मन्दाक्षमन्दरम्—

**नयुगमयुगजा रो मश्चेन्मन्दाक्षमन्दरश्च दिग्भी रुद्रैः २  ८६०८०**

I I I  I I I S S  S S  S S  I S I S I  S  S  S S

नेति । चेत् प्रतिपादं नगणद्वय मगणद्वयञ्च जगणरगणमगणाश्च स्युः तथा दशभिः एकादशभिश्च वर्णैः विरतिः स्यात्, तर्हि मन्दाक्षमन्दरं-नाम वृत्तं ज्ञेयम् ॥ २ ॥ ८६०८० ॥

तल्पकतल्लजम्—

**तल्पकतल्लजमत्रभवेद्धि भपञ्चकयुतौ जमौ स्याताम् ३ १९१८२७**

S I I S I I S I I S  I I S I I I  S I S  S S

तल्पकतल्लजमिति । चेत् अत्र प्रतिपादं पञ्च भगणाः स्युः तदनु जगण मगणौ च स्याताम्, तदा तल्पकतल्लजनामक वृत्तम्भवेत् ॥३॥१९१८२७॥

विद्युद्दाली—

**यकारा भवेयुर्यदा सप्त सा स्यात्फणीशोदिता विद्युद्दाली ४ २९९५९४**

I  S S  I S S I S  S I  S S  I  S  S I S  S I S  S

यकारा इति । यदा यत्र प्रतिपादं सप्त यगणाः भवेयुः तदा सा नाम्ना फणीशोदिता शेषप्रोक्ता विद्युद्दाली भवति ॥ ४ ॥ २९९५९४ ॥

स्रग्धरा—

**म्रभ्नैर्यानान्त्रयेण त्रिमुनियतियुता स्रग्धरा सा प्रसिद्धा ५ ३०२९९३**

S  S  S S  I S S I I I I  I I S  S I  S S I S  S

म्रभ्नैरिति । यत्र प्रतिपादं मगणरगणभगणनगणाः त्रयः यगणाश्च स्युः तथा सप्तभिः पुनः सप्तभिः पुनः सप्तभिश्च वर्णैर्विरतिः स्यात्, सा नाम्ना स्रग्धरा प्रसिद्धा ॥ ५ ॥ ३०२९९३ ॥

दूरावलोकः—

**इन्द्रैरश्वैर्विरामो मरभनयररं दूरावलोको भवेत्  ६  ५९७९०५**

S S S S I S S  I I I I I I S S S I S  S  I S

इन्द्रैरिति । यत्र प्रतिपादं मगणरगणभगणनग ाः स्युः द्वौ र-
गणौ च स्यातां तथा चतुर्दशभिः पुनः सप्तभिर्वर्णै : स्यात्, तत्
चूरावलोकनामकं वृत्तम् भवेत् ॥ ६ ॥ ५९७९०५ ॥

शरकाण्डप्रकाण्डम्—

शरकाण्डप्रकाण्डमिह सो रनौ रेफकाणां चतुष्कं ... ५९९५०८

। । S S । S । । । S । S S । S S । S S ।

शरेति । यदा इह प्रतिपादं सगणरगणनगणाः त ...त्वारः रगणाः
स्युः, तदा इदं शरकाण्डनामकं वृत्तं स्यात् ॥ ७ ॥ ५ ...८ ॥

कलमतल्लिका—

कलमतल्लिका भवति सा यदा नरनगणत्रयरेफयु ... ६१९९९२

। । । S । S । । । S । S । । । । S । S S ।

कलेति । यदा यत्र प्रतिपादं नगणरगणनगणरग ाः स्युः ततः
द्वौ रगणौ स्याताम्, तदा सा नाम्ना कलमतल्लिका भ ...८॥६१९९९२॥

सरसी–चम्पकमालिका च चम्पकावली च पञ्चका ...—

नजभजजा जरौ यदि तदा गदिता सरसी फणाव ... ७११६००

। । । । S । S । । । S । । S । । S । S ।

नेति । यदि प्रतिपादं नगणजगणभगणाः स्युः तदः ...जगणाः स्युः
तदनु एकः रगणः स्यात्, तदा फणावता शेषेण सा ... । शेषः सरसी
गदिता, चम्पकमालिका चम्पकावली पञ्चकावली च ... नामान्यस्य
त्रयाणि, तत्र चम्पकमालिकानामघटित लक्षणम्, ... नजभजजरौ-
भवति यत्र चम्पकमालिका त्वसौ" इति । अस्या ... एव स्पष्टः
॥ ९ ॥ ७११६०० ॥

कनकमालिका—

रो नरौ नरनरा भवन्ति खलु यत्र सा कनकमालि ... ७६५६२७

S । S । । । S । S । । । S । S । । । S ।

र इति । यत्र प्रतिपादं रगणनगणरगणनगणरग ...रगणाः भव-
न्ति सा नाम्नेति शेषः कनकमालिका भवति ॥ १० ॥ ...२७ ॥

प्रतिमा—

इह सप्तसकारकृता फणिपप्रथिता भवति प्रतिमा ८९८७८०

। । S । । S । । S । । S । । S । । S । । S

इहेति । चेत् इह प्रतिपादं सप्त सगणाः स्युः तर्हि ...फणिपप्रथिता
शेषोक्ता प्रतिमा नाम भवति, इय प्रतिमा लोके ...वैया" इति
कथ्यते ॥ ११ ॥ ८९८७८० ॥

कमलशिखा—

नयमभसाः सौ चेद्यत्र स्युः कलमशिखा भवतीह यदा१२ ९०००११२
I I I I S  S S S S  I I I I S  I I S I I S

नेति। चेत् यत्र प्रतिपादं नगणयगणमगणभगणाः त्रयः सगणाः च स्युः, तदा इह छन्दःशास्त्रे सा कलमशिखा नाम भवति॥१२॥९०००११२॥

ललितललाम—

ललितललामवृत्तं नजौ तस्तकारत्रयं सश्च किल चेत् १३ ९३६२४०
I I I I S I S S I S  S I S S I S S I I I S

ललितेति। चेत् प्रतिपादं नगणजगणौ तथा चत्वारः तगणाः एकः सगणश्च स्यात्, तदा ललितललामनामकं वृत्तं ज्ञेयम् ॥१३॥९३६२४०॥

तडिदम्बरम्—

सप्तभकारविनिर्मितकायमिदं तडिदम्बरमत्र हि १४ १७९७५५९
S I I S I I S I I S I I S I I S I I S I I

सप्तेति। चेत् अत्र प्रतिपादं सप्त भगणाः स्युः, तदा इदम् तडिदम्बरनामकं वृत्तम्बोध्यम्, इदं तडिदम्बरं लोके "सवैया" इति कथ्यते ॥ १४ ॥ १७९७५५९ ॥

इति प्रकृतिप्रस्तारे यथालब्धं नामानि चतुर्दश ॥ १४ ॥

---

# अथ द्वाविंशत्यक्षरा वृत्तिः।

## २२ आकृतिः भेदाः ४१९४३०४

वासकलीला—

भो मसता यो भो मगुरु चेत्तत्फणिप्रोक्तं वासकलीलावृत्तम्१ २०२९५१
S I I S  S S I I S S S  I I S S S I  I S S  S S

भ इति। चेत्प्रतिपादं भगणमगणसगणतगणयगणभगणगुरवः स्युः, तर्हि तत् वासकलीलानामकं वृत्तं फणिप्रोक्तम् ॥ १ ॥ २०२९५१ ॥

द्रुतमुखम्—

द्रुतमुखमिह जलनिधिनगणा मो रो यो गुरुर्यदा वै स्यात्२ ३३१७७६
I I I I I I  I I I I  I I S S S  S I S I S S S  S

द्रुतेति। यदा इह प्रतिपादं चत्वारः नगणाः मगणरगणयगणगुरवश्च स्युः, तदा द्रुतमुखनामकं वृत्तं स्यात् ॥ २ ॥ ३३१७७६ ॥

भीमाभोग —

शालिन्याश्चेत्पादयुग्म यदा स्यात् भीमाभोगःप्रोदितः पिङ्गलेन३ ५९०११३
S S S S S I S S I S   S S S S S S I S S I S S

शालिन्या इति । चेत् प्रतिपाद शालिन्या शालिनीवृत्तस्य पादयुग्मं स्यात्, अर्थात् मगणतगणौ तगणमगणौ मगणरगणौ रगणगुरू च स्याताम्, तर्हि भीमाभोग स नाम्नति शेष पिङ्गलेन प्रोदित प्रोक्त इति पिङ्गलेनेत्यत्र पादान्तस्थत्वान्नकारस्य गुरुत्व ज्ञेयम् ॥ ३ ॥ ५९०११३ ॥

वीरनीराजना—

चतुर्भिर्यकारैस्त्रिभिश्चापि रेफैर्वीरनीराजना गैकयुक्तैः ४ ५९८६०२
I S S I S S I S S I S S I S S I S S I S S I S S I S S

चतुर्भिरिति—यत्र प्रतिपाद चत्वार यगणा ततस्त्रय॰ रगणा॰ स्युः, गुरुरन्ते च तद्वृत्त वीरनीराजनानामक बोध्यम् ॥ ४ ॥ ५९८६०२ ॥

कङ्कणकाणवाणी—

मःषड्रेफा यदा स्याद्गुरुः कङ्कणकाणवाणी भवेत्पिङ्गलोक्ता ५ ५९९१८५
S S S S I S   S I S S I S S I S S I S S I S S

म इति । यदा प्रतिपादम् एक मगण स्यात् तदनु षट् रगणाः स्यु तत एक गुरु स्यात्, तदा सा पिङ्गलोक्ता नाम्नेति शेष कङ्कणकाणवाणी भवेत् ॥ ५ ॥ ५९९१८५ ॥

कङ्कणकाण.—

सप्त रेफा यदा स्याद्गुरुःकङ्कणकाणनामा भवेत्पिङ्गलोक्तः६ ५९९१८७
S I S S I S S I S S I S S I S S I S S I S S I S S

सप्तेति । यदा प्रतिपाद सप्त रगणाः स्यु अन्ते चैको गुरुः स्यात्, तदा पिङ्गलोक्तः कङ्कणकाणनामा भवेत् ॥ ६ ॥ ५९९१८७ ॥

अर्भकमाला—

यत्र भवेयुर्भतनतना मः सगणा गुरू चेदर्भकमाला ७ ८१७६३८
S I I S S I I I I S S I I I I S S S I I S S

यत्रेति । चेत् यत्र प्रतिपाद भगणतगणनगणतगणनगणमगणसगणगुरवः भवेयु, तर्हि सा नाम्नेति शेष॰ अर्भकमाला स्यात् ॥ ७ ॥ ८१७१३८ ॥

भस्त्रानिस्तरणम्—

भस्त्रानिस्तरणं स्यान्मसभनजरसा गुरुर्यदा भवतीह ८ ८७६४४१
S S S I I S S I I I I I I S I S I S I I S S

भस्त्रेति । इह यदा प्रतिपाद मगणसगणभगणनगणजगणरगणसगण गुरव स्यु॰, तदा इद भस्त्रानिस्तरणनामक वृत्त भवति, अत्र पादान्त

अयमानम्—

इह सप्तसकारगनिर्मितकायमिदं च भवेदयमानम् ९ ८९८७८०

I I S I I S I I S I I S I I S I I S I I S I I S S

इहेति । इह प्रतिपादं सप्त सगणाः चेत्स्युः, तर्हि इदम् अयमाननामकं-वृत्तं भवेत्, इदं वृत्तं हिन्दीभाषाकविभिः "सवैया" नाम्ना व्यवह्रियते ॥ ९ ॥ ८९८७८० ॥

हंसी रजतहंसी च—

मौ गौ नाश्चत्वारो गो गो वसुभुवनयतिरिह भवति हंसी१० १०४८३२१

S S S S S S S S S I I I I I I I I I I I I S S

माविति । इह चेत् प्रतिपादं द्वौ मगणौ द्वौ गुरू च स्याताम् तदनु चत्वारः नगणाः स्युः ततश्च द्वौ गुरू स्याताम् , तर्हि इदम् हंसीनामकं-वृत्तम् भवति, "रजतहंसी" इति नामान्तरमस्य ज्ञेयम् ॥१०॥१०४८३२१॥

भोगावली—

भोगावली तभराः सनौ नजगा भवति फणिपतिवर्णिता ११ १५७०४८५

S S I S I I S I S I I S I I I I I I I S I S

भोगेति । यत्र प्रतिपादं तगणभगणरगणसगणनगणाः तदनु नगण-जगणगुरवः सन्ति फणिपतिवर्णिता शेषोक्ता सा नाम्ना भोगावली भवति ॥ ११ ॥ १५७०४८५ ॥

स्वर्णाभरणम्—

यदि सन्ति चतुःसगणा नयभा गुरु भवति स्वर्णाभरणम् १२ १६३६०६०

I I S I I S I I S I I S I I I I S S S I I S I I S

यदीति । यदि प्रतिपादं चत्वारः सगणाः नगणयगणभगणगुरवश्च सन्ति, तर्हि स्वर्णाभरणनामक वृत्त भवति ॥ १२ ॥ १६३६०६० ॥

निष्कलकण्ठी—

पञ्चदशागैर्निष्कलकण्ठी भो मसता यः सभगा यत्र भवेत्१३ १६७७५११

S I I S S S I I S S S I I S S I I S S I I S S I I S

पञ्चेति । चेत् यत्र प्रतिपादं भगणमगणसगणतगणयगणसगणभ-गणगुरवः स्युः तथा पञ्चदशभिः सप्तभिश्च वर्णैर्यतिः स्यात् , तर्हि तद् वृत्तं निष्कलकण्ठीनामकं भवेत् ॥ १३ ॥ १६७७५११ ॥

मदिरा मानिनी च—

सप्तभकारयुतैकगुरुर्गदितेयमुदारतरा मदिरा १४ १७९७५५९

S I I S I I S I I S I I S I I S I I S I I S

सप्तेति । यत्र प्रतिपादं सप्त भगणा स्युः अन्ते च एकः गुरुः स्यात् उदारतरा महत्तरा सा इयम् नाम्नेति शेषः मदिरा गदिता । "मानिनी"ति

नामान्तरमस्य बोध्यम्, हिन्दीभाषायामिदं वृत्तं "सवैया" इति नाम्ना प्रसिद्धम् ॥ १४ ॥ १७९७५५९ ॥

भुजङ्गोद्धतम्—

वृत्तं तभौ ररसं रनौ गैकमत्र भुजङ्गोद्धतं भवति चेत् १५ १९१४०३७
S S I S I I S I S S I S I I S S I S I I I S

वृत्तमिति । चेत् अत्र प्रतिपादं तगणभगणरगणाः तदनु रगणसगणरगणनगणगुरवः स्युः, तर्हि इदं भुजङ्गोद्धतं नाम वृत्त भवति१५१९१४०३॥

सितस्तवकः-परिस्तवकश्च—

उक्तं सितस्तवकवृत्तं तभौ यजसरा नो गुरुर्यदि तदा १६ १९१५५०९
S S I S I I I S S I S I I I S S I S I I I S

उक्तमिति । यदि प्रतिपाद तगणभगणयगणजगणसगणरगणनगणगुरवः स्युः, तदा सितस्तवकनामक वृत्तम् उक्तम् शेषेणेति शेषः । "परिस्तवक" इत्यपि नामाऽस्य बोध्यम् "अश्वधाटी" इत्यपि नामास्य केचिद्वदन्ति ॥ १६ ॥ १९१५५०८ ॥

भद्रकम्-भद्रिकं च—

भ्रौ नसना रनावथ गुरुर्दिगर्कविरतिश्च भद्रकमिदम्१७ १९३१२२३
S I I S I S I I I I I S I I I S I S I I I S

भ्राविति । यत्र प्रतिपादं भगणरगणनगणसगणनगणरगणनगणगुरवः स्युः अथ दशभिः द्वादशभिश्च वर्णैः यतिः स्यात, तत् इदम् भद्रकनामकं वृत्तम् भवति, भद्रिकमिति नामान्तरमस्य ज्ञेयम्॥१७॥१९३१२२३॥

अचलविरतिः—

मुनिमितनगणगुरुरचिततनुरियमचलविरतिः १८ २०९७१५२
I I I I I I I I I I I I I I I I I I I I I S

मुनीति । चेत् अत्र प्रतिपादं सप्त नगणाः स्युः अन्ते च एको गुरुः स्यात्, तर्हि इयम् अचलविरतिः इति नाम्ना प्रसिद्धा ॥१८॥२०९७१५२॥

वनवासिनी—

वनवासिनी सजजम्भरौ नसलायता दशरावियतिश्च १९ ३१२४५८८
I I S I S I I S I S I I S I S I I I I I S I

वनेति । यदा प्रतिपाद सगणौ जगणभगणौ रगणनगणौ सगणलघू च स्याताम्, अथ दशभिः द्वादशभिश्च वर्णैः यतिः स्यात्, तदा वनवासिनीनामकं वृत्तं ज्ञेयम् ॥ १९ ॥ ३१२४५८८ ॥

इति आकृतिप्रस्तारे यथालाभं नामानि १९ ऊनविंशतिः । इति शम् ।

# अथ त्रयोविंशत्यक्षरा वृत्तिः ।

## २३ विकृतिः ॥ भेदाः ८३८८६०८

परिधानीयम्—

नयुगभतजयाः सगणो गद्वयमत्र भवेच्चेत्परिधानीयम् १ ८४२१७६
। । । । । । S । । S S । । S । । S S । । S S S

नेति । चेत् अत्र प्रतिपादं द्वौ नगणौ भगणतगणौ जगणयगणौ च स्यातां तदनु एकः सगणः स्यात् तदन्ते द्वौ गुरू स्याताम्, तत् परिधानीयनामक वृत्तम्भवेत् ॥ १ ॥ ८४२१७६ ॥

विलासवासः—सुभागः—विलासश्च—

भः सभभसजो भो गुरुयुग्ममिह विलासवासनामकं वृत्तम् २ १७५२४७९
S । । । । S S । । S । । । । S । S । S । । S S

भ इति । इह चेत् प्रतिपादं भगणसगणभगणाः भगणसगणजगणभगणाश्च स्युः तदनु द्वौ गुरू स्याताम्, तर्हि विलासवासनामकं वृत्त ज्ञेयम्। सुभाग इति विलास इति च नामद्वयमन्यदस्य ज्ञेयम् ॥२॥१७५२४७९॥

मत्तगजेन्द्रः—

सप्तभकारगुरुद्वयनिर्मितकायमवेहि च मत्तगजेन्द्रम् ३ १७९७५५९
S । । S । । S । । S । । S । । S । । S । । S S

सप्तेति । यत्र प्रतिपादं सप्त भगणाः स्युः अन्ते द्वौ गुरू च स्याताम्, तत् मत्तगजेन्द्रनामकं वृत्तम् अवेहि जानीहि इदं वृत्तं भाषायां "सवैया" इति प्रसिद्धम् ॥ ३ ॥ १७९७५५९ ॥

मन्थरायनम्—मन्थर च—

भवति मन्थरायनमिह च नरौ यदि नौ भगणत्रयगौ गः ४ १७९८१०४
। । । S । S । । । । । । S । । S । । S । । S S

भवतीति । इह यदि प्रतिपादं नगणरगणौ द्वौ नगणौ भगणत्रयश्च स्युः अन्ते च द्वौ गुरू स्याताम्, तर्हि इदं मन्थरायननामकं वृत्तम् भवति । मन्थरमप्यस्य नाम ज्ञेयम् ॥ ४ ॥ १७९८१०४ ॥

पुलकाञ्चितम्—

चेद्भसनयना नभगुरुयुग्मानि भवति पुलकाञ्चितमेतत् ५ १८३१९०३
S । । । S । । । । S S । । । । । । S । । S S

चेदिति । चेत् अत्र प्रतिपादं भगणसगणनगणयगणनगणाः नगणभगणौ द्वौ गुरू च स्याताम्, तर्हि एतत् पुलकाञ्चितनामकं वृत्तम् भवति ॥ ५ ॥ १८३१९०३ ॥

इन्द्रविमानम्—

इन्द्रविमानं भवति तदा चेद् वृत्तं भतनमभननगयुग्मम् ६ २०८९४४७

S I I S S I I I I I S S S S I I I I I I I I S S

इन्द्रेति । चेत् प्रतिपादं भगणतगणनगणमगणभगणाः भवन्ति तदनु द्वौ नगणौ द्वौ गुरू च भवतः, तदा इन्द्रविमाननामकं वृत्तम् भवति ॥ ६ ॥ २०८९४४७ ॥

विपुलायितम्—

वृत्तं तन्मनजभना जरौ लघुगुरू विपुलायितं भवेदिदम् ७ २८१७४०१

S S S I I I I S I S I I I I I I S I S I S I S

वृत्तमिति । यत्र प्रतिपादं मगणनगणजगणभगणनगणजगणरगणाः स्युः अन्ते लघुगुरू च स्याताम्, तत् इदम् विपुलायितनामकं वृत्तम् भवेत् ॥ ७ ॥ २८१७४०१ ॥

पारावारान्तस्थम्—पारावारान्तश्च—

पारावारान्तस्थं वृत्तं यर्हि मकारत्रयमिह सो भसौ तलगाः८ ३२७०१४५

S S S S S S S S S I I S S I I I I S S S I I S

पारावारेति । इह यर्हि प्रतिपादं त्रयः मगणाः सगणभगणसगणत-गणलघुगुरवश्च स्युः, तर्हि इदं पारावारान्तस्थनामकं वृत्तं ज्ञेयम् "पारावारान्त" इत्यपि नामास्य बोध्यम् ॥ ८ ॥ ३२७०१४५ ॥

रामावद्धम्—

रामावद्धं मभसभता नस्तलगाः स्युर्यदि दशवेदाङ्कयतिः ३३९४८०१

S S S S I I I I S S I I S S I I I I S S I I S

रामेति । यदि प्रतिपादं मगणभगणसगणभगणतगणनगणतगणल घुगुरवः स्युः तथा दशभिः चतुर्भिः नवभिश्च वर्णैः यतिः स्यात्, तर्हि रामावद्धनामकं वृत्तं ज्ञेयम् ॥ ९ ॥ ३३९४८०१॥

विलम्बललितं—विलं च—

विलम्बललितम्भवेज्जसगणत्रयं जगणलौ गुरुः खलु चेत्३५२८५४२

I S I I I S I S I I I S I S I I I S I S I I S

विलम्बेति । चेत् प्रतिपादं जगणसगणजगणसगणजगणसगणजगण लघुगुरवः स्युः, तदा विलम्बललितनामकं वृत्तं भवेत् "विलम्" इति नामान्तरमस्य बोध्यम् ॥ १० ॥ ३५२८५४२ ॥

मानवती—मानिनी च—

यदा च जसप्तकमन्त्यलगौ किल तर्हि भवेदिह मानवती३५९५११८

I S I I S I I S I I S I I S I I S I I S I I S

यदेति । यदा इह प्रतिपादं ...

ताम्, तर्हि इदम् मानवतीनामकं वृत्त भवेत् ॥ "मानिनी" इति नामान्तरमस्य ज्ञेयम्। हिन्दीभाषाकविभिरिदं वृत्त "सवैया" नाम्ना व्यवह्रियते ॥ ११ ॥ ३५९५११८ ॥

श्रवणाभरणं—विराजितं च—

न इह जषट्कलघू गुरुरेक इति प्रथितं श्रवणाभरणम् १२ ३५९५१२०

। ।।। S। ।S।।S।।S।। S।।S ।।S

न इति। इह चेत् प्रतिपादम् एकः नगणः स्यात् ततः षट् जगणाः स्युः ततः लघुगुरू च स्याताम्, तर्हि इदं वृत्तं श्रवणाभरणम् इति नाम्ना प्रथितम्। "विराजितम्" इत्यपि नामास्य ज्ञेयम्।१२।३५९५१२०।

गोत्रगरीयः—

गोत्रगरीयो भवति तदा चेद्भगणस्तो नतयनजा लगुरू १३ ३६४३८७९

S।।SS ।। ।।S S। ।SS ।।।।S ।।S

गोत्रेति। चेत् प्रतिपादं भगणतगणनगणतगणयगणनगणजगणलघुगुरवः स्युः, तदा गोत्रगरीयो नाम वृत्तं भवति ॥ १३ ॥ ३६४३८७९ ॥

अद्रितनया—अश्वललित च—

नजभजभा जभौ लघुगुरू बुधैस्तु गदितेयमद्रितनया १४ ३८६१४२४

।।।।S ।S ।।।S।S। ।।S।S।।।S

नेति। चेत् इह प्रतिपाद नगणजगणभगणजगणभगणजगणभगण लघुगुरवः स्युः, तर्हि इयम् अद्रितनयानाम बुधैः गदिता। "अश्वललितम्" इति नामान्तरमस्य बोध्यम् ॥ १४ ॥ ३८६१४२४ ॥

मत्ताक्रीडम्—

मत्ताक्रीडं वस्विष्वाशायति मयुगगयुगमनुलघुगुरुभिः १५ ४१९४०४९

SSSS SS S S ।।।। ।।।।।।।।।। ।।S

मत्तेति। यत्र प्रतिपादं द्वौ मगणौ द्वौ गुरू च स्याताम् तदनु चतुर्दश लघवः स्युः अन्ते चैको गुरुः स्याद् अर्थात् मगणद्वयं तगणश्च नगणचतुष्टयो च लघुश्च गुरुश्च स्यात् तथा अष्टभिः पञ्चभिः दशभिश्च वर्णैः यतिः स्यात्, तत् मत्ताक्रीडनामकं वृत्तम्भवेत् ॥१५॥४१९४०४९॥

भ्रमरचमरी—

मुनिमितनगणलघुगुरुविरचिततनुरमरचमरी १६ ४१९४३०४

। । ।।।।।।।।।।।।। । ।।।।।।।।।S

मुनीति। यत्र प्रतिपादं सप्त नगणाः स्युः अन्ते लघुगुरू स्याताम्, तत् भ्रमरचमरीनामकं वृत्तं स्यात् ॥ १६ ॥ ४१९४३०४ ॥

चकोरः—

सप्तेति । इह यदि प्रतिपादं सप्त भगणाः सन्ति अन्ते गुरुलघू स्तः तदा चकोरनामकं वृत्त भवति । इद् लोके सवैयेति प्रसिद्धम्१७।५९९१८६३

संभृतशरधिः—

संभृतशरधिरियं स्याचेद् भनयभनयसा गो लघुको यत्र१८ ५०४५३७५
S I I I I I I S S S I I I I I I S S I I S S I

सभृतेति । चेत् यत्र प्रतिपादं भगणनगणयगणभगणनगणयगणसगण-गुरुलघवः स्युः, तर्हि सा इयं सभृतशरधिः नाम स्यात् ॥१८॥'१०४५३७५॥

इति विकृतिप्रस्तारे यथालब्धिनामानि १८
अष्टादश ॥ इति शम् ॥

---

# अथ चतुर्विंशत्यत्तरा वृत्तिः ।

## २४ संस्कृतिः भेदाः १६७७७२१६

वंशलोन्नता—

रो जरौ मकारकौ जरौ,मश्चेत्सा भोगीन्द्रेण वंशलोन्नता निर्दिष्टा१६८८२९९
S I S I S I S I S S S S S S S I S I S I S S S S

र इति । चेत् यत्र प्रतिपादं रगणजगणरगणमगणाः मगणजगणरगण-मगणाश्च स्युः तर्हि सा भोगीन्द्रेण शेषेण वंशलोन्नता नाम निर्दिष्टा१६८८२९९

धौरेयम्—

भद्वयसद्वयमिह नौ च समौ फणिपतिभणितमिदं धौरेयम् २१०४६६२६३
S I I S I I I I S I I S I I I I I I I I I S S S S

भेति । चेत इह प्रतिपादं द्वौ भगणौ द्वौ सगणौ च द्वौ नगणौ च स-गणमगणौ च स्याताम् , तर्हि इदं फणिपतिभणितम् धौरेयनामक वृत्तं-ज्ञेयम् ॥ २ ॥ १०४६६२६३ ॥

भुजङ्गः-महाभुजङ्गश्च—

भुजङ्गाख्यमेतद्भुजङ्गप्रयातस्य पादद्वयं वक्ति सर्पाधिराजः३२३९६७४६
I S S I S S I S S I S S I S S I S S I S S I S S

भुजङ्गेति । सर्पाधिराजः शेषः भुजङ्गप्रयातस्य वृत्तस्य पादद्वयम् भुजङ्गाख्यम् एतत् वृत्तम् वक्ति अर्थात् यत्र प्रतिपादम् अष्टौ यगणा भ-वन्ति, तत् भुजङ्गनामक वृत्तम्भवति "महाभुजङ्गः" "सुधायश्च" इति नामान्तरमस्य बोध्यम् ॥ ३ ॥ ५३९६७४६ ॥

भासमानबिम्बम्-मानबिम्बम्-भासमानं च—

भासमानबिम्बमेतदिह रजौ भसौ जभौ सगणयकारयुक्तौ४३११०२६३५

भासमानेति। चेत् इह प्रतिपाद रगणजगणभगणसगणजगणभगणसगणयगणाः स्युः, तर्हि एतत् भासमानबिम्बनामकं वृत्तं भवति। "मानबिम्बम्"। "भासमानम्" चेति नामद्वयमन्यदप्यस्य ज्ञेयम्॥ ४॥
॥ ३१०२६३५॥

समाहितम्—

न इह जषट्कमथो यगणो ननु चेद्भवतीति समाहितवृत्तम् ५ ३५९५१२०
I I I S   I I S   I S   I I   S I I S   I I S   I I S S

न इति। चेत् इह प्रतिपादम् एकः नगणः स्यात् ततः षट् जगणाः स्युः अथोऽनन्तरम् एकः यगणः स्यात्, तर्हि इदम् समाहितवृत्तम् इति समाहितनामकम् वृत्तम् इति यावत् ननु निश्चयेन भवति॥ ५॥
॥ ३५९५१२०॥

विगाहितगेहम्–गाहितगेहम्–गाहितदेह–च—

नननयमनजयगणसृष्टं यद्वृत्तम्भवति विगाहितगेहम् ६ ३६३८२७२
I I I I I I I I I I S S S S S I I   I   I S   I I S S

नेति। यत=यत्र प्रतिपादं त्रयः नगणाः यगणमगणनगणजगणयगणाश्च स्युः, तत् विगाहितगेहनामकं वृत्तं भवति, "गाहितगेहम्" "गाहितदेह" चेति नामद्वयमन्यदप्यस्य विद्यते॥ ६॥ ३६३८२७२॥

अधीरकरीरम्—

मोनौभश्चसनजयगणा यदि फणिपप्रथितमधीरकरीरम् ७ ३६५३११३
S S S I   I I I I I S I I I I S I I I   I S   I I S S

म इति। यदि प्रतिपादम् मगणनगणौ नगणभगणौ सगणनगणौ जगणयगणौ च स्याताम्, तदा फणिपप्रथितं शेषोक्तम् अधीरकरीरनामकं-वृत्तं बोध्यम्॥ ७॥ ३६५३११३॥

तन्वी—

भूतमुनीनैर्यतिरिह भतनाः स्भौ भनयाश्च यदि भवति तन्वी ८ ३६५५३६७
S I I S S I   I I I I I S   S   I I S I   I I   I I I S S

भूतेति। यदि इह प्रतिपाद भगणतगणनगणसगणभगणाः भगणनगणयगणाश्च स्युः। तथा पञ्चभिः सप्तभिः द्वादशभिश्च वर्णैः यतिः स्यात् तदा तन्वीनाम भवति॥ ८॥ ३६५५३६७॥

अर्दितम्–नर्दितञ्च—

आर्दितवृत्तमिदं फणिपः परिवक्ति भषट्कनगणयगणाश्चेत् ४१५६८५५
S I I S I I S I I S I I S I I S I I S I I I I I I S S

च स्याताम्, तर्हि फणिपः इदम् अर्दितनामकं वृत्तं परिवक्ति "नर्दित" मित्यपि नामास्य बोध्यम्,, ॥ ९ ॥ ४१५६८५५ ॥

पार्षतसरणम्—

पार्षतसरणमिह स्याद्वृत्तं चेद्भनयमननयगणसृष्टम् १० ४१९०३३५
S I I I I I I S S S S S I I I I I I I I I I I S S

पार्षतेति । इह चेत् प्रतिपादम् भगणनगणयगणमगणनगणाः स्युः ततः द्वौ नगणौ नगणयगणौ च स्याताम्, तदा इद पार्षतसरणनामकं-वृत्त ज्ञेयम् ॥ १० ॥ ४१९०३३५ ॥

कोकपदम्—

कोकपदं वृत्तं खलु चेत्स्याद्भमसभनननयगणसमुदायः ११ ४१९३४७९
S I I S S S I I S S I I I I I I I I I I I I I I S S

कोकपदमिति । चेत् प्रतिपाद भगणमगणसगणभगणाः त्रयो नगणाश्च स्युः तदनु एकः यगणश्च स्यात्, तर्हि कोकपदं नाम वृत्तम्भवेत्॥ ११ ॥ ॥ ४१९३४७९ ॥

गङ्गोदकम्—

अष्टरेफा भवेयुर्यदा तर्हि वृत्तं फणीशोदितं नाम गङ्गोदकम् १२४७९३४९१
S I S S I S S I S S I S S I S S I S S I S S I S

अष्टेति । यदा प्रतिपादम् अष्टौ रगणाः भवेयुः, तर्हि गङ्गोदकं नाम वृत्त फणीशोदितम् शेषेण प्रोक्तम् ॥ १२ ॥ ४७९३४९१ ॥

उत्कटपङ्क्तिका—

स्यादुत्कटपङ्क्तिका तजौ रजौ च नगणसगणौ रौ यदा स्तस्तदा ४८४८३०१
S S I I S I S I S I S I I I I I I S S I S S I S

स्यादिति । यदा प्रतिपाद तगणजगणौ रगणजगणौ नगणसगणौ द्वौ रगणौ च स्तः, तदा उत्कटपङ्क्तिकानामकं वृत्तं स्यात् ॥१३ ॥४८४८३०१॥

शम्बरम्—

द्रुतविलम्बितवृत्तपदद्वयंवदति शम्बरवृत्तमिदं फणी १४ ५९९३९१२
I I I S I I S I S I S I I I S I I S I I S I S

द्रुतेति । यदि अत्र प्रतिपादं द्रुतविलम्बितवृत्तस्य पदद्वयं भवति अर्थात् नगणभगणौ भगणरगणौ नगणभगणौ भगणरगणौ च स्याताम्, तर्हि फणी शेष· इदं शम्बरनामक वृत्तं वदति ॥ १४ ॥ ५९९३९१२ ॥

द्विमिला—

सगणायदिचाष्टतदाफणिनायकसंलपिता भवति द्विमिला १५७१९०२३६
I I S I I S I I S I I S I I S I I S I I S I I S

संलपिता शेषप्रोक्ता द्विमिला नाम भवति इदं वृत्त भाषायां सवैयानाम्ना प्रसिद्धम् ॥ १५ ॥ ७१९०२३६ ॥

वेल्लितवेलम्—

बेल्लितवेलमिदं फणिगीतं यत्र च भत्रयमसनयुगलसाः १६ ८३६८५६७
S I I S I I S I I S S S I I S I I I I I I I I S

बेल्लितेति । यत्र प्रतिपादं त्रयो भगणाः मगणसगणनगणाः नगणसगणौ च स्याताम्, तत् इदं वेल्लितवेलं नाम वृत्तं फणिगीतम् शेषोक्तम् ॥ १६ ॥ ८३६८५६७ ॥

अतुलपुलकम्—

मुनिमितनगणसगणविरचितवपुरिदमतुलपुलकम् १७ ८३८८६०८
I I I I I I I I I I I I I I I I I I I I I I I I S

मुनीति । चेत् प्रतिपादं सप्त नगणाः तथा एकः सगणः स्यात्, तर्हि इदम् अतुलपुलकं नाम वृत्तं बोध्यम् ॥ १७ ॥ ८३८८६०८ ॥

अनामयम्—

इहाष्टजकारविनिर्मितकायमनामयनामकवृत्तमवेहि १८ ११९८३७२६
I S I I S I I S I I S I I S I I S I I S I I S I

इहेति । इह चेत् प्रतिपादम् अष्टौ जगणाः भवेयुः, तदा इदम् अनामयकामकं वृत्तम् अवेहि जानीहि । इदं वृत्तं भाषायां सवैयानाम्ना सुप्रसिद्धम् ॥ १८ ॥ ११९८३७२६ ॥

मेदुरदन्तम्–मेदुरदम्–किरीटश्च—

अष्टभकारविनिर्मितमेव हि मेदुरदन्तमिमं परिभावय १९ १४३८०४७१
S I I S I I S I I S I I S I I S I I S I I S I I

अष्टेति । यत्र प्रतिपादम् अष्टौ भगणाः भवेयुः तम् इमं मेदुरदन्तनामक वृत्तं परिभावय विद्धि । किरीटः मेदुरदम् इति द्वे नामनी अपि वृत्तस्यास्य विद्येते । इदमपि वृत्तं भाषायां "सवैया" इति नाम्ना प्रसिद्धम् ॥ १९ ॥ १४३८०४७१ ॥

इति संस्कृतिप्रस्तारे यथोपगतं नामानि १९ ।

---

# अथ पञ्चविंशत्यक्षरा वृत्तिः ।

२५ अतिकृतिः । भेदाः ३३५५४४३२

शरभूरिणी—

रेफसौ जगणौ भरौ सगणो यकारगुरु यदा शरभूरिणीवृत्तम् २९७६६०३

रेफसाविति । यदा प्रतिपादं रगणसगणजगणाः जगणभगणरगण सगणयगणगुरवश्च स्युः, तदा शरभूरिणीनामकं वृत्त ज्ञेयम् ॥ १ ॥ ॥ २६७६६०३ ॥

हीणहैयङ्गवीनम्—

अष्ट रेफा भवेयुर्गुरुश्चापि चेद्वृत्तमेतत्तदा हीणहैयङ्गवीनम् ४७९.३४९१

S। SS ।SS।SS। S S।SS। S S।S S। S S

अष्टेति । चेत्प्रतिपादम् अष्टौ रगणाः भवेयुः तथा एको गुरुः भवेत्, तदा हीणहैयङ्गवीन नामकं वृत्त ज्ञेयम् ॥ २ ॥ ४७९३४९१ ॥

मुदिरम्—

सगणाष्टकमन्त्यगुरु प्रथितं मुदिरं फणिपेन शुभं खलु वृत्तम् ७१९०२३६

।।S।।S ।।S।।S ।।S ।।S। ।S ।।SS

सगणेति । यत्र प्रतिपादम् अष्टौ सगणाः तथा अन्ते एको गुरुर्भवेत् तत् शुभम् वृत्त मुदिरं नाम फणिपेन प्रथितम् । इदं वृत्त हिन्दीभाषायां-"सवैया" नाम्ना प्रसिद्धम् ॥ ३ ॥ ७१९०२३६ ॥

नीपवनीयकम्—वनीपकम्-नीपकं च—

चेद्भननसभससगुरु यत्र प्रभवति नीपवनीयकवृत्तम् ४ ७२०२८१५

।।।।।।।।। SS।।।।S ।।S।।SS

चेदिति । चेत् यत्र प्रतिपादं भगणनगणौ नगणसगणौ भगणसगणौ द्वौ सगणौ च स्याताम् तथा चान्ते गुरुरेकः स्यात्, तर्हि तत् नीपवनी-यकं नाम वृत्तं भवेत् । वनीपकं नीपकं चेति नामान्तरमस्य ज्ञेयम् ॥४॥ ॥ ७२०२८१५ ॥

कुमुदमाला—

नतसभायोनतसगाःस्युःशरयतिश्चेत्किलतदास्यात्कुमुदमाला७५७६८०८

।।।SS।।। S S ।।।S S ।।।S S ।।।SS

नेति । चेत् प्रतिपाद नगणतगणसगणभगणयगणनगणतगणसगण-गुरवः स्युः तथा पञ्चभिः पञ्चभिः पञ्चभिः पञ्चभिः पञ्चभिश्च विरतिः स्यात्, तदा कुमुदमालानामकं वृत्तं ज्ञेयम् ॥ ५ ॥ ७५७६८०८ ॥

रसिकरसाला—

ननससभतनसगा इहचेत्स्युर्भवतीयं खलुरसिकरसाला ६ ८२८३९०४

।।।।।।।।S।।S S।।SS ।।।।।। SS

नेति । चेत् इह प्रतिपाद द्वौ नगणौ द्वौ सगणौ भगणतगणनगणस गणगुरवश्च स्युः, तर्हि इयं रसिकरसालानामकं वृत्तं भवति ॥ ६ ॥

विरहविरहस्यम्—

मो नौ त्यौ नगणयुगलसौ गश्च भवेयुर्भवति विरहविरहस्यम्॥७॥३६२४८९

S S S I I I I I I S S I I S S I I I I I I I I S S

म इति । यत्र प्रतिपाद मगणनगणौ नगणतगणौ यगणनगणौ नगण-सगण गुरवश्च भवेयुः, तत् विरहविरहस्य नाम वृत्त भवति।७। ३६२४८९।

भास्करम्—

भो नजयभननसा गुरुरेको भास्करमिदमिति यदि च भवेयुः ॥८॥

S I I I I I I S I I S S S I I I I I I I I I I I S S

भ इति । यदि अत्र प्रतिपादं भगणनगणजगणयगणभगणनगणाः नगणसगणगुरुवश्च भवेयुः, तर्हि इदं भास्करम् इति वृत्तम् भवति ॥ ॥ ८ ॥ ८३८१३११ ॥

चित्तचिन्तामणिः—

चित्तचिन्तामणिः स्यान्नवाष्टवसुभिरत्र रेफत्रयं नो जतौ तौ च गुः॥९॥

S I S S I S S I S I I I I S I S S I S S I S S I S

चित्तेति । चेत् अत्र प्रतिपाद त्रयो रगणाः नगणजगणा. द्वौ तगणौ एको गुरुश्च स्यात् तथा नवभि· अष्टभिःपुनः अष्टभिश्च वर्णैःयति स्यात्, तर्हि इदं चित्तचिन्तामणिनामक वृत्तं स्यात् ॥ ९ ॥ ९५९२४६७ ॥

व्याकोशकोशलम्—

व्याकोशकोशलमिदं तो भो यभससमं जगुरूवसुसप्तखेन्दुभिः॥१०॥

S S I S I I I S S S I I I I S I I S I I S I S I S

व्याकोशेति । चेत् अत्र प्रतिपादं तगणभगणयगणभगणाः त्रयः सगणाः जगणगुरू च स्याताम् । तथा अष्टभिः सप्तभिः दशभिश्च अक्षरैः यतिः स्यात्, तर्हि इदं व्याकोशलनामक वृत्त भवेत् ॥१०॥११३८५९७३॥

शिविका—

चेत्खलु वृत्तमिदं भगणाष्टकमन्तगुरुप्रथितं शिविकाख्यमतः ॥११॥

S I I S I I S I I S I I S I I S I I S I I S I I S

चेदिति । चेत् अतः अत्र सार्वविभक्तिकस्तसिः प्रतिपादम् अष्टौ भगणाः अन्ते एको गुरुश्च स्यात्, तर्हि इद शिवकाख्यम् वृत्त प्रथितम् । इदं च वृत्त भाषायां सवैयानामक प्रसिद्धम् ॥ ११ ॥ १४३८०४७१ ॥

भाविनीविलसितम्—

स्याद्यदा रनचतुष्टयं गुरुरपि स्फुटं भवति भाविनीविलसितम् ॥१२॥

S I S I I I S I S I I I S I S I I I S I S I I I S

स्यादिति । यदा प्रतिपादं रगणनगणरगणनगणरगणनगणरगण-नगणगुरवः स्युः, तदा भाविनीविलसितं नाम वृत्तं स्फुट भवति

विशेषकबलितं-विशेषित च—

भवति नगणयुग्मं द्वौ मौ चेज्जत्रयं नगुरू च विशेषकबलितम् ॥१३॥

। । । । । । ऽ ऽ ऽ ऽ ऽ ऽ । ऽ । । ऽ । । ऽ । । । । ऽ

भवतीति । चेत् प्रतिपादम् द्वौ नगणौ द्वौ च मगणौ त्रयोजगणाश्च नगणगुरू च स्याताम्, तर्हि विशेषकबलित नाम वृत्त भवति विशेषित मिति नामान्तरमस्य बोध्यम् ॥ १३ ॥ १६१७५१६८ ॥

अभ्रभ्रमणम्—

अभ्रभ्रमणमिदं वृत्तं रचितं तनमसजलधिनगणगुरुभिः ॥ १४ ॥

ऽ ऽ । । । । ऽ ऽ ऽ । । ऽ । । । । । । । । । । । । ऽ

अभ्रेति । यदि इह प्रतिपादम् तगणनगणमगणसगणा. चत्वारो नगणाश्च एकश्चान्ते गुरु स्यात्, तर्हि इदं अभ्रभ्रमणनामकं वृत्त भवति इति यावत् ॥ १४ ॥ १६७७४७१७ ॥

क्रोशपदा—

क्रोशपदा स्याद्भो मसगाश्चेदिषुशरवसुमुनियतिमनुलघुगै ॥ १५ ॥

ऽ । । ऽ ऽ ऽ । । ऽ ऽ । । । । । । । । । । । । । । ऽ

क्रोशेति । चेत् प्रतिपादम् भगणमगणसगणगुरवः चतुर्दशलघव-श्चान्ते गुरुरेकश्च स्यात् तथा पञ्चभि. पञ्चभिः अष्टभिः सप्तभिश्चाक्षरैः यतिः स्यात्, तर्हि क्रोशपदानामक वृत्तं स्यात् ॥ १५ ॥ १६७७६३८१ ॥

अलका-अलिका च—

वसुमितनगणगुरुरचिततनुरियमिह भवति तदलका ॥ १६ ॥

। । । । । । । । । । । । । । । । । । । । । । । । ऽ

वस्विति । यदि इह प्रतिपादम् अष्टौ नगणाः एक. गुरुश्च स्यात्, तर्हि इयम् अलकानामकं वृत्त भवति, अलिकेति नामान्तरमस्य बोध्यम् ॥ १६ ॥ १६७७७२१६ ॥

मल्लपल्लीप्रकाशम्—

भुजङ्गप्रयातस्य पादद्वयं स्याल्लघुश्चापि चेन्मल्लपल्लीप्रकाशं च ॥१७॥

। ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ ।

भुजङ्गेति । चेत् प्रतिपादम् भुजङ्गप्रयातनाम्न वृत्तस्य पादद्वयम् अन्ते लघुश्चैकः स्यात् अर्थात् यदि प्रतिपादम् अष्टौ यगणा. एकः लघुश्च स्यात् तर्हि मल्लपल्लीप्रकाशनामकं वृत्त भवेत् ॥१७॥१९१७३९६२॥

सौदामनदाम—

सचतुष्कनजा यसला इह चेद्भवति तदा खलु सौदामनदाम ॥१८॥

। । ऽ । । ऽ । । ऽ । । ऽ । । । । ऽ । । ऽ ऽ । । ऽ ।

सेति । चेत् इहप्रतिपादम् चत्वार सगणाः नगणजगणयगणसगण लघवश्च स्युः, तदा इदं सौदामनदामनामक वृत्त भवति॥१८॥२३५२५०८४॥

# अथ षड्विंशत्यक्षरा वृत्तिः ।

## २६ उत्कृतिः भेदाः ६७१०८८६४

जीमूतध्वानम्—

यत्राष्टौ माः स्युश्चेद्द्वौ च स्यातां जीमूतध्वानं नून नागाधीशो ब्रूते तद्वृत्तं
S S S S  S S S S  S S  S S S S  S S S S  S S S  S S S S S

यत्रेति । चेत् यत्र प्रतिपादम् अष्टौ मगणाः स्युः द्वौ गुरू च स्याताम्, तर्हि नागाधीशः पिङ्गलः तद्वृत्तं जीमूतध्वानं नाम ब्रूते ॥१॥

तनुकिलकिञ्चितम्—

वस्वाशाभिर्नागैर्वृत्तं चेत्तनु किल किञ्चितमिह तन्मत्रयनौ ज्नौ त्यौ गौ
S S S S S S S S S I I  I I  S  I I I I S S I I  S S  S S

वस्विति । चेत् इह प्रतिपादम् त्रयो मगणाः तथा नगणजगणनगणाः तगणयगणौ तथा द्वौ गुरू स्याताम् तथा अष्टभिः दशभिः पुनः अष्टभिश्च वर्णैः यतिः स्यात्, तत् तर्हि इदम् तनुकिलकिञ्चितं नाम वृत्तं भवेत् ॥ २ ॥ ३३९९१६६ ॥

विनयविलासः—

भवति चतुष्कं च नयगणानां गुरुयुगल चेद्विनयविलासः प्रोक्तः ॥३॥
I I I I S S  I I I I S S  I I I I S S I I I I S S S S

भवतीति । चेत् प्रतिपादम् नगणयगणौ पुनः नगणयगणौ पुनः नगणयगणौ पुनः नगणयगणौ अन्ते द्वौ गुरू च स्याताम्, तर्हि विनयविलासो नाम प्रोक्तः ॥ ३ ॥ ३९९३५७६ ॥

अपवाहः—

मो नाः षट् सगगिति यदि नवरसरसशरयतियुतमपवाहाख्यम् ॥४॥
S S S I I I I  I I  I I I I I I I I I I I I I I S S S

म इति । यदि प्रतिपादम् एको मगणः षट् नगणाः एकः सगणः द्वौ गुरू च स्याताम् तथा नवभिः षड्भिः पुनः षड्भिः पञ्चभिश्च वर्णैः यतिः स्यात्, तर्हि अपवाहाख्यम् वृत्तम्बोध्यम् ॥ ४ ॥ ८३८८६०१ ॥

विश्वविश्वासः—

वाणैस्त्रिस्वरैस्स्याद्विरामो यदा मो यत्र यरौ च तौ गौ विश्वविश्वासवृत्तम् ५
S S S I S S  I S S I S  S S I S S S  S  S S I  S S I S S

वाणैरिति । यदा प्रतिपादम् एको मगणः त्रयः यगणाः द्वौ रगणौ द्वौ तगणौ द्वौ गुरू च स्याताम् तथा पञ्चभिः सप्तभिः पुनः सप्तभिश्च वर्णैः

अशोकानोकहम्—

चेद्यत्र स्युर्मभनभनरास्तयुगगुरुगा अशोकानोकहं वृत्तमेतत् ॥६॥

S S S  S I I I I I S I I I I I S  I S  S S I S S I S S

चेदिति। चेत् यत्र प्रतिपादम् मगणभगणनगणभगणनगणरगणाः तथा द्वौ तगणौ द्वौ गुरू च स्याताम्, तर्हि एतत् अशोकानोकहनामक वृत्तं भवेत्॥ ६ ॥ ९६३४९६१ ॥

आभासमानम्—

चतुर्भिर्यकारैस्तकारैश्चतुर्भिर्गाभ्या च स्पष्टं भवेद्वृत्तमाभासमानम् ॥७॥

I S S I S S I S S I S S S S S I S S I S S I S S I S S

चतुर्भिरिति। यत्र प्रतिपाद चत्वारः यगणाः चत्वारः तगणाः द्वौ गुरू च स्याताम्, तत् आभासमाननामक वृत्तम् भवेत् ॥७॥९५८७०६१॥

वीरविक्रान्तः—

मो नो जो भवति यदा तकाराश्च पञ्चेह गौ नामतो वीरविक्रान्तवृत्तम्८

S S S I I I I S I S S I S S I S S I S S I S S I S S

म इति। यदा इह मगणनगणजगणाः पञ्च तगणास्तथा द्वौ गुरू स्याताम्, तदा इदम् वीरविक्रान्तनामक वृत्त भवति ॥८॥९५८७०६५॥

विकुण्ठकण्ठः—

चेद्रजौ रजौ रजौ रजौ गुरू यदा तदा फणीश्वरोदितो विकुण्ठकण्ठः

S I S I S I S I S I S I S I S I S I S I S I S I S I S S

चेदिति। यदाप्रतिपादम् रगणजगणौ पुनः रगणजगणौ पुनः रगण-जगणौ पुनः रगणजगणौ द्वौ गुरू च स्याताम्। तदा विकुण्ठकण्ठो नाम फणीश्वरोदितः शेषोक्त ॥ ९ ॥ १११८४८११ ॥

चारुगतिः—

नयुगसमनजरजा गौ चेच्चारुगतिरियं तदेति वक्ति सर्पराजः॥१०॥

I I I I I I I I S S S S I I I I S I S I S I S I S S

नयुगेति। चेत् अत्र प्रतिपादम् द्वौ नगणौ सगणभगणौ नगणजगणौ रगणजगणौ द्वौ गुरू च स्याताम्, तदा इय चारुगतिः नाम भवेत्, इति सर्पराजः शेषः वक्ति ॥ १० ॥ ११२०२८१६ ॥

प्रियजीवितम्—

चेद्भगणाष्टकमन्त्यगुरुद्वयमत्र तदा भवति प्रियजीवितवृत्तम् ॥११॥

S I I S I I S I I S I I S I I S I I S I I S I I S S

चेदिति। चेत् अत्र प्रतिपादम् अष्टौ भगणाः द्वौ गुरू च भवेताम्,

भसलशलाका —

मो भः सो मो नयतनगागश्चेत्स्युर्वसुवसुदिग्भिः सा स्याद्भसलशलाका

S S S S I I I I S S S S I I I I S S S S I I I I S S

म इति। चेत् यत्र प्रतिपादम् मगणभगणसगणमगणनगणयगणतगणनगणाः स्युः अन्ते द्वौ गुरू स्याताम्। तथा अष्टभिः पुनः अष्टभिः पुनर्दशभिश्च वर्णैः यतिः स्यात् सा भसलशलाका नाम स्यात् ॥ १२ ॥ ॥ १५७९०३२१ ॥

उज्झितकदनम्—

उज्झितकदनमिदं भवतीह यदा भनजजजनननगगसृष्टम् ॥१३॥

S I I I I I I S I I S I I S I I I I I I I I I I S S

उज्झितेति। यदा इह प्रतिपाद भगणनगणौ त्रयः जगणाः त्रयः नगणाः द्वौ गुरू च स्याताम्, तदा इदम्, उज्झितकदन नाम वृत्तम्भवति ॥ १३ ॥ २६७६७८७१ ॥

कुहककुहरम्—

कुहककुहरवृत्त वै यदा नौ मयनयुगलमा यो लो गुरुः स्यात्तदा ॥१४॥

I I I I I I S S S I S S I I I I I I S S S I S S I S

कुहकेति। यदा प्रतिपाद द्वौ नगणौ मगणयगणौ पुनः द्वौ नगणौ मगणयगणौ लघुगुरू च स्याताम् तदा कुहककुहरनामक वृत्तं स्यात् ॥ १४ ॥ १६१३२९९२ ॥

सूरसूचकः—

वृत्तं स्यादिह सूरसूचकमिदं मसजाः सगणत्रयं चेद्यकारौ लगौ ॥१५॥

S S S I I S I S I I I S I I S I I S I S S I S S I S

वृत्तमिति। चेत् इह प्रतिपादम् मगणसगणजगणाः त्रय. सगणाःद्वौ यगणौ लघुगुरू च स्याताम्. तदा इद सूरसूचकं नाम वृत्त स्यात् ॥ १५ ॥ ॥ १९२४८२८५ ॥

विषाणाश्रितम्—

यनौ रो भजतसा यलौ गश्च खलु चेत्तदा शेषभणितं विषाणाश्रितम् १६

I S S I I I S I S S I I I S I S S I I I S I S S I S

यनाविति। चेत् प्रतिपादं यगणनगणरगणभगणजगणतगणसगणयगणलघुगुरवः स्युः, तदा विषाणाश्रितं नाम वृत्त शेषेण भणितम्॥१६॥ ॥ १६८१५६१० ॥

विनिद्रसिन्धुरः—

रेफकाणां चतुष्कं जरौ जौ लगौ यदा तदा विनिद्रसिन्धुरो भवेदयम्

रेफकाणामिति । यदा अत्र प्रतिपादं चत्वारः रगणाः जगणरगणौ पुनः जगणरगणौ गुरू च स्यातम्, तदा अयं विनिद्रसिन्धुरो नाम भवेत् ॥ १७ ॥ २२३६९४२७ ॥

शकुन्तकुन्तलः—

मो रौ नौ रो जरौ लो गुरुर्नवनगदशभिः शकुन्तकुन्तलं यदा तदा १८
S S S S I S S I S I I I I I I S I S I S I S I S I S

म इति । यदा प्रतिपादं मगणरगणौ रगणनगणौ नगणरगणौ जगणरगणौ लघुगुरू च स्यातम् तथा नवभिः सप्तभिः दशभिश्च वर्णैः यतिः स्यात्, तदा शकुन्तकुन्तल नाम वृत्त बोध्यम् ॥ १८ ॥ २२३८०१७७ ॥

भुजङ्गविजृम्भितम्—

वस्वीशाश्वैश्छेदोपेतं ममतनयुगनरसलगैर्भुजङ्गविजृम्भितम् ॥१९॥
S S S S S S S S I I I I I I I I I I I S I S I I S I S

वस्विति । यत्र प्रतिपाद द्वौ मगणौ एकः तगणः त्रयो नगणाः रगणसगणलघुगुरवश्च स्युः तथा अष्टभिः एकादशभिः सप्तभिश्च वर्णै॰ यतिः स्यात्, तत् भुजङ्गविजृम्भितनामकं वृत्त बोध्यम् ॥ १९ ॥ २३८५४८४९ ॥

काकलीकलकोकिलः—

काकलीकलकोकिलाख्य मिदं तदा रसजाजभौरसजालगौ च यदा २०
S I S I I S I S I I S I S I I S I S I I S I S I I S

काकलीति । यदा इह प्रतिपाद रगणसगणजगणाः जगणभगणरगणसगणजगणलघुगुरवश्च स्युः, तदा इदं काकलीकलकोकिलाख्य वृत्त बोध्यम् ॥ २० ॥ २८१४२४२७ ॥

शृङ्खलवलयितम्—

शृङ्खलवलयितमिदमत्र भवेयुश्चेद्भनभमननजा लगुरू ॥ २१ ॥
S I I I I I I I I S I I S S S I I I I I I I S I I S

शृङ्खलेति । चेत् अत्र प्रतिपादम् भगणनगणौ नगणभगणौ मगणनगणौ नगणजगणलघुगुरवश्च भवेयुः तर्हि इदम् शृङ्खलवलयित नाम वृत्तम्बोध्यम् ॥ २१ ॥ २९३३०९४३ ॥

विरामवाटिका—

भवति विरामवाटिका किल चेन्नजरसनाजरौ नलौ गुरु च तदा॥२२॥
I I I I S I S I S S I I S I I I I S I I I S I I I I S

भवतीति । चेत् प्रतिपाद नगणजगणरगणसगणनगणजगणरगण नगणलघुगुरवः स्युः, तदा विरामवाटिकानामक वृत्तं भवति ॥ २२ ॥

कर्णाटकम्—

कर्णाटकं भवति चेत्तदा तभजभाजभौ नगणयुगमिह लघुगौ॥२३॥

S S I S I I I S I S I I I S I S I I I I I I I I I S

कर्णाटकमिति । चेत् इह प्रतिपादं तगणभगणौ जगणभगणौ पुनः जगणभगणौ द्वौ नगणौ लघुगुरू च स्यातां तदा कर्णाटकं नाम वृत्तम्भवति ॥ २३ ॥ ३३५९२८२१ ॥

कुम्भकम्—

नगणयुगलरेफषट्क गलौ प्रोदितं कुम्भकं वृत्तमेतत्फणीशेन ॥२४॥

I I I I I I S I S S I S S I S S I S S I S S I S S I

नगणेति । यदि अत्र प्रतिपादं द्वौ नगणौ षड् रगणाः गुरुलघू च भवेतां, तदा फणीशेन एतत् कुम्भकं नाम वृत्त प्रोदितम् ।२४॥२८३४७९६८॥

वशंवदः—

सगणाष्टकमन्त्यलघुद्वयमेतदवेहि वशंवदनामकमेत्र हि ॥ २५ ॥

I I S I I S I I S I I S I I S I I S I I S I I S I I

सगणेति । यत्र प्रतिपादम् अष्टौ सगणाः द्वौ लघू च स्याताम् , तत् एतत् वशंवदनामकं वृत्तम् अवेहि जानीहि इदम्वृत्तं लोके सवैयानाम्ना प्रसिद्धम् ॥ २५ ॥ ५७५२१८८४ ॥

इत्युत्कृतिप्रस्तारे यथोपनत नामानि २५ पञ्चविंशतिः

इति वर्णप्रस्तारे समवृत्तानि ॥

---

# अथार्धसमवृत्तानि ।

वसन्तमालिका परिश्रुता च—

विषमे ससजा गुरू समे चेत् । सभरा यश्च वसन्तमालिका स्यात् ॥१॥

I I S I I S I S I S S I I S S I I S I S I S I S S

विषम इति । चेत् विषमे पादे प्रथमतृतीययोः चरणयोः इति यावत् द्वौ सगणौ एकः जगणः द्वौ गुरू च स्याताम् तथा समे पादे द्वितीयचतुर्थयोः चरणयोः इति यावत् सगणभगणरगणयगणाः स्युः तदा वसन्तमालिकानाम वृत्त स्यात् । परिश्रुता इति नामान्तरमस्य बोध्यम्॥१॥

प्रमालिका—सौरभसञ्चितञ्च—

एषा विपरीतघटिता प्रमालिका सौरभसंचितं च ॥ २ ॥

अर्थात् यदि विषमे पादे सगणभगणरगणयगणाः स्युः तथा समे पादे द्वौ सगणौ एक. जगणः द्वौ गुरू च स्याताम् तर्हि प्रमालिकानाम-

उपचित्रा—

यदि सौ सलगा विषमे दले । भत्रितयं युजि गावुपचित्रा ॥ ३ ॥
। । ऽ । । ऽ । । ऽ । । ऽ । । ऽ । । ऽ । । ऽ । । ऽ ऽ

यदीति । यदि विषमे दले प्रथमतृतीययोः पादयोः सगणाः लघुगुरू च स्याताम् । तथा युजि दले द्वितीयचतुर्थयोः पादयोः त्रयः भगणाः द्वौ गुरू च स्याताम्, तदा उपचित्रानामक वृत्त स्यात् ॥ ३ ॥

विलोमेऽवहित्रा ॥ ४ ॥

अर्थात् विषमे त्रय भगणाः द्वौ गुरू च स्याताम् समे च त्रयः सगणाः लघुगुरू च स्याताम्, तदा अवहित्रानामक वृत्तं बोध्यम् ॥ ४ ॥

वेगवती—

विषमे प्रथमाक्षरहीनं दोधकमेव हि वेगवती स्यात् ॥ ५ ॥
। । ऽ । । ऽ । । ऽ ऽ ऽ । । ऽ । । ऽ । । ऽ ऽ

विषम इति । विषमे प्रथमतृतीययोः पादयोः प्रथमाक्षरेण हीनं रहितं दोधकवृत्तम् वेगवतीनामकं वृत्त स्यात् ॥ ५ ॥

विलोमे च वर्गवती ॥ ६ ॥

अर्थात् समे पादे प्रथमाक्षरहीनं दोधकवृत्त वर्गवतीनामक वृत्तं स्यात् ॥ ६ ॥

हरिणीप्लुता—

अयुजि प्रथमे नविवर्जिता । द्रुतविलम्बितता हरिणीप्लुता ॥ ७ ॥
। । ऽ । । ऽ । । । । ऽ । । । ऽ । । ऽ । । ऽ । ऽ

अयुजीति । अयुजि प्रथमतृतीयपादयोः प्रथमेन अक्षरेण विवर्जिता रहिता द्रुतविलम्बितता द्रुतविलम्बितवृत्तमिति यावत् हरिणीप्लुतानाम वृत्त भवति ॥ ७ ॥

उभयतः समा ॥ ८ ॥

अर्थात् द्वितीयचतुर्थपादयोः आद्याक्षररहित द्रुतविलम्बितवृत्त हरिणीप्लुतानमकमेव वृत्त ज्ञेयम् ॥ ८ ॥

अपरवक्त्रम्—

अयुजि ननरला गुरुस्समे । तदपरवक्त्रमिदं नजौ जरौ ॥ ९ ॥
। । । । । । ऽ । ऽ । ऽ । । । । ऽ । । ऽ । ऽ । ऽ

अयुजीति । यत्र अयुजि प्रथमतृतीयपादयोः द्वौ नगणौ रगणलघु-
---- समे द्वितीयचतुर्थपादयोः नगणजगणौ च स्याताम्,

विलोम आद्याक्षरहीनम् ॥ १० ॥

अर्थात् यत्र प्रथमतृतीयपादयोः नगणजगणौ जगणरगणौ च स्याताम् द्वितीयचतुर्थयो· पादयो· द्वौ नगणौ रगणलघुगुरवश्च स्यु, तत् परवक्त्रनामक वृत्तं बोध्यम् ॥ १० ॥

पुष्पिताग्रा—

अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ॥११॥
। । । ।।ऽ। ऽ।ऽऽ ।। । ।ऽ ।।ऽ।ऽ।ऽऽ

अयुजीति। यदि अयुजि प्रथमतृतीयपादयो द्वौ नगणौ एको रगण· तत· एक यगणश्च स्यात्, तथा युजि द्वितीयचतुर्थयोः पादयो· नगणजगणौ जगणरगणगुरवश्च स्यु·, तदा पुष्पिताग्रानामक वृत्त· ज्ञेयम् ॥ ११ ॥

विलोमेऽश्विताग्रा ॥ १२ ॥

अर्थात् यदि प्रथमतृतीयपादयो नगणजगणौ जगणरगणगुरवश्च स्यु तथा द्वितीयचतुर्थपादयो द्वौ नगणौ रगणयगणौ च स्याताम्, तदाऽश्विताग्रानामकं वृत्त बोध्यम् ॥ १२ ॥

सुन्दरी—सुरमालिका च वियोगिनी क्वापि—

अयुजोर्यदि सौ जगौ युजोः सभरा लगौ ननु सुन्दरी मता ॥१३॥
।।ऽ ।।ऽ ।ऽ।ऽ ।।ऽ ऽ ।। ऽ।ऽ।ऽ

अयुजोरिति। यदि अयुजो· प्रथमतृतीयपादयो द्वौ सगणौ जगण गुरू च स्यातां तथा युजो द्वितीयचतुर्थयो पादयो सगणभगण रगणलघुगुरवश्च स्यु, तदा सुन्दरी नाम मता इष्टा, सुरमालिकेति नामान्तरमस्य बोध्यम्, इद क्वापि वियोगिनीनाम्ना प्रसिद्धम् ॥ १३ ॥

उभयतः समाः ॥ १४ ॥

अर्थात् यदि विषमपादयो सगणभगणरगणलघुगुरव स्यु तथा समपादयो द्वौ सगणौ जगणगुरू च स्याताम्, तदा सुन्दरीनामकमेव वृत्त भवेत् ॥ १४ ॥

सारिका—

सारिका च विषमे रथोद्धता स्वागता यदि समे भवतीह ॥ १५॥

सारिकेति। इह यदि विषमे प्रथमतृतीययो पादयोः रथोद्धतावृत्तस्य ---- स्यात तथा समे द्वितीयचतुर्थयो पादयो स्वागतावृत्तस्य ल

विलोमे कर्णिनी

एतदेव लक्षणतः स्पष्टयति—

कर्णिनी—

स्वागता च विषमे किल चेत्स्यात् कर्णिनीं वद समे रथोद्धता॥१६॥

चेत् विषमे स्वागतायाः लक्षणं स्यात् तथा समे रथोद्धतायाः लक्षणं स्यात्, तदा कर्णिनीनामक वृत्तं वद ॥ १६ ॥

ईहा—

ईहा विषमे यदि तामरसं स्यात् दोधकमेव भवेत्सम ईहा ॥१७॥

इहेति। यदि इह विषमे प्रथमतृतीयपादयोः तामरसवृत्तस्य लक्षण-स्यात् तथा समे द्वितीयचतुर्थपादयोः दोधकवृत्तस्य लक्षणं स्यात्, तदा ईहानामक वृत्तं भवेत् ॥ १७ ॥

विलोमे द्रुतमध्या ॥ १८ ॥

अर्थात् यदि विषमे दोधकवृत्तस्य लक्षणं स्यात्, समे तामरस-वृत्तस्य लक्षण स्यात्, तदा द्रुतमध्यानामकं वृत्त भवेत् ॥ १८ ॥

कोरकिता—

कोरकिता विषमे भगणा गौ भवति समे चेत् कुसुमविचित्रा ॥१९॥
S I I S I I S I I S S I I I I S S I I I S S

कोरकितेति। चेत् विषमे प्रथमतृतीययाः पादयोः त्रयः भगणाः द्वौ गुरू च स्याताम् तथा समे द्वितीयचतुर्थपादयोः कुसुमविचित्रावृत्तस्य लक्षणं स्यात्, तदा कोरकितानामकं वृत्तं भवति ॥ १९ ॥

विलोमे पाटलिका ॥ २० ॥

अर्थात् यदि विषमे कुसुमविचित्रावृत्तस्य लक्षणं स्यात् समे च भगणत्रय गुरुद्वय च स्यात्, तदा पाटलिकानामवृत्तं भवति ॥ २० ॥

अरुन्तुदः—

विषमे सगणौ जगौ यदा नजजरमेतदरुन्तुदः समे ॥ २१ ॥
I I S I I S I S I S I I I I S S I I S I S I S I S

विषम इति। यदा विषमे प्रथमतृतीयपादयोः द्वौ सगणौ जगणगुरू च स्याताम् तथा समे द्वितीयचतुर्थपादयोः नगणजगणौ जगणरगणौ च स्याताम्, तदा एतत् अरुन्तुदनामकं वृत्तं भवेत् ॥ २१ ॥

विलोमेऽनूपकम् ॥ २२ ॥

प्रभासिता—

विषमे सगणौ जगौ यदा मः सो जो गुसमे प्रभासिता ॥ २३ ॥
। । ऽ । । ऽ । ऽ । ऽ ऽ ऽ ऽ । । ऽ । ऽ । ऽ

विषम इति । यदा विषमे प्रथमतृतीयपादयोः द्वौ सगणौ जगणगुरू च स्याताम् तथा समे द्वितीयचतुर्थपादयोः मगणसगणजगणगुरवः स्युः, तर्हि प्रभासितानामक वृत्तं भवेत् ॥ २३ ॥

उभयतः समा ॥ २४ ॥

अर्थात् यदा विषमे मगणसगणजगणगुरवः स्यु. समे च द्वौ सगणौ जगणगुरू च स्याताम्, तदा प्रभासितानामकमेव वृत्तं भवेत् ॥ २४ ॥

उपाढ्यम्—

प्रथम इह यर्हि पञ्च शाखी तत्परतो वलभी भवेदुपाढ्यम् ॥ २५॥

प्रथम इति । इह यर्हि यदा प्रथमतृतीययोः पादयो' पञ्चशाखीवृत्तस्य लक्षण स्यात् तथा द्वितीयचतुर्थपादयो. वलभीवृत्तस्य लक्षण स्यात्, तदा उपाढ्यनामकं वृत्तं भवेत् ॥ २५ ॥

उभयतः समम् ॥ २६ ॥

अर्थात् यदि विषमे वलभीवृत्तस्य लक्षण स्यात् तथा समे पञ्चशाखीवृत्तस्य लक्षणं भवेत्, तर्हि उपाढ्यनामकमेव वृत्त भवेत् ॥ २६ ॥

हरिलुप्ता—

उपचित्रमथो विषमे यदा हरिलुप्ता च समे ननु राधिका ॥२७॥
। । ऽ । । ऽ । । ऽ । ऽ । । ऽ ऽ । । ऽ । । ऽ । ऽ

उपेति । यदा विषमपादयोः उपचित्रवृत्तस्य लक्षणं स्यात् तथा समपादयोः राधिकावृत्तस्य लक्षणं स्यात्, तदा हरिलुप्तानामक वृत्तं-स्यात् ॥ २७ ॥

विलोमे आद्यपदहीनाऽर्थाल्लुप्ता ॥ २८ ॥

यदा विषमे राधिकावृत्तलक्षण स्यात् समे च उपचित्रवृत्तलक्षणं-स्यात्, तदा लुप्तानामकं वृत्तं भवेत् ॥ २८ ॥

भद्रविराट्—

ओजे तपरौ जरौ गुरुश्चेत् म्सौ ज्गौ ग्भद्रविराड् भवेदनोजे ॥२९॥
ऽ ऽ । । ऽ । ऽ । ऽ ऽ ऽ ऽ ऽ । । ऽ । ऽ । ऽ ऽ

ओज इति । चेत् ओजे विषमपादयोः तगणजगणरगणगुरवस्स्युः तथा अनोजे समपादयोः मगणसगणजगणाः द्वौ गुरू च स्याताम्,

विलोमे युद्धविराट् ॥ ३० ॥

यदि विषमे मगणसगणजगणाः द्वौ गुरू च स्याताम् तथा समे तगणजगणरगणगुरव स्युः, तदा युद्धविराड्नामकं वृत्तं ज्ञेयम् ॥ ३० ॥

रुचिमुखी—

इह यदि भवति मुखे खलु चण्डी तदनु रुचिमुखी विधुरवितानम् ।३१

। । । । । । । । S । । S S । । । । । । S । । । । S ।

इहेति । इह यदि विषमपादयोः चण्डीवृत्तस्य लक्षण स्यात् तथा समपादयोः विधुरवितानवृत्तस्य लक्षण स्यात्, तदा रुचिमुखीनामकं-वृत्तं भवति ॥ ३१ ॥

विलोमे विमुखी ॥ ३२ ॥

यदि विषमे विधुरवितानलक्षण स्यात्, तदा विमुखीनामकं वृत्त-ज्ञेयम् ॥ ३२ ॥

विमानिनी—

सभरा लगौ विषमे समे यदा मो नो ज्रौ भवति विमानिनी तदा।३३।

। । S S । । S । S । S S S S । । । । S । S । S

सभेति । यदा विषमपादयोः सगणभगणरगणलघुगुरवः स्युः तथा समपादयोः मगणनगणजगणरगणाः स्युः, तदा विमानिनीनामकं वृत्तं-भवति ॥ ३३ ॥

उभयतः समा ॥ ३४ ॥

यदि विषमे मगणनगणजगणरगणाः स्युः तथा समे सगणभगण-रगणलघुगुरवः स्युः, तदा विमानिनीनामकमेव वृत्तं ज्ञेयम् ॥ ३४ ॥

शुकावली—

पादे विषमे तजौ रगौ चेदन्यस्मिन्मनजरगाः शुकावली स्यात् ।३५।

S S । । S । S । S S S S S । । । । S । S । S S

पाद इति । चेत् विषमे पादे प्रथमतृतीययोः पादयोः तगणजगण-रगणगुरवः स्युः तथा अन्यस्मिन् द्वितीयचतुर्थपादयोः मगणनगणजग-णरगणगुरवः स्युः, तदा शुकावलीनामक वृत्तं स्यात् ॥ ३५ ॥

विलोमे किंपूर्वाऽर्थात् किंशुकावली ॥ ३६ ॥

यदि विषमपादयोः मगणनगणजगणरगणगुरवः स्युः तथा समपाद-योः तगणभगणरगणगुरवः स्युः, तदा किंशुकावलीवृत्तं बोध्यम् ॥ ३६ ॥

सुराढ्या—

नेति। यदि असमे विषमपादयोः द्वौ नगणौ रगणयगणौ च भवेताम् अन्यस्मिन् समपादयोः मगणसगणजगणा. द्वौ गुरू च स्यातम्, तर्हि सुराढ्यानामकं वृत्तं बोध्यम् ॥ ३७ ॥

विलोमे नञ्पूर्वमर्थादसुराढ्या ॥ ३८ ॥

यदि विषमपादयोः मगणसगणजगणा द्वौ गुरू च भवेताम् समपादयाश्च द्वौ नगणौ रगणयगणौ च भवेताम्, तदा असुराढ्यानामक वृत्तं ज्ञेयम् ॥ ३८ ॥

प्रमाथिनी—

यदि विषमे नजजं रगौ भवेतां सभरा यश्च समे प्रमाथिनी स्यात् ॥ ३९ ॥

। । । । S । । S । S । S S । । S S । । S । S । S S

यदीति। यदि विषमपादयाः नगणजगणौ जगणरगणौ भवेताम् तथाऽन्ते गुरुरेकश्च स्यात् तथा समपादयोः सगणभगणरगणयगणाः स्युः तदा प्रमाथिनीनामकं वृत्तं स्यात् ॥ ३९ ॥

विलोमे तथैवार्थाद् नञ्पूर्वाऽप्रमाथिनीति यावत् ॥ ४० ॥

यदि विषमपादयोः सगणभगणरगणयगणाः स्युः समपादयोः नगणजगणौ जगणरगणौ भवेताम् अन्ते गुरुश्च स्यात्, तदा अप्रमाथिनीनाम वृत्तं स्यात् ॥ ४० ॥

सुधा—

मः सो जो विषमे गुरुर्यदा सभरा लो गुरुः तत्समे सुधा ॥ ४१ ॥

S S S । । S । S । S । । S S । । S । S । S

म इति। यदा विषमपादयोः मगणसगणजगणगुरवः स्युः समपादयोः सगणभगणरगणलघुगुरवः स्युः, तत् तर्हि सुधानामकं वृत्तं स्यात् ॥ ४१ ॥

विलोमे तथैवार्थाद् नञ्पूर्वाऽसुधेति यावत् ॥ ४२ ॥

यदि विषमपादयोः सगणभगणरगणलघुगुरवः स्युः समपादयोः मगणसगणजगणगुरवः स्युः, तदा असुधानामक वृत्तं ज्ञेयम् ॥ ४२ ॥

किलिकिता–किलकिता च—

यत्र चेद्विषमके रथोद्धता किलिकिता नभजराः समे तदा ॥ ४३ ॥

S । S । । । S S । । S । । । । S । । । S । S । S

यत्रेति। चेत् यत्र विषमपादयोः रथोद्धतावृत्तलक्षणं स्यात् समपादयोः रगणभगणजगणरगणाः स्युः, तदा किलिकितानामकं तत् वृत्तं ज्ञेयम् किलकितेति नामान्तरमस्य बोध्यम् ॥ ४३ ॥

व्यस्ततः समाऽर्थात् किलकिती ॥ ४४ ॥

तावृत्तलक्षणं स्यात्, तदा किलकितानामकमेव वृत्तं ज्ञेयम् ॥ ४४ ॥

पद्मावती—

**पद्मावती तभजया विषमे सा समके सजौ सयुगगौ किल चेत्स्यात् ४५**

S S I S I I I S I I S S I I S I I I I I S I I S S

पद्मावतीति । चेत् यत्र विषमपादयोः तगणभगणजगणयगणाः स्युः समपादयोः सगणजगणसगणाः सगणगुरू च स्याताम्, तदा स पद्मावती नाम स्यात् ॥ ४५ ॥

**उभयतस्समाऽर्थात् पद्मावती ॥ ४६ ॥**

यदि विषमपादयोः सगणजगणसगणाः सगणगुरू च स्यातां समपादयोः तगणभगणजगणयगणाः स्युः, तदा पद्मावतीनामकमेव वृत्तं-स्यात् ॥ ४६ ॥

नटकः—

**विषमे यदि तोटकमत्र तदा स्यान्मोटनकं नटकश्च समे ॥४७॥**

I I S I I S I I S I I S S S I I S I I S I I S

विषम इति । यदि अत्र विषमपादयोः तोटकवृत्तलक्षणं स्यात् समपादयोः मोटनकवृत्तलक्षण स्यात्, तदा नटकनामकं वृत्त स्यात् ॥४७॥

**विलोमे किम्पूर्वोऽर्थात् किन्नटकः ॥ ४८ ॥**

यदि विषमपादयोः मोटनकवृत्तलक्षण स्यात् समपादयोः तोटकवृत्तलक्षणं स्यात्, तदा किन्नटकनामकं वृत्तं स्यात् ॥ ४८ ॥

चमूरुभीरुः—

**स्याद्यदा विषमके रनौ जरौ समके सनजरगाश्चमूरुभीरुः ॥४९॥**

S I S I I I I S I S I S I I S I I I I S I S I S S

स्यादिति । यदि विषमपादयोः रगणनगणजगणरगणाः स्युः समपादयो. सगणनगणजगणरगणगुरवः स्युः, तदा चमूरुभीरुनामक वृत्तं-स्यात् ॥ ४९ ॥

**विलोमेऽन्त्यपदहीनाऽर्थात् चमूरुः ॥ ५० ॥**

यदि विषमपादयोः सगणजगणनगणरगणगुरवः स्युः समपादयोः रगणनगणजगणरगणाः स्युः, तदा चमूरुनामक वृत्तं स्यात् ॥ ५० ॥

केतुमती—

**असमे सजौ सगुरुयुक्तौ केतुमती समे भरनगा गः ॥ ५१ ॥**

I I S I S I I I S S S I I S I S I I I S S

असमे इति । चेत् विषमपादयोः सगणजगसगणगुरवः स्युः सम-

विलोमे मतुब्हीनाऽर्थात् केतुः ॥ ५२ ॥

चेत् विषमपादयो भगणरगणनगणा. द्वौ गुरू च स्याताम् समपादयोः सगणजगणसगणगुरव स्यु,. तर्हि केतुनामक वृत्त ज्ञेयम् ॥५२॥

आलेपनम्—

विषमके नस्तथा तत्रयं स्याद् गुरुः यदि समे नभयया लो ग आलेपनम्
। । । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ । । । ऽ । । । ऽ ऽ । ऽ ऽ । ऽ

विषमक इति । यदि विषमपादयो. एको नगण त्रय. तगणा एको गुरुश्च स्यात् समपादयो नगणभगणौ द्वौ यगणौ लघुगुरू च स्याताम्, तदा आलेपननामक वृत्त भवेत् ॥ ५३ ॥

विलोमे नञ्पूर्वमर्थादनालेपनम् ॥ ५४ ॥

यदि विषमपादयो नगणभगणौ द्वौ यगणौ लघुगुरू च स्याताम् समपादयो· नगणतगणौ द्वौ तगणौ गुरुश्च स्यात्, तदा अनालेपननामकं-वृत्त स्यात् ॥ ५४ ॥

आख्यानकी—

आख्यानकी तौ जगुरू गमो जे जतावनोजे जगुरू गुरुश्चेत् ॥५५॥
ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ । ऽ । ऽ ऽ । । ऽ । ऽ ऽ

आख्यानकीति । चेत् ओजे विषमपादयोः द्वौ तगणौ एको जगण द्वौ गुरू च स्याताम् अनोजे समपादयो जगणतगणजगणा द्वौ गुरू च स्याताम्, तदा आख्यानकीनामक वृत्त भवेत् ॥ ५५ ॥

विपरीताख्यानकी—

जतौ जगौ गो विषमे समे स्यात् तौजगौ ग एषा विपरीतपूर्वा ॥५६॥
। ऽ । ऽ ऽ । । ऽ । ऽ ऽ ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ

जताविति । विषमपादयोश्चेत् जगणतगणजगणा द्वौ गुरू च स्याताम् समपादयोश्च द्वौ तगणौ एको जगण द्वौ गुरू च स्याताम्, तदा एषा विपरीतपूर्वा अर्थात् विपरीताख्यानकी नाम स्यात्, इद वृत्तद्वयम् इन्द्रवज्रोपेन्द्रवज्रयोरुपजात्यैव गतार्थम्, केवल नामान्तरनिर्देशार्थमेवात्रोक्तम् ॥ ५६ ॥

जारिणी—

विषमके यदि नस्तौ गुरू स्यात्समे रौ नतौ गुरु तदा जारिणी ॥५७॥
। । । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ । । । ऽ ऽ । ऽ

विषमक इति । यर्हि विषमपादयो नगणतगणौ तगणगुरू च स्याताम् समपादयो द्वौ रगणौ नगणतगणगुरवश्च स्यु, तदा जारिणी-

विलोमेऽलिपदम् ॥ ५८ ॥

यदि विषमपादयोः द्वौ रगणौ नगणतगणगुरवश्च स्युः, समपादयोः नगणतगणौ तगणगुरू च स्याताम्, तदा अलिपदनामकं वृत्तं ज्ञेयम् ॥ ५८ ॥

शिशुमुखी—

प्रथमतो भवति सा रसनावली शिशुमुखी तदनु विरोधिनी यदा ॥५९॥
। । । ऽ । । । ऽ । । ऽ । ऽ । । । ऽ । । । । ऽ । ऽ । ऽ

प्रथमत इति । यदा विषमपादयोः सारसनावली वृत्तस्य लक्षणं भवति समपादयोः विरोधिनीवृत्तस्य लक्षणं भवति, तदा शिशुमुखी नामकं वृत्तं भवति ॥ ५९ ॥

विलोमेऽनिरया ॥ ६० ॥

यदि विषमपादयोः विराधिनीवृत्तलक्षणं समपादयोश्च सारसनावलीवृत्तलक्षणं भवति, तर्हि अनिरयानामकं वृत्तं भवति ॥ ६० ॥

भुजङ्गभृता—

यदि तारकवृत्तमिह प्रथमं स्यात् कर्मठवृत्तमथश्च भुजङ्गभृता ॥६१॥
। । ऽ । । ऽ । । ऽ । । ऽ ऽ ऽ । । ऽ । । ऽ । । ऽ । । ऽ

यदीति । इह यदि विषमपादयोः तारकवृत्तलक्षणं स्यात् समपादयोः कर्मठवृत्तलक्षणं स्यात्, तर्हि भुजङ्गभृतानामकं वृत्तं भवेत् ॥६१॥

विलोमेऽनङ्गपदम् ॥ ६२ ॥

यदि विषमपादयोः कर्मठवृत्तलक्षण समपादयोश्च तारकवृत्तलक्षणं स्यात्, तदा अनङ्गपदनामकं वृत्तं ज्ञेयम् ॥ ६२ ॥

शालभञ्जिका—

विषमे सनरला गुरुर्यदाऽन्यत्र भतौ लौ गुशालभञ्जिका ॥ ६३ ॥
। । ऽ । । । ऽ । ऽ । ऽ ऽ । । ऽ ऽ । ऽ । ऽ । ऽ

विषम इति । यदा विषमपादयोः सगणनगणरगणलघुगुरवः स्युः समपादयोः भगणतगणरगणलघुगुरवः स्युः, तदा शालभञ्जिकानामकंवृत्त स्यात् ॥ ६३ ॥

विलोमे करभोद्धता ॥ ६४ ॥

यदि विषमपादयो· भगणतगणरगणलघुगुरवः समपादयोः सगणनगणरगणलघुगुरवः स्युः, तर्हि करभोद्धतानामकं वृत्तं ज्ञेयम् ॥ ६४ ॥

त इति। यदा विषमपादयोः तगणजगणरगणगुरवः स्युः समपादयोश्च सगणभगणरगणजगणाः द्वौ गुरू च स्याताम्, तदा विलासवापीनामकं वृत्तं स्यात् ॥ ६५ ॥

विलोमेऽकोषकृष्टा ॥ ६६ ॥

यदि विषमपादयोः सगणभगणरगणजगणाः द्वौ गुरू च स्याताम् समपादयोश्च नगणजगणरगणगुरवः स्युः, तदा अकोषकृष्टानामकं वृत्त ज्ञेयम् ॥ ६६ ॥

अहीनताली—

मो नो ज्रौ विषमपदे यदा समे सभसा जो रगणगुरू भवेदहीनताली६७
S S S I I I I S I S I S I I S S I I I I S I S I S I S S

म इति। यदा विषमपादयोः मगणनगणजगणरगणाः स्युः समपादयोः सगणभगणसगणजगणरगणगुरव स्युः, तदा अहीनतालीनामकं वृत्तं भवेत् ॥ ६७ ॥

विलोमे नञ्रहिता ऽर्थाद् हीनताली ॥ ६८ ॥

यदि विषमपादयोः सगणभगणसगणजगणरगणगुरवः स्युः समपादयोः मगणनगणजगणरगणाः स्यु, तदा हीनतालीनामक वृत्तं ज्ञेयम् ॥ ६८ ॥

परप्रीणिता—

नयुगलमसमे तौ गुरुश्चेत्समे। नगणयुगसततगा उक्ता परप्रीणिता ६९
I I I I I I S S I S S I S I I I I I I I I S S S I S S I S

नेति। चेत् विषमपादयोः द्वौ न गणौ द्वौ तगणौ एकः गुरुश्च स्यात् तथा समपादयोः द्वौ नगणौ सगणतगणौ तगणगुरू च स्याताम्, तदा परप्रीणितानाम उक्ता ॥ ६९ ॥

विलोमे नञ्पूर्वा ऽर्थात्दपरप्रीणिता ॥ ७० ॥

यदि विषमपादयोः द्वौ नगणौ सगणतगणौ तगणगुरू च स्याताम्, तथा समपादयोः द्वौ नगणौ द्वौ तगणौ एकः गुरुश्च स्यात, तर्हि अपरप्रीणितानामक वृत्तं ज्ञेयम् ॥ ७० ॥

सपातशीला—

आदौ तभौ रो गश्चेत्ततः स्युः। स्न मया भवति सा संपातशीला ७१
S S I S S S S S I S S I I S I I I S S S S I S S

आदाविति। चेत् विषमपादयोः तगणभगणरगणगुरवः स्युः सम-

विलोमे आद्याक्षरहीना ऽर्थात् पातशीला ॥ ७२ ॥

यदि विषमपाद्योः सगणनगणभगणयगणा स्युः समपाद्योः तगणभगणरगणगुरव स्युः, तदा पातशीलानामवृत्त बोध्यम् ॥ ७२ ॥

कामाक्षी—

विषमे यदि सौ नगणयुगलगौ। कामाक्षी मो भनलगुरु समे ॥७३॥

। । ऽ । । ऽ । । । । । । ऽ ऽ ऽ ऽ ऽ । । । । । । ऽ

विषम इति। यदि विषमपाद्योः द्वौ सगणौ द्वौ नगणौ एकः गुरुश्च स्यात् तथा समपाद्योः मगणभगणनगणलघुगुरवः स्युः, तदा कामाक्षी-नामकं वृत्तं ज्ञेयम् ॥ ७३ ॥

विलोमे बद्धास्यम् ॥ ७४ ॥

यदि विषमपाद्यो मगणभगणनगणलघुगुरवः स्युः समे द्वौ सगणौ द्वौ नगणौ एकः गुरुश्च स्यात्, तर्हि बद्धास्यनामक वृत्तं ज्ञेयम् ॥ ७४ ॥

साचीकृतवदना—

नयभगगाः पूर्वत्र ततश्चेत्। साचीकृतवदनाऽत्र तनभसाः ॥७५॥

। । । । ऽ ऽ ऽ । । ऽ ऽ ऽ ऽ । । । । ऽ । । । । ऽ

नेति। चेत् अत्र विषमपाद्योः नगणयगणभगणाः द्वौ गुरू च स्याताम् समपाद्योः तगणनगणभगणसगणाः स्युः, तर्हि साचीकृत-वदनानामक वृत्तं ज्ञेयम् ॥ ७५ ॥

विलोमेऽवाचीकृतवदना ॥ ७६ ॥

यदि विषमपाद्योः तगणनगणभगणसगणाः स्युः समपाद्योः नगणयगणभगणाः द्वौ गुरू च भवेताम्, तर्हि अवाचीकृतवदनानामक वृत्तं ज्ञेयम् ॥ ७६ ॥

कमलाकरा—

दोधकवृत्तमियं विषमे स्याद् भनौ यदि कमलकरा च समे ज्यौ ७७

ऽ । । । । । ऽ । । ऽ ऽ ऽ । । । । । । ऽ । । ऽ ऽ

दोधकेति। यदि विषमपाद्योः दोधकवृत्तलक्षणं स्यात् समपाद्योः भगणनगणजगणयगणाः स्युः, तदा इय कमलकरा नाम स्यात् ॥७७॥

विलोमेऽकुसुमचरम् ॥ ७८ ॥

यदि विषमपाद्योः भगणनगणजगणयगणाः स्युः समपाद्योः दोधकवृत्तलक्षणं स्यात्, तर्हि कुसुमचरनामक वृत्त स्यात् ॥ ७८ ॥

नवनीलता-अवनीलता—अवलीलता च—

विषमे सगणौ जगौ समे। सभजा रोऽत्र नवनीलता स्मृता ॥७९॥

विषम इति । यदि अत्र विषमपादयोः द्वौ सगणौ जगणगुरू च स्याताम् , समपादयोः सगणभगणजगणरगणाः स्युः, तदा नवनीलता-नामकं वृत्त स्यात् , 'अवनीलता' 'अवलीलता' चेत्यन्यदपि नामद्वय-मस्य वृत्तस्य बोध्यम् ॥ ७९ ॥

विलोमे करीरिता ॥ ८० ॥

यदि विषमपादयो सगणभगणजगणरगणाः स्युः समपादयोः द्वौ सगणौ जगणगुरू च स्याताम् , तर्हि करीरितानामकं वृत्तं स्यात् ॥८०॥

शरावती—

नगणयुगरया भवेयुरादौ । इतरस्मिन्सभनजरगणाः शरावती ॥८१॥
। । । । । । ऽ ।ऽ।ऽऽ ।।ऽ ऽ । । । । । । ऽ । ऽ । ऽ

नगणेति । यदि विषमपादयोः द्वौ नगणौ रगणयगणौ च भवेताम् तथा समपादयो· सगणभगणनगणजगणरगणाः भवेयुः, तदा शरावती·नामकं वृत्तं ज्ञेयम् ॥ ८१ ॥

विलोमे बृहच्छरावती ॥ ८२ ॥

यदि विषमपादयोः सगणभगणनगणजगणरगणाः भवेयुः समपादयोः द्वौ नगणौ रगणयगणौ च भवेताम् , तदा बृहच्छरावतीनामकं. वृत्तं ज्ञेयम् ॥ ८२ ॥

वैयाली—

ननरलगुरवो यदा समे । वैयाली मसजा गुरुः समे ॥ ८३ ॥
। । । । । । ऽ । ऽ । ऽ ऽ ऽ ऽ । । ऽ । ऽ । ऽ

नेति । यदा विषमपादयो द्वौ नगणौ रगणलघुगुरवश्च स्युः सम-पादयो· मगणसगणजगणगुरवः स्युः, तदा वैयालीनामक वृत्त ज्ञेयम्॥८३॥

विलोमे करधा ॥ ८४ ॥

यदि विषमपादयो· मगणसगणजगणगुरवः स्युः समपादयोः द्वौ नगणौ रगणलघुगुवरश्च स्युः, तदा करधानामकं वृत्तं ज्ञेयम् ॥ ८४ ॥

प्रमोदपरिणीता—

इह यदि विषमे च नौ रजौ गुरू चेत् । नजजभयाश्च समे प्रमोदपरिणीता
। । । । । । ऽ । ऽ । ऽ । ऽ ऽ । । । । ऽ । । ऽ । ऽ । । । ऽ ऽ

इहेति । यदि इह विषमपादयोः द्वौ नगणौ रगणजगणौ द्वौ गुरू च स्याताम् , समपादयोः नगणजगणौ जगणभगणयगणाश्च स्युः, तदा प्रमोदपरिणीतानामक वृत्त भवेत् ॥ ८५ ॥

प्रमोदपदम्—

यदि विषमपादयोः नगणजगणौ जगणभगणयगणाश्च स्युः समपादयोः द्वौ नगणौ रगणजगणौ द्वौ गुरू च स्याताम्, तदा प्रमोदपदनामक वृत्तं स्यात् ॥ ८६ ॥

वैसारी—

यत्र प्रथमे रवोन्मुखी । वैसारी परतो यदा विराट् ॥ ८७॥

यत्रेति । यदा यत्र विषमपादयोः रवोन्मुखीवृत्तलक्षणं स्यात् समपादयोः विराड्वृत्तलक्षणं स्यात्, तदा तत् वैसारीनामकंवृत्त स्यात् ॥ ८७ ॥

वासववन्दिता—

विलोमे वासववन्दिता ॥ ८८ ॥

यदि विषमपादयोः विराड्वृत्तलक्षणं स्यात्, समपादयोः रवोन्मुखीवृत्तलक्षणं स्यात्, तदा वासववन्दिता नामकं वृत्त भवेत् ॥ ८८ ॥

प्रतिविनीता—

यदि विषमे नो यजौ रगौ भवेयुः । सभरा नश्च गुरू समे प्रतिविनीता ८९

। । । । S S । S । S । S S । । S S । । S । S । । । S S

यदीति । यदि विषमपादयो नगणयगणजगणरगणगुरवः भवेयुः, समपादयोः सगणभगणरगणनगणाः द्वौ गुरू च स्याताम्, तदा प्रतिविनीतानामक वृत्त भवेत् ॥ ८९ ॥

अतिप्रतिविनीता—

विलोमे अतिपूर्वा अर्थादतिप्रतिविनीता ॥ ९० ॥

यदि विषमपादयोः सगणभगणरगणनगणा द्वौ गुरू च स्याताम् समपादयोः नगणयगणजगणरगणगुरवः भवेयुः, तदा अतिप्रतिविनीता नामकं वृत्तं स्यात् ॥ ९० ॥

मार्दङ्गी—मातङ्गी च—

विषमे सनसनगगाः किल भवेयुः ।

। । S । । । । । S । । । S S

मार्दङ्गी भवति समे च मनजननयगणाश्चेत् ॥ ९१ ॥

S S S । । । । S । । । । । । । । S S

विषम इति । चेत् विषमपादयोः सगणनगणौ पुनः सगणनगणौ ततो द्वौ गुरू च स्याताम्, समपादयोः मगणनगणजगणनगणाः भवेयुः ततो नगणयगणौ च स्याताम्, तदा मार्दङ्गीनामकं वृत्तं भवति, मातङ्गीति नामान्तरमस्य वृत्तस्य ज्ञेयम् ॥ ९१ ॥

उभयतः समा ॥ ९२ ॥

समपादयोः सगणनगणौ पुनः सगणनगणौ ततो द्वौ गुरू च स्याताम्, तदा मार्दङ्गीनामकमेव वृत्त ज्ञेयम् ॥ ९२ ॥

अवरोधवनिता—

द्रुतविलम्बितपादलगा यदाऽसमे। ससजाश्च भयौ समेऽवरोधवनितास्यात्
। । । S । । S । । S । S । S । । S । । S । S । S । । । S S

द्रुतेति। यदा विषमपादयोः नगणभगणौ भगणरगणौ लघुगुरू च स्याताम्, समपादयोः द्वौ सगणौ जगणभगणयगणाश्च स्युः, तदा अवरोधवनितानामकं वृत्तं स्यात् ॥ ९३ ॥

उभयतः समा ॥ ९४ ॥

यदि विषमपादयोः द्वौ सगणौ जगणभगणयगणाश्च स्युः, समपादयोः नगणभगणौ भगणरगणौ लघुगुरू च स्याताम्, तदा अवरोधवनितानामकमेव वृत्तं स्यात् ॥ ९४ ॥

शिशिरशिखा—

विषमपदगता सुभद्रिका। शिशिरशिखा यदि मालती समे ॥९५॥
। । । । । । S । S । S । । । । S । । S । S । S

विषम इति। यदि विषमपादयोः सुभद्रिकावृत्तलक्षण स्यात्, समपादयोः मालतीवृत्तलक्षण स्यात्, तदा शिशिरशिखानामक वृत्तं-ज्ञेयम् ॥ ९५ ॥

विलोमे मृदुमालती ॥ ९६ ॥

यदि विषमपादयोः मालतीवृत्तलक्षण स्यात्, समपादयोः सुभद्रिकावृत्तलक्षण स्यात्, तदा मृदुमालतीनामकं वृत्तं स्यात् ॥ ९६ ॥

समुद्रकान्ता—

पूर्वं किल चेन्नवेन्नमेरुः। पश्चाद्विश्वविराट् समुद्रकान्ता ॥ ९७ ॥
S S । । S । S । S S S S S । । S । । S । S S

पूर्वमिति। चेत् विषमपादयोः नमेरुवृत्तलक्षण स्यात् समपादयोः विश्वविराड्वृत्तलक्षण स्यात्, तदा समुद्रकान्तानामक वृत्त भवेत् ।९७।

कान्ता—

विलोमे आद्यपदहीना ऽर्थात् कान्ता ॥ ९८ ॥

यदि विषमपादयोः विश्वविराड्वृत्तलक्षणं स्यात्, समपादयो. नमेरुवृत्तलक्षणं स्यात्, तदा कान्तानामक वृत्तं स्यात् ॥ ९८ ॥

वासववासिनी—

यदिकुररीरुतापदलगा विषमे समे तो जो भजजगुरू भवतिवासववासिनी।

यदि इति । यदि विषमचरणयो' नगणजगणभगणजगणा तथा लघुगुरू पुन लघुगुरू च स्याताम् , समचरणयो तगणजगणभगणजगणा. जगणगुरू च स्याताम् , तदा वासववासिनीनामक वृत्त भवति ॥ ९९ ॥

विलोमे आद्यपदहीनाऽर्थाद् वासिनी ॥ १०० ॥

यदि विषमपादयो तगणजगणभगणजगणा जगणगुरू च स्याताम् समपादयो नगणजगणभगणजगणा लघुगुरू पुन. लघुगुरू पुन लघु गुरू च स्याता तदा वासिनीनामक वृत्त भवति ॥ १०० ॥

आसववासिता—

नभजराश्च विषमे च यो यदा समे स्यात् ।
I I I S I I I S I S I S I S S

सभरा आसववासितो जसौ च गुरुरेषा ॥ १०१ ॥
I I S S I I S I S I S I I I S S

नेति । यदा विषमपादयोः नगणभगणजगणरगणयगणा स्यु', समपादयो सगणभगणरगणजगणसगणगुरव. स्यु , तदा एषा आसववासिता नाम स्यात् ॥ १०१ ॥

विलोमे नञ्पूर्वाऽर्थादनासववासिता ॥ १०२ ॥

यदि विषमपादयो सगणभगणरगणजगणसगणगुरव स्यु. समपादयो. नगणभगणजगणरगणयगणाः स्यु , तदा अनासववासितानामकवृत्त स्यात् ॥ १०२ ॥

सुरहिता—

ननसमगुरुविषमेथसमेस्यात् । तौ नत्रयगुरु भवति सुरहिता॥१०३॥
I I I I I I I I S I I S S S S I I I I I I I I I I S

नेति । यदि विषमपादयो द्वौ नगणौ द्वौ सगणौ एक गुरुश्च स्यात् समपादयो तगणनगणौ द्वौ नगणौ एक गुरुश्च स्यात् , तदा सुरहिता नामकं वृत्तं भवति ॥ १०३ ॥

विलोमे अतिपूर्वा ऽर्थादतिसुरहिता ॥ १०४ ॥

यदि विषमपादयो तगणनगणौ द्वौ नगणौ एक गुरुश्च स्यात् , समपादयोः द्वौ नगणौ द्वौ सगणौ एक गुरुश्च स्यात् तदा अतिसुरहिता नामक वृत्तं भवति ॥ १०४ ॥

समयवती—

त्रौ त्लौ गुरुविषमे यत्र समे । सनना लो गः स्यात्समयवती॥१०५॥
S S I I I I S S I I S I I S S S S I I I I S

पादयोः तगणनगणतगणलघुगुरव. स्युः, तत् समयवतीनामक वृत्तं स्यात् ॥ १०५ ॥

अयवती—

विलोम उपसर्गहीना ऽर्थादयवती ॥ १०६ ॥

यत्र विषमपादयोः सगणमगणनगणलघुगुरवः स्युः समपादयोः तगण नगण तगण लघुगुरव. स्युः तत्, अयवतीनामकं वृत्तं स्यात्॥१०६॥

वियद्वाणी—

मःस्जौ मो विषमे यदा तदन्यस्मिन् । सभरया गुरुवैभवेद्वियद्वाणी१०७

S S S I I S I S I S S S I I S S I I S I S I S S

म इति । यदा विषमपादयोः मगणसगणजगणमगणाः स्युः, समपादयोः सगणभगणरगणयगणगुरवः स्युः, तत् तर्हि वियद्वाणीनामक वृत्तं भवेत् ॥ १०७ ॥

उभयतः समा ॥ १०८ ॥

यदि विषमपादयोः सगणभगणरगणयगणगुरवः स्युः समपादयोः मगणसगणजगणमगणाः स्युः, तर्हि वियद्वाणीनामकमेव वृत्तं भवेत्।१०८।

मदाक्रान्ता—

विषमेससजरगौयदाभवेयुरन्यस्मिन्मसजारगैगुरुर्मदाक्रान्ता॥१०९॥

I I S I I S I S I S I S I S S S I I S I S I S I S S S

विषम इति ।यदा विषमपादयोः द्वौ सगणौ जगणरगणगुरवश्च भवेयुः, समपादयोः मगणसगणजगणरगणाः द्वौ गुरू च भवेताम्, तदा मदाक्रान्तानामकं वृत्त स्यात् ॥ १०९ ॥

संमदाक्रान्ता—

विलोमे सपूर्वा ऽर्थात् संमदाक्रान्ता ॥ ११० ॥

यदि विषमपादयोः मगणसगणजगणरगणा द्वौ गुरू च स्याताम्, समपादयोः द्वौ सगणौ जगणरगणगुरवश्च स्युः, तदा संमदाक्रान्तानामकं वृत्तं स्यात् ॥ ११० ॥

लास्यलीलालयः—

स्याद्भाजनशीला पूर्वपादे च तस्मात् ।
पुष्पशकटिका चेल्लास्यलीलालयः स्यात् ॥ १११ ॥

स्यादिति । चेत् विषमपादयोः भाजनशीलावृत्तलक्षणं स्यात्, समपादयोः पुष्पशकटिकावृत्तलक्षणं स्यात्, तर्हि लास्यलीलालयनामकं वृत्तं स्यात् ॥ १११ ॥

लास्यलीला—

यदि विषमपादयोः पुष्पशकटिकावृत्तलक्षणं स्यात् समपादयोः भाजनशीलावृत्तलक्षणं स्यात्, तर्हि लास्यलीलानामक वृत्तं स्यात्।११२।

मधुवारि—

**विषमे यदा भवति मञ्जुभाषिणी। अट्टासिनी च समे भवेन्मधुवारि॥**

विषम इति। यदा विषमपादयोः मञ्जुभाषिणीवृत्तलक्षणं भवति, समपादयोः अट्टासिनीवृत्तलक्षणं भवति, तदा मधुवारिनामक वृत्त-भवेत्॥ ११३॥

**विलोमे निःपूर्वमर्थाद् निर्मधुवारि॥ ११४॥**

यदि विषमपादयोः अट्टासिनीवृत्तलक्षण स्यात्, समपादयोः म-ञ्जुभाषिणीवृत्तलक्षण स्यात्, तदा निर्मधुवारिनामकं वृत्तं भवति।११४।

धीरावर्त्तः—

**वृत्त यत्र स्याद्विषमे मत्तमयूरो धीरावर्त्तो यदि च समे लीलालोलः।**

वृत्तमिति। यदि यत्र विषमपादयोः मत्तमयूरवृत्तलक्षणं स्यात्, समपादयोः लीलालोलवृत्तलक्षणं स्यात्, तर्हि धीरावर्त्तनामकं तद्वृत्तं स्यात्॥ ११५॥

**उभयतः समः॥ ११६॥**

यदि विषमपादयोः लीलालोलवृत्तलक्षणं स्यात् समपादयोः मत्त मयूरवृत्तलक्षण स्यात्, तर्हि धीरावर्त्तनामकमेव वृत्त स्यात्॥ ११६॥

उपोद्गता—

**विमला प्रथमे यदा परस्मिन्। बधिरा तर्हि भवेदुपोद्गतेयम्॥११७॥**

विमलेति। यदा विषमपादयोः विमलावृत्तलक्षणं स्यात्, समपा-दयोः बधिरावृत्तलक्षणं स्यात्, तर्हि इयम् उपोद्गतानाम भवेत्॥११७॥

**उभयतः समा॥ ११८॥**

यदि विषमपादयोः बधिरावृत्तलक्षणं स्यात् समपादयोः विमला वृत्तलक्षण स्यात्, तर्हि उपोद्गतानामकमेव वृत्त ज्ञेयम्॥ ११८॥

औपगवम्—

**कनकमञ्जरीपूर्वतो भवेदौपगवं ततो वारयात्रिकम्॥ ११९॥**

कनकेति। यदि विषमपादयोः कनकमञ्जरीवृत्तलक्षण स्यात्, सम-पादयोः वारयात्रिकवृत्तलक्षण स्यात्, तर्हि औपगवनामक वृत्तं भवेत् ११९

औपगवीतम्—

**विलोम औपगवीतम्॥ १२०॥**

कमञ्जरीवृत्तलक्षणं स्यात्, तर्हि औपगवेतम् नाम वृत्त स्यात् ॥१२०॥

अतैलम्—अत्तिलं च—

मुखे भवेच्चेद्विशालप्रभं। पश्चादतैलं विशालान्तिकम् ॥ १२१ ॥

मुख इति। चेत् विषमपादयोः विशालप्रभवृत्तलक्षण भवेत्, समपादयोः विशालान्तिकवृत्तलक्षण भवेत्, तर्हि अतैलनामकं वृत्तं स्यात्, अत्तिलम् इति नामान्तरमस्य बोध्यम् ॥ १२१ ॥

विलोमे विश्वप्रमा ॥ १२२ ॥

यदि विषमपादयोः विशालान्तिकवृत्तलक्षणं स्यात्, समपादयोः विशालप्रभवृत्तलक्षणं स्यात्, तर्हि विश्वप्रमानामक वृत्त स्यात् ॥१२२॥

उपसरसीकम्—

शरमेयोपसरसीकमथादौ। नीरान्तिकं तदनु चेद्भवतीदम् ॥१२३॥

शरेति। चेत् विषमपादयोः शरमेयावृत्तलक्षण स्यात्, समपादयोः नीरान्तिकवृत्तलक्षणं स्यात्, तर्हि इदम् उपसरसीकनामक वृत्तं भवति ॥ १२३ ॥

सरसीकम्—

विलोमे उपसर्गहीनम् अर्थात् सरसीकम् ॥ १२४ ॥

यदि विषमपादयोः नीरान्तिकवृत्तलक्षण स्यात्, समपादयोः शरमेयावृत्तलक्षण स्यात्, तर्हि सरसीकनामकं वृत्त ज्ञेयम् ॥ १२४ ॥

अर्धरुतम्—

यत्र विषमगतपङ्क्तावलिरिदमर्धरुतमनुगपङ्क्तवती यदि ॥ १२५ ॥

यत्रेति। यदि विषमपादयोः पङ्क्तावलीवृत्तलक्षण स्यात् समपादयोः पङ्क्तवतीवृत्तलक्षणं स्यात्, तर्हि इदम् अर्धरुतनामकं वृत्त स्यात्, पङ्क्तावलीत्यपि नामास्य बोध्यम् ॥ १२५ ॥

विलोमेऽल्परुतम् ॥ १२६ ॥

यदि विषमपादयोः पङ्क्तवतीवृत्तलक्षणं स्यात्, समपादयोः पङ्क्तावलिवृत्तलक्षणं स्यात्, तर्हि अल्परुतनामकं वृत्तं स्यात् ॥ १२६ ॥

अर्भकपङ्क्तिः—

वधिरात्रार्भकपङ्क्तिरादितश्चेत्। स्याद्वलभी तदनन्तरं तदाऽसौ ॥१२७॥

वधिरेति। चेत् विषमपादयोः वधिरावृत्तलक्षण स्यात्, समपादयोः वलभीवृत्तलक्षणं स्यात्, तदा असौ अर्भकपङ्क्तिः नाम स्यात् ॥१२७॥

विलोम उत्कपोहा।

उलपोहा—

स्याद्वलभी पुरतो यदोलपोहा। वधिरा स्यात्तदनन्तरं यथोक्तम् १२८

स्यादिति। यदा विषमपादयोः वलभीवृत्तलक्षण समपादयोर्वधिरावृत्तलक्षणं च स्यात्, तदा उलपोहानामक वृत्त स्यात्॥ १२८॥

आलोलघटिका—

सहजविषमे यदा भवेदालोलघटिका समेऽहिला॥ १२९॥

सहजेति। यदा विषमपादयोः सहजावृत्तलक्षणं स्यात् समपादयोः।अहिलावृत्तलक्षण स्यात्, तदा आलोलघटिकानामकं वृत्त बोध्यम्॥ १२९॥

विलोमे आद्यपदहीनाऽर्थाद् घटिका॥ १३०॥

यदि विषमपादयोः अहिलावृत्तलक्षणं समपादयोश्च सहजावृत्तलक्षणं स्यात्, तर्हि घटिकानामकं वृत्तं ज्ञेयम्॥ १३०॥

कलना—

विषमे यदा भवति वै कलहंसः। कलना समे भवति मञ्जुभाषिणी १३१

विषम इति। यदा विषमपादयोः कलहंसवृत्तलक्षण भवति समपादयोः मञ्जुभाषिणीवृत्तलक्षण भवति तदा कलनानामकं वृत्तं भवति॥ १३१॥

विलोमे मतुप्प्रत्ययान्ताऽर्थात् कलनावती॥ १३२॥

चेत् विषमपादयोः मञ्जुभाषिणीलक्षण समपादयोश्च कलहंसलक्षणं स्यात्, तर्हि कलनावतीनामकं वृत्तं बोध्यम्॥ १३२॥

अमरावती—यमवती च—

स्याद्युग्मके रजौ रजौ समे च। जरौ जरौ गुरुर्यदाऽमरावतीयम् १३३

ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ। ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽऽ

स्यादिति। यदा विषमपादयोः रगणजगणरगणजगणाः स्युः समपादयोः जगणरगणजगणरगणगुरवः स्युः, तदा इयम् अमरावतीनाम स्यात्, यमवतीत्यपि नामान्तरमस्य बोध्यम्॥ १३३॥

उभयतः समा॥ १३४॥

यदि विषमपादयोः जगणरगणजगणरगणगुरवः स्युः समपादयोः रगणजगणरगणजगणाः स्युः, तर्हि अमरावतीनामकमेव वृत्तं स्यात्॥ १३४॥

इति वर्णप्रस्तारे अर्धसमवृत्तानि॥ १३४॥

# अथ विषमवृत्तानि ।

उद्गता—

प्रथमे सजौ किल सलौ च नसजगुरुकाण्यनन्तरम् ।
I I S I S I I I S I I I I I I S I S I S

यद्यथ भनभगाः स्युरथो सजसाजगौ च भवतीयमुद्गता ॥ १ ॥
S I I I I I S I I S I I S I S I I I S I S I S

प्रथम इति । यदि प्रथमे पादे सगणजगणसगणलघवः स्युः, अनन्तरम् अर्थात् द्वितीये पादे नगणसगणजगणगुरवः स्युः, अथ तृतीये पादे भगणनगणभगणगुरवः स्युः अथो चतुर्थे पादे सगणजगणसगणजगणगुरवः स्युः, तर्हि इयम् उद्गता नाम भवति ॥ १ ॥

अपरोद्गता—

प्रथमे सजौ किल नगुरू नसजगुरुकाण्यनन्तरम् ।
I I S I S I I I I S I I I I S I S I S

यद्यथभनजलगाः स्युरथो सजसा जगौ तदपरेयमुद्गता ॥ २ ॥
S I I I I I I S I I S I I S I S I I I S I S I S

प्रथम इति । यदि प्रथमे पादे सगणजगणनगणगुरवः स्युः द्वितीये पादे नगणसगणजगणगुरवः स्युः, तृतीये पादे भगणनगणजगणलघुगुरवः स्युः चतुर्थे पादे सगणजगणसगणजगणगुरवः स्युः, तत् तर्हि इयम् अपरा अन्या द्वितीया उद्गता नाम भवति ॥ २ ॥

अपरोद्गता—

प्रथमे सजौ यदा भगुरू भः सजगुरवो द्वितीयके ।
I I S I S I S I I S S I I I I S I S I S

ततश्च जो भजलगाः स्युरथो रो जसौ जगौ तदपरेयमुद्गता ॥३॥
I S I S I I I S I I S S I S I S I I I S I S I S

प्रथम इति । यदा प्रथमे पादे सगणजगणभगणगुरवः स्युः, द्वितीये पादे भगणसगणजगणगुरवः स्युः, ततः तृतीये पादे जगणभगणजगणलघुगुरवः स्युः चतुर्थे पादे रगणजगणसगणजगणगुरवः स्युः, तत् तदा इयम् अपरा तृतीया उद्गता भवति ॥ ३ ॥

अपरोद्गता—

प्रथमे सो भसगणलाश्च नयुगलजगणगास्ततः ॥
I I S S I I I I S I I I I I I I I S I S

यद्यथ भजौ जगणो लघुगौ सजसा जगौ तदपरेयमुद्गता ॥ ४ ॥
S I I I S I I S I I S I I S I S I I I S I S I S

प्रथम इति । यदि प्रथमे पादे सगणभगणसगणलघव स्यु तत. द्वितीये पादे द्वौ नगणौ जगणगुरू च स्याताम्, तृतीये पादे भगणजगणौ जगणलघुगुरवश्च स्यु चतुर्थे पादे सगणजगणसगणजगणगुरवः स्यु, तदा इयम् अपरा चतुर्थी उद्गता नाम भवति ॥ ४ ॥

अपरोद्गता—

प्रथमे सो भमलघवश्च लतौ जो रगणोऽप्यनन्तरम् ।
। । S S । । । । । S । । S S । । S । S । S

अथ चेत्सजौ भगौ परतः ततो जयमा जो गुरु चापरोद्गता ॥५॥
। । S । S । S । । S । S । । S S । । S । S । S

प्रथम इति । चेत् प्रथमे पादे सगणभगणसगणलघव स्यु द्वितीये पादे लघुतगणजगणरगणा स्यु तृतीये पादे सगणजगणभगणगुरव. स्यु चतुर्थे पादे जगणयगणसगणजगणगुरव स्युः, तर्हि इयम् अपरा पञ्चमी उद्गता नाम भवति ॥ ५ ॥

सौरभम्—

त्रयमुद्गता सदृशमेव पदमिह तृतीयमन्यथा ।
। । S । S । । । S । । । । । । S । S । S

जायते रनभगैर्ग्रथितं कथयन्ति सौरभमिदं मनीषिणः ॥ ६ ॥
S । S । । । S । । S । । S । S । । । S । S । S

त्रयमिति । चेत् इह पदत्रयम् अर्थात् प्रथमद्वितीयचतुर्थपदानि उद्गतासदृशम् एव उद्गतालक्षणघटितानि एव स्यु. तृतीय पद रगणनगणभगणगुरुभि ग्रथित सद् अन्यथा जायते तहि मनीषिण इदम् सौरभनामक वृत्त कथयन्ति ॥ ६ । अस्यापि कथितोद्गतावत्पञ्च भेदा स्पष्टम् ।

ललितम्—

नयुगं सकारयुगल च भवति चरणे तृतीयके ।
। । S । S । । । S । । । । । । S । S । S

अहिपति भणितमिद ललितं यदि शेषमस्य सकलं यथोद्गता ॥७॥
। । । । । । । । । S । । S । । S । S । । । S । । । S

नेति । यदि अस्य तृतीयके चरणे द्वौ नगणौ द्वौ सगणौ च स्याता शेष सकल यथा उद्गता तथा स्यात् अर्थात् प्रथमद्वितीयचतुर्थपदानि उद्गतालक्षणलक्षितानि स्यु तदा इदम् अहिपतिभणित ललितनामक वृत्तम्भवति ॥ ७ ॥ अस्यापि यथा वैतालीक तथैव भेदाः, स्पष्टम् ।

प्रथमे चरणे च सो जगौ वैतालीकमिदं द्वितीयके ।
। । S । । S । S । S S S S । । S । S । S

मसजगुरुतृतीयके च नौ रलगास्तुर्यपदे स्भरा लगौ ॥ ८ ॥
। । । । । S । S । S ॥ S S । । S । S । S

प्रथम इति । चेत् अत्र प्रथमे चरणे द्वौ सगणौ जगणगुरू च स्याताम्, द्वितीये चरणे भगणसगणजगणगुरवः स्युः, तृतीयचरणे द्वौ नगणौ रगणलघुगुरवश्च स्युः तुर्यपदे सगणभगणरगणलघुगुरवः स्युः, तर्हि इदं वैतालीकनामकं वृत्तं बोध्यम् ॥ ८ ॥

वर्त्तिकाविलसितम्—

आदितो यदि रथोद्धतापद स्वागतापदमनन्तरमेव ।
S । S । S । S । । । । S । S । S । S । । S ।

तदनु भाविनीछन्दसः पदं वर्त्तिकाविलसितं रनौ रौ ततः ॥ ९ ॥
। । । S । S । । S । S S । S । । । S । S S । S

आदित इति । यदि प्रथमचरणे रथोद्धतावृत्तलक्षणं स्यात् द्वितीयचरणे स्वागतावृत्तलक्षणं स्यात् तृतीयचरणे भाविनीवृत्तलक्षणं स्यात् चतुर्थचरणे रगणनगणौ द्वौ रगणौ च स्याताम्, तर्हि वर्त्तिकाविलसितं नाम वृत्त स्यात् ॥ ९ ॥

चिरकरका—

प्रथमे ससजं गुरुर्भवेत् सभरा लो गुरु च द्वितीयके ।
। । S । । S । S । S । । S S । । S । S । S

चेत्स्युस्तजरास्तृतीयके चिरकरका न्जजराश्चतुर्थके ॥ १० ॥
S S । । S । S । S । । । । S । । S । S । S

प्रथम इति । चेत् प्रथमे पादे द्वौ सगणौ जगणगुरू च स्याताम् द्वितीये पादे सगणभगणरगणलघुगुरवः स्युः तृतीये पादे तगणजगण रगणाः स्युः चतुर्थे पादे नगणजगणौ जगणरगणौ च स्याताम्, तर्हि चिरकरकानामक वृत्तं भवेत् ॥ १० ॥

भौजङ्गम्—

प्रथमे ससजं गुरू द्वितीये सनजा रगणयकारकौ तथा तृतीये ।
। । S । । S । S । S S । । S । । । । S । S । S । S । S S

नयुगभसलगायदि च चतुर्थके मोनोनोनमगणगुरुरपि च भौजङ्गं स्यात्
। । । । । । S । । । । S । S S S S । । । । । । ? । । S S S S

प्रथमे इति । यदि प्रथमे पादे द्वौ सगणौ एकः जगणः द्वौ गुरू च स्याताम् तथा द्वितीये पादे सगणनगणजगणरगणाः स्युः तथा तृतीये पादे द्वौ नगणौ भगणसगणलघुगुरवश्च स्युः तथा चतुर्थे पादे मगणनगणौ द्वौ मगणौ मगणगुरू च स्यताम् तर्हि भौजङ्गनामकं वृत्तं

दरदपूरम्—

नयुगलमलगुरवो मुखे सभना रश्च यदि तदनन्तरम् ।
। । । । । । । । । S । S । । S S । । । । । S । S

तदनु च नोजभौ जगणगौ ततः म्नौरो नगगुरवो भवेद्दरदपूरम् ॥१२॥
। । । । S । S । । । S । S S S । । । । S । S । । S S

नेति । यदि प्रथमपादे द्वौ नगणौ सगणलघुगुरवश्च स्युः द्वितीयपादे सगणभगणनगणरगणा स्युः तृतीये पादे नगणजगणभगणजगणगुरवः स्युः चतुर्थे पादे तगणनगणनगणाः द्वौ गुरू च स्याताम्, तर्हि दरदपूरनामकं वृत्तम्भवेत् ॥ १२ ॥

कलम्बडम्बरम्—

नगणभौ भगणो रगणो यकार आदौ
। । । S । । S । । S । S । S S

सभसा जो रगणगुरू यदा द्वितीयपादे ।
। । S S । । । । S । S । S । S S

नयुगलमपि रेफजौ रगौ तृतीयपादे ।
। । । । । । S । S । S । S । S S

तुर्ये मो नजरयगाः कलम्बडम्बरं तत् स्यात् ॥ १३ ॥
S S S । । । । S । S । S । S S S

नेति । यदा आदौ प्रथमपादे नगणभगणौ भगणरगणमगणाश्च स्युः द्वितीयपादे सगणभगणसगणजगणरगणगुरवः स्युः तृतीयपादे द्वौ नगणौ रगणजगणरगणगुरवश्च स्युः चतुर्थपादे मगणनगणजगणरगणयगणगुरवः स्युः, तत् तर्हि कलम्बडम्बरनामकं वृत्तं स्यात् ॥ १३ ॥

शरन्नामा—

नगणभौ जरगणौ यदा मुखे सभजारेफसगणौ द्वितीयके च ततः ।
। । । S । । । S । S । S । । S S । । । S । S । S । । S

भोनसजगणगुरवश्चतुर्थके मोनः सो जगणमगणौ भवेच्छरन्नामा १४
S । । । । । । । S । S । S S S S । । । । । S । S । S S S

नेति । यदा मुखे प्रथमपादे नगणभगणजगणरगणाः स्युः द्वितीयपादे सगणभगणजगणरगणसगणाः ततः तृतीयपादे भगणनगणसगणजगणगुरवः स्युः चतुर्थपादे मगणनगणसगणजगणरगणाः स्युः, तर्हि शरन्नामानामकं वृत्तं भवेत् ॥ १४ ॥

उपवैतालिकम्—

इहामृगीसदृशा यत्र पादाः चेत्स्युस्त्रयः किल पादस्तृतीयः ।
वीरासिकातुल्य इहास्ति केवलं वृत्तं भवेदुपवैतालिकं तत् ॥१५॥

इहेति । चेत् इह यत्र त्रय. पृथमद्वितीयचतुर्था पादा ईहामृगी सदृशा ईहामृगीवृत्तलक्षणलक्षिता स्यु तृतीय पादः केवल वीरासिकातुल्य इन्द्रवशालक्षणलक्षित. अस्ति, तर्हि तत् वृत्तम् उपवैतालिक नाम भवेत् ॥ १५ ॥

पराथिनी—

नयसगणाश्चेत्प्रथमे जतौ भगौ च द्वितीयपदे ।
। । । । S S । । S । S । S S । S । । S

भो मसकारौ चापि ततः तो जो रगग परार्थिनी तुर्ये ॥ १६ ॥
S । । S S S । । S S S । । S । S । S S S

नेति । चेत् पृथमे पादे नगणयगणसगणा स्यु द्वितीयपादे जगणनगणभगणगुरव स्यु· तत तृतीयपादे भगणमगणसगणा स्यु. तुर्ये चतुर्थे पादे तगणजगणरगणाः द्वौ गुरू च स्याताम्, तर्हि परार्थिनीनामक वृत्त ज्ञेयम् वराथिनीत्यपि नामास्य बोध्यम् ॥ १६ ॥

उदया—

नजनगणगुरु च मुखे सभमास्स्युर्यदि च ततः ।
। । । । S । । । । S । । S S । । । । S

त्रिनगणलघुगुरु च ततो मो नो गस्तत इयमुदया ॥ १७ ॥
। । । । । । । । । । S S S S । । । । । । S

नेति । यदि पृथमे पादे नगणजगणनगणगुरव स्यु तत द्वितीयपादे सगणभगणसगणा· स्यु तत तृतीयपादे त्रय नगणा लघुगुरू च स्याताम् तत चतुर्थपादे मगणनगणौ नगणगुरू च स्याताम् तदा इयम् उदया नाम ज्ञेया ॥ १७ ॥

महातुरा—

प्रथमे सनसगणला गुरुः सगणो भो नगणरगणौ ततः ।
। । S । । । । । S । S । । S S । । । । । S । S

तो जो नगणौ यदि च तृतीयके तुर्ये मो नजरगणा महातुरा १८
S S । । S । । । । S । S S S S । । । । S । S । S

पृथम इति । यदि पृथमे पादे सगणनगणसगणलघुगुरव स्यु तत· द्वितीयपादे मगणभगणनगणरगणा स्यु तृतीये पादे तगण जगणनगणरगणा स्यु तुर्ये पादे मगणनगणजगणरगणा स्यु, तर्हि महातुरानामक वृत्त स्यात् ॥ १८ ॥

मन्देहा—

नगणयुगभसाश्च यदि मुखे मो नो नो लघुगुरुरपि ततः ।

भः सजगणगास्तृतीयके मन्देहा म्तौ रश्चतुर्थके ॥ १९ ॥
S I I I I S I S I S S S S S S I S I S

नेति । यदि मुखे प्रथमे पादे द्वौ नगणौ भगणसगणौ च स्याताम् ततः द्वितीये पादे भगणनगणौ नगणलघुगुरवश्च स्युः तृयीयके पादे भगणसगणजगणगुरवः स्युः चतुर्थके पादे मगणनगणरगणाः स्युः, तर्हि मन्देहानामक वृत्तं स्यात् ॥ १९ ॥

नेदिष्ठा—

आदौ स्युर्मनभला गुरु यदा नगणयकारौ जभौ ततो गुरुयुग्मम् ।
S S S I I I S I I I S I I I I S S I S I S I I S S

तोनोरनगणगास्तृतीयचरणे नेदिष्ठामनजनयाभवति च चतुर्थे ॥२०॥
S S I I I I S I S I I I S S S S I I I I S I I I I I S S

आदाविति । यदा आदौ प्रथमचरणे मगणनगणभगणलघुगुरवः स्युः ततः द्वितीयचरणे नगणयगणजगणभगणाः द्वौ गुरू च स्याताम् तृतीयचरणे तगणनगणरगणनगणगुरवः स्युः चतुर्थे चरणे मगणनगणजगणनगणयगणाः स्युः, तर्हि नेदिष्ठानामकं वृत्तं भवति ॥२०॥

विशकण्ठी—

प्रथमतो नभरा यदा । तदनन्तरमत्र सौ जगौ ।
I I I S I I S I S I I S I I S I S I S

नयुगलरलगास्तृतीयके विशकण्ठीसभसजगाश्चतुर्थके ॥ २१ ॥
I I I I I I S S S I S I I S S I I I I S I S I S

प्रथमत इति । यदा अत्र प्रथमे पादे नगणभगणाः स्युः तदनन्तरम् द्वितीये पादे द्वौ सगणौ जगणगुरू च स्याताम् तृतीयके द्वौ नगणौ रगणलघुगुरवश्च स्युः चतुर्थके सगणभगणसगणजगणगुरवः स्युः, तदा विशकण्ठीनामक वृत्त बोध्यम् ॥ २१ ॥

मञ्जिष्ठा—

प्रथमे यदितारकवृत्तपदं स्यात् तदनन्तरं च कलहंसपदं चेत् ।
I I S I I I I I S I I S S I I S I S I I I S I I S S

तदनन्तरं च यदि मञ्जुभाषिणी माञ्जिष्ठा भवति ततः प्रहर्षिणी चेत्२२
I I S I S I I I S I S I S S I S I I I I S I S I S S

प्रथम इति । यदि प्रथमे पादे तारकवृत्तलक्षणं स्यात् चेत् तदनन्तरं द्वितीये पादे कलहसवृत्तलक्षणं स्यात् चेत् तदनन्तर तृतीये पादे मञ्जुभाषिणीवृत्तलक्षण स्यात् चेत् ततः चतुर्थे पादे प्रहर्षिणीवृत्तलक्षणं स्यात्, तर्हि मञ्जिष्ठानामकं वृत्तं भवति ॥ २२ ॥

संकलिः—

प्रथमपदे यदि तामरसं स्यात् दोधकवृत्तपदं तत एव ॥
I I I I S I I S I I S S S I I S I I S I I S I

भवति तदितरपदे खलु चण्डी संकलिरिति चरमे पथिकान्ता२३
I I I I I I I I S I I S S S I I I I I I S I I S S

प्रथमेति। यदि प्रथमपादे तामरसवृत्तलक्षणं स्यात् ततः द्वितीयपादे दोधकवृत्तलक्षणं स्यात् तदितरपदे तृतीयपदे चण्डीवृत्तलक्षणं स्यात् चरमे पदे पथिकान्तावृत्तलक्षणं स्यात्, तर्हि सकलिः इति नामकं वृत्त भवति ॥ २३ ॥

कुथिनी—

प्रथमपदे यदि वार्त्ताहारी भवति तदितरपदे शुद्धान्तः।
I I I I S I I S S S S I I I I I I I I S S S S

पादे भवति तृतीयकूलं कुथिनी चरमपदे सौधाङ्घ्रिः ॥ २४ ॥
S S I I I I I S I S I I I S I I I I S S S S

प्रथम इति। यदि प्रथमपदे वार्त्ताहारीवृत्तलक्षणं स्यात् तदितरपदे द्वितीयपदे शुद्धान्तवृत्तलक्षणं भवति तृतीयपादे कूलवृत्तलक्षणं भवति चरमपदे चतुर्थचरणे सौधाङ्घ्रिवृत्तलक्षणं भवति, तर्हि कुथिनी-नामकं वृत्तं भवति ॥ २४ ॥

मानमुखी—

प्रथमत इह चेद्विधुरवितानमर्पितमदना तदपरतःस्यात्।
I I I I I I S S I I I S I S I I I I S I I S I S S

यदि च तृतीये कुसुमविचित्रा मानमुखी स्याद्यदि चरमे श्रीः २५
I I I I S S I I I I S I S I I S S I I I I S S

प्रथम इति। चेत् इह प्रथमे पादे विधुरवितानवृत्तलक्षणं स्यात्। तदपरतः द्वितीये पादे अर्पितमदनावृत्तलक्षण स्यात् यदि तृयीये पदे कुसुमविचित्रावृत्तलक्षण स्यात् यदि च चरमे तुर्ये पदे श्रीवृत्तलक्षण स्यात, तर्हि मानमुखीनामकं वृत्त स्यात् ॥ २५ ॥

उदक्—

प्रथमतो भवति यदा विराधिनी विरलाचरण इह द्वितीयके।
I I I I I I I I I I S I S I I I I I I I I I S S S

नीला तदितरतस्तृतीयके स्यादविरलरतिका चतुर्थके ॥ २६ ॥
S S I I I I S I S I S S I I I I I I S I S I S

प्रथमत इति। यदा इह प्रथमे पादे विराधिनीवृत्तलक्षण भवति

वति चतुर्थ पादे अविरलरतिकावृत्तलक्षण स्यात्, तर्हि उदकूनामक वृत्त भवेत् ॥ २६ ॥

तरुणाशया—

भवति मृगेन्द्रमुख मुखे यदा वै यत्र भवेद्वलभी द्वितीयपादे ।
। । । ।S।।S ।S ।S S S। ।S।।S ।S।SS
पुनश्चरणे च तृतीयकेऽतिरहः तरुणाशया चरमे च ऋक्षपादः॥२७
।S।।S। ।।।। ।SS ।।S।S ?।S। S।SS

भवतीति । यदा यत्र मुखे प्रथमे मृगेन्द्रमुखवृत्तलक्षण भवति द्वितीये पादे वलभीवृत्तलक्षण स्यात तृतीये पादे अतिरहोवृत्तलक्षण भवति चरमे चतुर्थे पादे ऋक्षपादवृत्तलक्षण स्यात्, तर्हि तरुणाशयानामक वृत्त भवेत् ॥ २७ ॥

प्रवालान्तिकम्—

परिवृढ यत्र पूर्वत्र पादे भवेत
वामवदना द्वितीयपदे स्यात्तथा ।
प्रवाहिका स्यात्तृतीये चतुर्थे यदा
पारावतः स्यात्तदानी प्रवालान्तिकम् ॥ २८ ॥

परिवृढमिति । यदा यत्र पूर्वत्र प्रथमे पादे परिवृढवृत्तलक्षण भवेत् तथा द्वितीये पदे वामवदनावृत्तलक्षण स्यात् तृतीये पादे प्रवाहिकावृत्तलक्षण स्यात् चतुर्थे पादे पारावतवृत्तलक्षण स्यात्, तदानीम् तत् वृत्त प्रवालान्तिकनामक स्यात् ॥ २८ ॥

अतुलम्—

भवति कठिनीह पूर्वपादे यदा विशिखलता द्वितीयपादे तथा ।
विप्लुतशिखा तृतीयपादे भवेद्भ्रमलपदं चतुर्थपादेऽतुलम् ॥२९॥

भवतीति । यदा इह पूर्वपादे कठिनीवृत्तलक्षण भवति तथा द्वितीयपादे विशिखलतावृत्तलक्षण भवति तथा तृतीयपादे विप्लुतशिखावृत्तलक्षण भवति तथा चतुर्थपादे भ्रमलपदवृत्तलक्षण भवति, तदा अतुलनामक वृत्त भवेत् ॥ २९ ॥

सुरद्रु —

जायते पूर्वपादे यदा स्रग्विणी द्वितीये च पादे भुजङ्गी भवेत् ।
तृतीये तथा स्याद् भुजङ्गप्रयात प्राकारबन्धश्चतुर्थे सुरद्रुः ॥ ३० ॥

लक्षण स्यात् चतुर्थपादे प्राकारबन्धवृत्तलक्षणं स्यात्, तर्हि सुरद्रुनामकं वृत्तम्बोध्यम् ॥ ३० ॥

मञ्जुमतिका—

इह चरणे प्रथमे सुमुखी तत्परतो यदि विश्वमुखी ॥

भवति तत्परतश्च शरत् मञ्जुमतिका ततः खेटकम् ॥ ३१ ॥

इहेति । यदि इह प्रथमे चरणे सुमुखीवृत्तलक्षण स्यात् तत्परतः द्वितीये चरणे विश्वमुखीवृत्तलक्षणं स्यात् तत्परतः तृतीये चरणे शरद्वृत्तलक्षणं स्यात् ततः चतुर्थे चरणे खेटकवृत्तलक्षणं स्यात्, तदा मञ्जुमतिकानामकं वृत्तं भवति ॥ ३१ ॥

युतकम्—

उपकारिकाचरणे यदा प्रथमेऽत्र अट्टासिनी तदनन्तर भवतीति ॥

हेममिहिका चरणे भवेदितरत्र भवति युतक चरमे पदे मितसक्थि ३२

उपेति । यदा अत्र प्रथमे चरणे उपकारिकावृत्तलक्षणं भवति तदनन्तरं द्वितीये चरणे अट्टासिनीवृत्तलक्षणं भवति इतरत्र तृतीयेचरणे हेममिहिकावृत्तलक्षणं भवेत्, चरमे पदे मितसक्थि भवेत् तदा युतकनामकं वृत्त भवति ॥ ३२ ॥

पिशङ्गि—

यदि कुररीरुताऽत्र चरणे प्रथमे स्याल्लवलीलता च तदनन्तरतः ॥

चेदथ तृतीयके भवति कारविणी पिशङ्गि चतुर्थके भवति काकिणिका ३३

यदीति अत्र यदि प्रथमे चरणे कुररीरुतावृत्तलक्षण स्यात् तदनन्तरतः द्वितीये पदे लवलीलतावृत्तलक्षणं स्यात् अथ चेत् तृतीयके पदे कारविणीवृत्तलक्षण भवति तथा चतुर्थे चरणे काकिणिकावृत्तलक्षणं भवति, तदा पिशङ्गिनामक वृत्तं भवति ॥ ३३ ॥

उपनयनम्—

प्रथमचरणगा प्रहरणकलिका अर्धकुसुमिता यदि भवति ततः ।

तदनन्तरः किल वरिवसिता व्यायोगवती चरम उपनयम् ॥३४॥

प्रथमेति । यदि प्रथमे चरणे प्रहरणकलिकावृत्तलक्षणं भवति ततः द्वितीयचरणे अर्धकुसुमितावृत्तलक्षण भवति तदनन्तरतः तृतीये पदे वरिवसितावृत्तलक्षणं भवति चरमे पदे व्यायोगवतीवृत्तलक्षणं भवति, तर्हि उपनयननामकं वृत्त भवति ॥ ३४ ॥

मृदवम्—

मणिहसवृत्तमथो यदा प्रथमे पदे

स्यादिह मयूवदना तृतीयपदे तथा ।
भवति मृदवं तरवारिका च चतुर्थकम् ॥ ३५ ॥

मणिहंसेति । इह यदा यत्र प्रथमे पदे मणिहंसवृत्तलक्षण भवेत् अथो द्वितीयपदे अलिकालिकावृत्तलक्षणं भवेत् तथा तृतीयपदे मयूवदनावृत्तलक्षण स्यात् च पुनः चतुर्थपदे तरवारिकावृत्तलक्षण स्यात्, तर्हि तत् वृत्त मृदवनामकं भवति ॥ ३५ ॥

अगाधिका—

चेत्स्यात्प्रथमे रवोन्मुखी वृत्तं शुद्धविराड्द्वितुर्ययोः ॥
सहजा च भवेत्तृतीयके वृत्तं नाम भवेदगाधिका ॥ ३६ ॥

चेदिति । चेत् प्रथमे पदे रवोन्मुखीवृत्तलक्षण स्यात् द्वितीयचतुर्थपादयोः शुद्धविराड्वृत्तलक्षण स्यात् तृतीये पादे सहजावृत्तलक्षण भवेत्, तर्हि अगाधिकानाम वृत्तं भवेत् ॥ ३६ ॥

अनुसूयम्—

प्रथमचरणगं चेन्मालिनीवृत्तमेतत्
पुष्पशकटिकेयं यत्र पादे द्वितीये ॥
सरमासरणी चासौ तृतीये चतुर्थे
स्याद्भाजनशीलावृत्तमत्रानुसूयम् ॥ ३७ ॥

प्रथमेति । अत्र वर्णविषमवृत्तप्रकरणे चेत् वृत्ते प्रथमे चरणे मालिनीवृत्तलक्षण स्यात् द्वितीये पादे पुष्पशकटिकावृत्तलक्षणं स्यात् तृतीये पादे सरमाशरणिवृत्तलक्षण स्यात् चतुर्थे पादे भाजनशीलावृत्तलक्षणं स्यात्, तर्हि तद्वृत्तम् अनुसूयनामकं स्यात् ॥ ३७ ॥

अत्सरु—

प्रमिताक्षरात्र चरणे प्रथमे जिह्माशया च तदनन्तरतः ॥
नीलगिरिका यदि तृतीयपदे विकत्थनमत्सरुभवेच्चरमे ॥ ३८ ॥

प्रमितेति । यदि अत्र प्रथमे चरमे प्रमिताक्षरावृत्तलक्षण स्यात् तदनन्तरतः द्वितीये पदे जिह्माशयावृत्तलक्षण स्यात् तृतीयपदे नीलगिरिकावृत्तलक्षण स्यात् चरमे पदे विकत्थनवृत्तलक्षणं स्यात्, तर्हि अत्सरुनामकं वृत्तं भवेत् ॥ ३८ ॥

भुवनविरतिः—

द्रुतपदं यदि पदे प्रथमे स्यात् स्वागता च तदनन्तरतश्चेत् ॥

द्रुतपदमिति। इह यदि प्रथमे पदे द्रुतपदवृत्तलक्षणं स्यात् चेत् तदनन्तरतः द्वितीये पदे स्वागतावृत्तलक्षण स्यात् यदि अनन्तरम् तृतीये पदे उपधानवृत्तलक्षणं स्यात् अपरत्र चतुर्थे पदे चण्डीवृत्तलक्षण स्यात्, तर्हि भुवनविरतिनामकं वृत्त भवेत् ॥ ३९ ॥

नतभृगु—

आदावत्र भ्रमरविलसिता परतश्चेत्स्याद्रसिकपरिचिता।
भवति तृतीये मदनजवनिका वीरणमाला नतभृगु चरमे ॥ ४० ॥

आदाविति। चेत् अत्र आदौ प्रथमचरणे भ्रमरविलसितावृत्तलक्षण स्यात् परतः द्वितीयपादे रसिकपरिचितावृत्तलक्षण स्यात् तृतीये पादे मदनजवनिकावृत्तलक्षणं स्यात् चरमे चतुर्थे पादे वीरणमाला-वृत्तलक्षणं स्यात्, तर्हि नतभृगुनामक वृत्त भवति ॥ ४० ॥

कामकलशिका—

विमला प्रथमे पदे यदा स्यात् विधरा चेत्तदतनन्तरं तृतीये ॥
स्याल्लाजवती चतुर्थपादे कामकलशिका त्वमन्दपाद. ॥ ४१ ॥

विमलेति। यदा प्रथमे पदे विमलावृत्तलक्षणं स्यात् चेत् तदनन्तर द्वितीये पदे वधिरावृत्तलक्षण स्यात् तृतीये पदे लाजवतीवृत्तलक्षण स्यात् चतुर्थपादे अमन्दपादवृत्तलक्षण स्यात, तदा कामकलशिका नामकं वृत्त ज्ञेयम् ॥ ४१ ॥

नगोनिता—

नाराचिका यदा मुखे द्वितुर्ययोः प्रमाणिका ॥
चामरं तृतीयके भवेत्तदा नगोनिता ॥ ४२ ॥

नाराचिकेति। यदा मुखे प्रथमपदे नाराचिकावृत्तलक्षण स्यात् द्वितीयचतुर्थयोः पादयोः प्रमाणिकावृत्तलक्षण स्यात् तृतीये पदे चामरवृत्तलक्षण स्यात्, तदा नगोनितानामक वृत्त भवेत् ॥ ४२ ॥

मणित्थकम्—

इह भवति मुखे सुभद्रिका यदि सीधुश्चरणे द्वितीयके ॥
सहजा च भवेत्तृतीयके तुर्ये चापि विराण्मणित्थकम् ॥ ४३ ॥

इहेति। इह विषमवृत्तप्रकरणे यदि मुखे प्रथमे पदे सुभद्रिकावृत्तलक्षण भवेत द्वितीये चरणे सीधुवृत्तलक्षणं स्यात्, तर्हि मणित्थनामकं वृत्त भवति ॥ ४३ ॥

अहानिगा—

अद्भुरा तृतीयपदे तदा भवेदहानिगा ॥ ४४ ॥

नाराचिकेति। यदा मुखे प्रथमे पदे नाराचिकावृत्तलक्षण स्यात् द्वितीयचतुर्थयोः पादयोः प्रमाणिकावृत्तलक्षण स्यात् तृतीयपदे अद्भुरावृत्तलक्षण स्यात्, तदा अहानिगानामक वृत्तं भवेत् ॥ ४४ ॥

शर्म—

प्रथममथ यदि दमनकं तदनु भवेत्त्वरितगतिः।

तत्परतः प्रियातिलका शर्म तदनु कृतमणिता ॥ ४५ ॥

प्रथममिति। यदि प्रथमपदे दमनकवृत्तलक्षणं स्यात् तदनु द्वितीयपदे त्वरिगततिवृत्तलक्षणं भवेत् तत्परतः तृतीयपदे प्रियतिलकावृत्तलक्षण भवेत् तदनु चतुर्थपदे कृतमणितावृत्तलक्षण स्यात्, तर्हि शर्मनामकं वृत्तं ज्ञेयम् ॥ ४५ ॥

नालीका—

प्रथमे सहजा पदे भवेदिह सीधुस्तदनन्तरं यदा ॥

पादे परतो रवोन्मुखी नालीका च विराट् चतुर्थके ॥ ४६ ॥

प्रथम इति। यदा प्रथमे पदे सहजावृत्तलक्षणं भवेत् तदनन्तर द्वितीये पदे सीधुवृत्तलक्षण स्यात् परत. तृतीये पादे रवोन्मुखीवृत्तलक्षणं स्यात् चतुर्थपादे विराड्वृत्तलक्षणं भवेत्, तदा नालीकानामक वृत्त बोध्यम् ॥ ४६ ॥

नयनपाली—

कुम्भोध्नी सा प्रथमके चरणे चेत् नीराजितकं भवति तत्परतस्तत् ॥

द्रुतपदं तदनु यत्र चतुर्थे यदि नयमालिनी नयनपाली ॥ ४७ ॥

कुम्भोध्नीति। चेत् यत्र प्रथमे चरणे कुम्भोध्नीवृत्तलक्षणं भवति तत्परत. द्वितीये पदे नीराजितकवृत्तलक्षण भवति तदनु तृतीयपदे द्रुतपदवृत्तलक्षणं भवति चतुर्थे पदे यदि नयमालिनीवृत्तलक्षण भवति, तत् तर्हि नयनपालीनामकं वृत्तं ज्ञेयम् ॥ ४७ ॥

छेकवती—

मोदकवृत्तमथो प्रथमे यदि ततो भवतीह च मौक्तिकदाम ॥

अपि तोटकवृत्तमनन्तरतः छेकवती खलु दोधकमन्ते ॥ ४८ ॥

मोदकेति। इह यदि प्रथमपदे मोदकवृत्तलक्षण स्यात् ततः द्वितीये पदे मौक्तिकदामवृत्तलक्षण स्यात् अनन्तरतः तृतीये पदे तोटकवृत्तलक्षणं स्यात् अन्ते चतुर्थे पदे दोधकवृत्तलक्षणं स्यात्, तर्हि छेकवती-

नगोपमा—

पूर्वं किल चेद्रवोन्मुखी तत्पश्चाद्भवतीह चेद्विराट् ॥

भूयः परतो रवोन्मुखी चरमे सीधुरियं नगोपमा ॥ ४९ ॥

पूर्वमिति। इह चेत् पूर्वम् प्रथमे पदे रवोन्मुखीवृत्तलक्षणं स्यात्, तत्पश्चात् द्वितीये पदे विराड्वृत्तलक्षणं स्यात् परत तृतीये पदे भूयः पुन रवोन्मुखीवृत्तलक्षणं स्यात्, चरमे पदे सीधुवृत्तलक्षणं स्यात्, तर्हि इयं नगोपमा नाम भवति। ४९ ॥

सौराङ्गी—

प्रथमे सहजा पदे भवेदिह सीधुस्तदनन्तरं यदा।

सहजा तदनन्तरं पुनः सौराङ्गी चरमे विराडिदम् ॥ ५० ॥

प्रथम इति। इह यदा प्रथमे पदे सहजावृत्तलक्षण भवेत् तदनन्तरं द्वितीये पदे सीधुवृत्तलक्षणं स्यात् तदनन्तरं तृतीये पदे पुनः सहजावृत्तलक्षणं भवेत् चरमे चतुर्थे पदे विराड्वृत्तलक्षणं भवेत्, तर्हि इदम् सौराङ्गीनामकं वृत्तं स्यात् ॥ ५० ॥

॥ इति वर्णविषमवृत्तानि ॥

## अथ पदचतुरूर्ध्वप्रकरणम्।

यत्र प्रथमपादोऽष्टाक्षरः द्वितीयो द्वादशाक्षर. तृतीयः षोडशाक्षरः चतुर्थः विंशत्यक्षरः, तद्वृत्तं पदचतुरूर्ध्वाभिधं बोध्यम् अत्र गुरुलघुनियमो नास्ति ॥ १ ॥

अत्रैव चेत्प्रतिपादं सर्वे वर्णाः लघवः स्युः अन्ते च द्वौ गुरू स्याताम अर्थात् प्रथमे पदे षड् लघवः द्वौ गुरू द्वितीये दश लघवः द्वौ गुरू तृतीये चतुर्दश लघवः द्वौ गुरू चतुर्थे अष्टादश लघवः द्वौ गुरू स्याताम्, तर्हि इदम् अपीडनामकं वृत्त भवति ॥ २ ॥

एवं यत्र प्रथमे पादे पूर्वं द्वौ गुरू ततः षड् लघवः स्युः द्वितीये पादे पूर्वं द्वौ गुरू ततो दश लघवः तृतीये पादे पूर्वं द्वौ गुरू ततश्चतुर्दश लघवः चतुर्थे पादे पूर्वं द्वौ गुरू ततोऽष्टादश लघवः स्युः तत् प्रत्यापीडनामक वृत्तम्भवति एवमस्यैव वृत्तस्य चतुर्षु पादेषु यदा आदावन्ते च द्वौ गुरू भवतः तदापीद वृत्त प्रत्यापीडनामकमेव भवति अस्मिन्नेवापीडे वृत्ते प्रथमपादो द्वादशाक्षरः द्वितीयपादोऽष्टाक्षरः इत-

पिङ्गलसूत्रे मञ्जरीति नाम्ना अस्मिन्नेवापीडे प्रथमपादः द्वादशाक्षरो भवेत् द्वितीयपादः षोडशाक्षरः तृतीयपादोऽष्टाक्षरः चतुर्थः विंशत्यक्षरः स्यात्, तर्हि इदं लवलीनामकं वृत्तं भवति,

अस्मिन्नेवापीडे प्रथमपादः द्वादशाक्षरः द्वितीयः षोडशाक्षरः तृतीयः विंशत्यक्षरः चतुर्थः अष्टाक्षरः स्यात्, तर्हि इदं अमृतधारानामकं वृत्तं भवति एवम्प्रत्यापीडभेदा अपि ज्ञेयाः इति पदचतुरुर्ध्वप्रकरणम् ।

## अथ उपस्थितप्रचुपितप्रकरणम् ।

यदि प्रथमपादे मगणसगणभगणाः द्वौ गुरू च स्याताम् द्वितीये पादे सगणनगणजगणरगणगुरवः स्युः तृतीये पादे द्वौ नगणौ एकः सगणः स्यात् चतुर्थे च त्रयः नगणाः जगणयगणौ च स्याताम् तथा प्रथम चरणान्ते एव विरामः स्यात् अन्यचरणत्रयम् एकीकृतं स्यात्, तर्हि इदं उपस्थितप्रचुपितनामकं वृत्तं बोध्यम् ॥ १ ॥

अस्मिन्नेव वृत्ते चेत् तृतीयः पादः द्वाभ्यां नगणाभ्याम् सगणनगणाभ्याम् पुनर्द्वाभ्यां नगणाभ्याञ्च रचितः स्यात् । प्रथमद्वितीयचतुर्थपादाः पूर्ववत्स्युः, तर्हि इदं वर्धमाननामकं वृत्तं भवति ॥ २ ॥

अस्मिन्नेव वृत्ते चेत्तृतीयः पादः तगणजगणरगणैः रचितः स्यात् अन्यत्पूर्ववद्भवेत्, तर्हि इदं शुद्धविराडार्षभनामकं वृत्तं भवति ॥ ३ ॥

अस्मिन्नेव वृत्ते प्रथमपादान्ते एव यदि यतिः स्यात् अन्यत्पादत्रयं चैकीकृतं स्यात्, तर्हि आर्षभनामवृत्तं भवति तथा प्रतिपादान्त विरतौ सत्यां शुद्धविराड् नामकं वृत्तं भवति इति केचित ॥ ४ ॥

## अथानुष्टुप्प्रकरणम् ।

भवत्यर्धसमं वक्त्रं विषमं च कदा चन ।
तयोर्द्वयोरुपान्तेऽत्र छन्दस्तदधुनोच्यते ॥

भवतीति । वक्त्रम् अर्धसमम् भवति इदं च सामान्यशास्त्रम्, कदाचन वक्त्रं विषमम् अपि भवति इदं समस्याप्युपलक्षणम् तयोः द्वयोः अर्धसमविषमयोः उपान्ते यच्छन्दः भवति अधुना अत्र तच्छन्द उच्यते ॥ १ ॥

**वक्त्रं युग्भ्यां मगौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम् ॥ २ ॥**

चेत् युग्भ्यां मगौ मगणगुरू स्याताम् तथा अब्धेः वर्णचतुष्टयात् अनन्तरम् इति यावत् यः यगणः स्यात्, तर्हि अनुष्टुभि अनुष्टुप्प्र-

प्रयोगे प्रायिकं प्राहुः केऽप्येतद्वक्त्रलक्षणम्।

लोकेऽनुष्टुबिति ख्यातं तस्याष्टाक्षरता कृता ॥ ३ ॥

प्रयोग इति। केऽपि आचार्याः एतत् वक्त्रलक्षणम् प्रयोगे व्यवहारे प्रायिक प्राहुः इदं वक्त्रं लोके अनुष्टुप् इति नाम्नायातम् तस्य अनुष्टुबपरपर्यायस्य वक्त्रस्य अष्टाक्षरता प्रतिपादमिति यावत् कृता ।३॥

वृत्तमेतत्क चिल्लोके दृश्यतेऽतोऽस्य नोदिताः।

भेदा वक्त्रमुखानां च छन्दसामपि तादृशाम् ॥ ४ ॥

वृत्तमिति। एतत् अनुष्टुप्संज्ञकम् वृत्तं लोके क्वचित् दृश्यते एतत् लोके प्रसिद्धमस्तीति यावत् अतः प्रसिद्धत्वात् अस्य भेदाः न उदिताः उक्ताः च-तथा तादृशम् वक्त्रमुखानाम् वक्त्रादीनां छन्दसाम् अपि भेदाः न उदिताः प्रसिद्धत्वादेवेति यावत् ॥ ४ ॥

पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः।

षष्ठं गुरु यथावस्थमन्यद्वक्त्रे त्वनुष्टुभि ॥ ५ ॥

पञ्चममिति। अनुष्टुभि अनुष्टुप्संज्ञके वक्त्रे तु सर्वत्र चतुर्षु पादेषु पञ्चमम् अक्षरं लघु भवति, षष्ठम् अक्षरम् गुरु भवति, द्विचतुर्थयोः द्वितीयचतुर्थयोः पादयोः सप्तमम् अक्षरं लघु भवति। द्विचतुर्थयोरिति कथनेन प्रथमतृतीययोः सप्तमं गुरु भवतीति सिद्धम्। अन्यत् अक्षर यथावस्थं भवति, इदम् अनुष्टुब्वृत्तस्य सामान्यलक्षणं बोध्यम् ॥ ५ ॥

वक्त्रं नाद्यान्नसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम् ॥ ६ ॥

S S S S I S S S S S S S S S

वक्त्रमिति। चेत् आद्यात् अक्षरात् अनन्तरं नसौ नगणसगणौ न स्याताम्, तथा अब्धेः अक्षरचतुष्टयात् अनन्तरं यः यगणः स्यात् प्रतिपादमिति यावत्, तर्हि अनुष्टुभि अनुष्टुप्प्रकरणे वक्त्रसंज्ञकं वृत्तं ज्ञेयम् ॥ ६ ॥

युजोर्जेन सरिद्भर्त्तुः पथ्यावक्त्रं प्रकीर्त्तितम् ॥ ७ ॥

I S S I I S S S S S S S I S S S

युजोरिति। युजोः समपादयोः सरिद्भर्त्तुः अक्षरचतुष्टयात्परतः जेन जगणेन सह योगः स्यात् इति शेषः, तर्हि पथ्यावक्त्रनामक वृत्तं भवेत्, इतरदत्र पूर्ववत् ॥ ७ ॥

ओजयोर्जेन वारिधेस्तदेव विपरीतादि ॥ ८ ॥

ओजयोरिति । ओजयोः विषमपादयोः वारिधेः अक्षरचतुष्टयात्परत जेन जगणेन सह योगः स्यात् इति शेषः इतरत्सर्वं पूर्ववत तदा विपरीतपथ्यावक्त्रं नाम वृत्तं भवेत् ॥ ८ ॥

चपलावक्त्रमयुजोर्नकारश्चेत्पयोराशेः ॥ ९ ॥

। । S S । S । S । S S । S S S

चपलेति । चेत् अयुजाः विषमपादयोः पयोराशेः अक्षरचतुष्टयात्परतः नकार नगणः स्यात् इतरत्सर्वं तदेव तदा चपलावक्त्रनामकं वृत्तं स्यात् ॥ ९ ॥

यस्यां लः सप्तमो युग्मे सा युग्मविपुला मता ॥ १० ॥

S S S S । S S S S S । । । S । S

यस्यामिति । यस्यां अनुष्टुभि युग्मे समपादयोः सप्तमः वर्णः इति यावत्, लः लघुः स्यात् अन्यत्तदेव सर्वम् सा युग्मविपुला नाम मता । इदं वृत्त पथ्यावक्त्रमेव केवलम् युग्मविपुलेति नामान्तरनिर्देशार्थमेव पुनः प्रकारान्तरणोक्तमत्रेति यावत् विपुलाप्रकरणस्यारभ्यमाणत्वात्तदादौ युग्मविपुलानामनिर्देशः कृतः इति ज्ञेयम् ॥ १० ॥

सैतवस्याखिलेष्वपि ॥ ११ ॥

S । S S S । ।

सैतवस्येति । चेत् अखिलेषु चतुर्षु पादेषु अपि सप्तमः वर्णः लघुः स्यात्, तर्हि सैतवस्य आचार्यस्य मते सा एव युग्मविपुला एव वृत्तं भवेत् ॥ ११ ॥

भेनाब्धितो भाद्विपुला ॥ १२ ॥

S S । S S । । S

भेनेति । चेत् प्रतिपाद वर्णचतुष्टयात् परतः भेन भगणेन सह योगः स्यात् इति शेषः भाद्विपुला भविपुलासंज्ञकं वृत्तं ज्ञेयम् ॥ १२ ॥

नोऽम्बुधेश्चेन्नविपुला ॥ १३ ॥

S । S S । । । S

न इति । चेत् प्रतिपादं वर्णचतुष्टयात्परतः नः नगणः स्यात्, तर्हि नविपुलानामकं वृत्तं ज्ञेयम् ॥ १३ ॥

तोऽब्धेस्तत्पूर्वाऽन्या भवेत् ॥ १४ ॥

S S । S S S S । S

त इति । चेत् प्रतिपादं वर्णचतुष्टयात्परतः तः तगणः स्यात्, तर्हि तत्पूर्वात्तपूर्वा अन्या विपुला तविपुलानामकमिति यावत् वृत्तं बोध्यम्॥१४॥

रेफोऽब्धेस्तत्पूर्विका स्यात ॥ १५ ॥

रेफ इति । चेत् प्रतिपादं वर्णचतुष्टयात्परतः रेफः स्यात्, तदा तत्पूर्विका रपूर्विका रविपुलानामकमिति यावत् वृत्तं स्यात् ॥ १५ ॥

मविपुलाऽब्धेर्मश्चेत्स्यात् ॥ १६ ॥
। । ऽ ऽ ऽ ऽ ऽ ऽ

मविपुलेति । चेत् प्रतिपादम् वर्णचतुष्टयात्परतः मः मगणः स्यात्, तर्हि मविपुलानामकं वृत्तं स्यात् ॥ १६ ॥

यविपुला यकारोऽब्धेः ॥ १७ ॥
। । । ऽ । ऽ ऽ ऽ

मविपुलेति । चेत् प्रतिपादं वर्णचतुष्टयात्परतः यकारः यगणः स्यात्, तर्हि यविपुलानाम वृत्तं स्यात् ॥ १७ ॥

सविपुला सगणोऽब्धेः ॥ १८ ॥
। । । ऽ । । ऽ ऽ

सविपुलेति । चेत् प्रतिपाद् वर्णचतुष्टयात् परतः सगणः स्यात्, तर्हि सविपुलानामकं वृत्त स्यात् ॥ १८ ॥

जविपुला जकारत. ॥ १९ ॥
। । । ऽ । ऽ । ऽ

जविपुलेति । चेत् प्रतिपाद् वर्णचतुष्टयात् परतः जकारत. जगणेन सह योगःस्यात् इति शेषः तर्हि जविपुलानामक वृत्तं ज्ञेयम् ॥ १९ ॥

इत्यादिवक्त्रप्रकरणेऽन्यानि समूह्यानि आवश्यकवृत्तमनुभूयात्र लिखितम् एव सर्वं यथामति बोध्यम् एवं विषमवृत्तानि ६१एकषष्टिः ।

इत्यनुष्टुप्प्रकरणम् ॥



## अथ दण्डकाः ।

चण्डवृष्टिप्रपातः—

**नगणयुगलमत्र चेत्सप्त रेफास्तदा दण्डकश्चडवृष्टिप्रपातो भवेत् ।**
। । । । । । ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ ऽ ऽ । ऽ

नगणेति । अत्र दण्डकप्रकरणे चेत् प्रतिपादं द्वौ नगणौ सप्त रगणाश्च स्युः, तदा चण्डवृष्टिप्रपातो नाम दण्डको भवेत् ॥ १ ॥

प्रचितकः—

**प्रचितकसमभिधः स्याद्यदा नद्वयं सप्त याः स्युस्तदा दण्डकोऽसौ**
। । । । । । । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ

विशेषः ॥ २ ॥ ॥ २१० ॥

प्रचितकेति । यदा प्रतिपादं द्वौ नगणौ सप्त यगणाः स्युः, तदा असौ प्रचितकसमभिधः प्रचितकनामा विशेषः दण्डकः स्यात् ॥ २ ॥ २७ ॥

अशोकपुष्पमञ्जरी—

स्यादशोकपुष्पमञ्जरी रजौ रजौ रजौ रजौ रसंयुतौ यदा तदा ध्रुवम् ३।२७

S । S । S । S । S । S । S । S । S । S । S । S । S । S

स्यादिति । यदा प्रतिपादं रगणजगणरगणजगणरगणजगणरगणजगणरगणाः स्युः, तदा अशोकमञ्जरीनामा दण्डकः ध्रुवं स्यात् ॥ ३ ॥

कुसुमस्तबकः—

नवभिः सगणैः परिवक्ति फणावदधीश इमं नियत कुसुमस्तबकम् ४।२७

। । S । । S । । S । । S । । S । । S । । S । । S । । S

नवभिरिति । नवभिः सगणैः अर्थात् यत्र प्रतिपादं नव सगणाः स्युः फणावदधीशः शेषः तम् इमम् कुसुमस्तबकं नाम दण्डकम् नियतं यथा तथा परिवक्ति अथ वा नवभिः सगणैः नियत नियमितमिति सबन्धः ॥ ४ ॥

मत्तमातङ्गलीलाकरः—

नन्दसंख्यैश्च रेफैः फणाभृत्पतिप्रोदितो मत्तमातङ्गलीलाकरो दण्डकः ५।

S । S S । S S । S S । S S । S S । S S । S S । S S । S

नन्देति । यत्र प्रतिपादं नव रगणाः स्युः सः फणाभृत्पतिप्रोदित शेषप्रोक्तः मत्तमातङ्गलीलाकरो नाम दण्डकः भवति ॥ ५ ॥

अनङ्गशेखरः—

यदिचनिजेच्छयाविरचितलघुगुरुर्यथायतिभवत्यनङ्गशेखरः ।६।२७।

। । । । S । S । । । । । । S । S । । । S । S । S । S

यदीति । यदि निजेच्छया कवीच्छया विरचिताः लघवः गुरवश्च यस्मिन् सः यथायति एवम्भूतः दण्डकः स्यात्, तर्हि यतिमनतिक्रम्य अयम् अनङ्गशेखरो नाम भवति अयमभिप्रायः यत्र तिपादम् सप्तविंशतिसंख्यकाः वर्णाः स्युः तेषु गुरवो लघवश्च कवीच्छया स्युः गुरुलघूभयग्रहणात् केवल गुरवो लघवो वा न स्युः यतिश्चानुरूपा स्यात् सः अनङ्गशेखरो नाम दण्डको ज्ञेयः ॥ ६ ॥

शकायतनम्—

नन्दभकारगकारविनिर्मितकायमिदं हि शकायतनं कथयत्यहिपः ।७।

S । । S । । S । । S । । S । । S । । S । । S । । S । । S

नन्देति । अहिपः शेषः नन्दभकारगकारैः नवभिः भगणैः अन्ते चै-

अर्थात् यत्र प्रतिपादं नव भगणाः एकः गुरुश्च स्यात् सः शकायतननामा दण्डको भवति ॥ ७ ॥

लावण्यलीलाप्लुतम्—

नवसुयकारैश्च लैकेन लावण्यलीलाप्लुतन्नाम तद्दण्डकं पिङ्गलो वक्ति ।८।
। । । । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । 

नेति । पिङ्गलः नवसुयकारैः एकेन ला लघुना च तत् नामक लावण्यलीलाप्लुतं नाम वक्ति, अर्थात् यत्र प्रतिपादम् एको नगणः अष्टौ यगणाः एकः लघुश्चान्ते स्यात् सः लावण्यलीलाप्लुतनामा दण्डको ज्ञेय· ॥८॥

आलानिकम्—

नयुगलमिह रेफतो यकाराश्च षट्संख्यकालैकमालानिकं वक्ति शेषो हि९
। । । । । । ऽ । ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ ऽ ।

नेति । चेत् इह प्रतिपादं द्वौ नगणौ एकः रगणः षट् यगणाः एकः लघुश्चान्ते स्यात्, तर्हि शेषः तम् आलानिकनामक दण्डकं वक्ति ॥ ९ ॥

स्मारमालाकुलः—

सगणो मुखे स्याद्यकाराष्टकं लो गुरुर्यत्र स स्मारमालाकुलः
। । ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ

पिङ्गलप्रोदितः ॥ १० ॥ २९ ॥
ऽ । ऽ ऽ । ऽ

सगण इति । यत्र प्रतिपादम् मुखे आदौ एक· सगणः स्यात् ततः अष्टौ यगणाः स्युः ततो लघुगुरू च स्याताम् , सः पिङ्गलप्रोदित· स्मारमालाकुलो नाम दण्डको बोध्यः ॥ ११ ॥ २९ ॥

बाललीलातुरः—

यच्च निजेच्छया गणदशकविनिर्मितं भवति फणीशगदितं
ऽ । । ऽ । ऽ । । । । । । ऽ । ऽ । । । । । । । । ऽ

बाललीलातुरम् ॥ ११ ॥ ३० ॥
ऽ । ऽ ऽ । ऽ

यदिति । यत् प्रतिपादं निजेच्छया कवीच्छया दशभिः विनिर्मितं भवति, तत् बाललीलातुरनामकं दडक फणीशेन गदितम् ॥ ११ ॥ ३० ॥

अर्णः दंडकत्रिभङ्गी च—

नयुगलमिह चाष्ट रेफा यदा स्युस्तदाशेषचक्षुश्श्रवस्स्वा·
। । । । । । ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ

मिना प्रोदितोऽर्णोभिधः ॥ १२ ॥ ३० ॥
। ऽ ऽ । ऽ ऽ । ऽ

अर्णोऽभिध. अर्णोनामकः दण्डकः अशेषचक्षुश्श्रवस्स्वामिना प्रोदित. अर्णोभिध इत्यत्र अर्णश्शब्दः सान्तो ज्ञेय· वृत्तरत्नाकरादौ तु अर्णशब्दोऽदन्तो निर्दिष्टः ॥ १२ ॥ ३० ॥

आर्द्रस्तवकः—

नगणयकारौ भवति लघुश्चेद्वदति तदानीमहिपतिरार्द्रस्तब·
। । । । S S । । । । S S । । । । S S । । । । S S । ।
कमिहान्ते च ॥ १३ ॥ ३१ ॥
। । S S ।

नगणेति । चेत् इह प्रतिपादं नगणयगणनगणयगणनगणयगणनग· णयगणनगणयगणाः स्युः अन्ते च एकः लघुः भवति, तदानीम् अहि· पतिः आर्द्रस्तबकनामकं दण्डकं वदति ॥ १३ ॥ ३१ ॥

घनाक्षरम्—

षोडशतिथिविरामिगणदशकगुरुभी रचितं चरणमात्र चेद्वृत्तं घनाक्षरम्
S । । । । । S । । । । । । । । S । । S । । । S । S S S । S । S

षोडशेति । चेत् अत्र चरण षोडशतिथिविरामि गणदशकगुरुभिः रचित स्यात्, तर्हि घनाक्षरं नाम दण्डकवृत्तं स्यात् अर्थात् यत्र प्रतिपादं दश गणाः एकः गुरुश्च स्यात् षोडशभि· तथा पञ्चदशभिः वर्णैः वि· रतिः स्यात्, तत घनाक्षरनामकं दण्डकवृत्तं बोध्यम् केचिदत्र अष्ट· भिः पुनरष्टभिः पुनरष्टभिः पुनः सप्तभिः वर्णैः विरतिं वदन्ति, इद दण्डकवृत्तं हिन्दीभाषाकविभिः 'कवित्त'मिति नाम्ना व्यवह्रियते ॥१३॥३१॥

मनोहरणम्—

यथेच्छगणदशकलघुद्वयेन रचितं वसुवसुभिर्विरतिमन्मनोहरणमिति १४
। S । । । । । । । । S । S । । । S । । । । S । । । S । S । । । । ।

यथेति । यथेच्छगणदशकेन तथा लघुद्वयेन च रचितम् अष्टभिः अ· ष्टभिः अष्टभिः अष्टभिश्च विरतिमत् मनोहरणम् इति प्रसिद्धम् अ र्थात् यत्र प्रतिपादं यथेच्छ दश गणाः स्युः अन्ते च द्वौ लघू स्यातां तथा अष्टभिः पुनः अष्टभिः पुनः अष्टभिः पुनः अष्टभिः वर्णैः विरतिः स्यात् तत् मनोहरणनामक दण्डकवृत्तं बोध्यम् । इदमपि दण्डकवृत्तं हिन्दी भाषाकविभिः 'कवित्त'मिति नाम्ना व्यवह्रियते ॥ १४ ॥ ३२ ॥

अर्णवः—

नयुगलमिह नन्दरेफा भवेयुस्तदा स्यादसौ दण्डकश्चार्णवो नाम
। । । । । । S । S S । S S । S S । S S । S S । S S । S S ।

नेति । यदा इह प्रतिपादं द्वौ नगणौ ततो नव रगणाः भवेयुः, तदा सर्पाधिराजोदितः असौ अर्णवो नाम दण्डकः स्यात् ॥ १५ ॥ ३३ ॥

व्यालः—

भवति च किल चेन्नकारद्वयं दिङ्मिता अत्र रेफा भवेयुस्तदा
। । । । । । S । SS । S S । S S । S S । SS । S
व्यालनामाहिराजोदितो दण्डकः ॥ १६ ॥ ३६ ॥
S । S S । S S । S S । S

भवतीति । चेत् अत्र प्रतिपादं द्वौ नगणौ ततो दश रगणाः भवेयुः, तदा अहिराजोदितः व्यालनामा दण्डकः भवति ॥ १६ ॥ ३६ ॥

जीमूतः—

नगणयुगलमत्र चेद्रुद्रसंख्या हि रेफा भवेयुस्तदा कुण्डलीशेन चा
। ।। ।।। S। SS। S S । S S । SS । S S । SS। S
भाषि जीमूतनामेत्ययं दण्डकः ॥ १७ ॥ ३९ ॥
S । S S । SS । SS । S

नगणेति । चेत् अत्र प्रतिपादं द्वौ नगणौ ततः एकादश रगणाः भवेयुः, तदाऽयं जीमूतनामा दण्डकः कुण्डलीशेन शेषेण अभाषि उक्तः ॥ १७ ॥ ३९ ॥

लीलाकरः—

प्रभवति किल चेन्नकारद्वयं सूर्यसंख्याश्च रेफा भवेयुस्तदा गूढपा
।।।। ।। S । SS। S S। S S । S S । S S । S S । S
दाधिराजेन संभाषितो नाम लीलाकरः ॥ १८ ॥ ४२ ॥
S । S S। S S । S S। S S । S

प्रभवतीति । चेत् प्रतिपादं द्वौ नगणौ स्याताम् ततो द्वादश रगणाः भवेयुः, तदा गूढपादाधिराजेन शेषेण संभाषितः लीलाकरो नाम दण्डकः प्रभवति ॥ १८ ॥ ४२ ॥

उद्दामा—

नगणयुगलमत्र विश्वोन्मिताश्चापि रेफा भवेयुस्तदाऽशेषका-
।। ।।।। S। S S । S S । S S । S S । S S
कोदराधीश उद्दामनामानमाह स्वयं पिङ्गलो दण्डकम् १९।४५
S । S S । SS। S S । S S । SS । SS S । S

नगणेति । चेत् अत्र प्रतिपादं द्वौ नगणौ ततः त्रयोदश रगणाः भवे-

शङ्ख· –

भवति यदि नकारयुग्मं मनुप्रोन्मिता यत्र रेफा भवेयुस्ततो
| || | | | | S| SS |SS | S S| SS |SS| S

दन्दशूकाधिराजेन संभाषितः शङ्खनामा भवेद्दण्डकोऽसौ तदा॥२०॥
S | S S | S S| SS |S S | SS |SS| S S | S

भवतीति। यदि यत्र प्रतिपादं द्वौ नगणौ भवतः ततः चतुर्दशः रगणाः भवेयुः, तदा दन्दशूकाधिराजेन सभाषितः असौ शङ्खनामा दण्डकः भवेत् ॥ २० ॥ ४८ ॥

विदग्धसुभङ्गी—

चेत् त्नोस्त्रितयमथो भद्वयमिति चैतत्पुनरपि यत्र विदग्धसुभ·
S S | || |S S|| | | S S| || S| |S| | S

ङ्गी प्रभवति नाम्ना फणिपतिशेषो निगदति वृत्तमिदं किल॥
S |||| S S | | | | S S |||| S| |S ||

चेदिति। चेत् यत्र प्रतिपादं तगणनगणतगणनगणतगणनगणाः स्यु ततो द्वौ भगणौ स्याताम् पुनः तगणनगणतगणनगणतगणनगणाः स्युः ततो द्वौ भगणौ स्याताम्, तर्हि तत् इद वृत्त विदग्धसुभङ्गीनाम्ना प्रभवति इति फणिपतिः शेषः निगदति ॥ २२ ॥ ४८ ॥

विश्ववाट्-आरामश्च—

इह भवति नकारयुग्मं ततो बाणचन्द्रोन्मिताश्चाऽपि रेफा
| | | | | |S|SS |S S|S S | SS | SS

भवेयुर्यदा नामतो विश्ववाहं तदा वक्ति चक्षुःश्रवोऽधीश एवा
|SS|S S | S S | SS |SS| SS|S S| S S

पर दण्डकम् ॥ २२ ॥ ५१ ॥
|S S| S

इहेति। यदा इह प्रतिपादं नकारयुग्मं नगणद्वयं भवति ततः तदनन्तरं बाणचन्द्रोन्मिता पञ्चदशसख्यकाः रेफा रगणा भवेयुः, तदा चक्षुःश्रवोऽधीशः शेषः एव अपरं दण्डकं नामतः नाम्ना विश्ववाहं वक्ति आराम इति नामान्तरमस्य बोध्यम् ॥ २२ ॥ ५१ ॥

कालदण्डः—संग्रामश्च—

प्रभवति किल चेन्नकारद्वयं षोडशैवाऽत्र रेफा भवेयुः फणा
|||| | | S| S S|S S | S S| SS |SS |S

भृद्गणाधीश्वरः पिङ्गलोऽसौ तदा भाषते कालदण्डाख्यमे
S| S S|S S| S S |S S|S S| S S| S

नं सर्वं चापरं दण्डकम् ॥ २३ ॥ ५० ॥

प्रभवतीति। चेत् प्रतिपादम् अत्र नकारद्वयं नगणद्वयं प्रभवति तदनु षोडश रेफाः रगणाः भवेयुः तदा असौ प्रसिद्धः फणाभृद्गणाधीश्वरः पिङ्गल एतम् अपरं शुभं दण्डकम् कालदण्डाख्यम् भाषते, संग्राम इत्यपि नामास्य बोध्यम् ॥ ५४ ॥ २३ ॥

पौण्ड्रकः—

भवति नगणयुग्ममादौ ततो यत्र सर्वसहाधारिशीतांशु-
। । । । । । S । S S । S S । S S । S S । S S ।
भिः संमिताश्चापि रेफा भवेयुस्तदाऽभाषि चक्षुःश्रवस्वामि-
S S । S S । S S । S S । S S । S S । S S ।
ना पिङ्गलेनेति नाम्नाऽपरः पौण्ड्रकः ॥ ५७ ॥ २४ ॥
S S । S S । S S । S S । S

भवतीति। चेत् यत्र प्रतिपादम् आदौ नगणयुग्म भवति ततः तदनु सर्वंसहाधारि शीतांशुभिः संमिता सप्तदशसंख्यका इति यावत् रेफा रगणा भवेयुः, तदा चक्षुःश्रवस्वामिना नागराजेन पिङ्गलेन अपरः दंडकः नाम्ना पौण्ड्रकः अभाषि, सुराम इति नामान्तरमस्य ज्ञेयम् ॥५७॥२४॥

विशेषस्तबकम्—

भवति यदा यत्र नयचतुष्क भगणसकारत्रयमपि तस्माच्चेद्मग ।
। । । । S S । । । । S S । । । । S S । । । । S S S । ।
इहैकस्तदनु तथैवं भसयुगलं सर्पाधीशो वदति विशेषस्तबकामिमम् ।
। S S । । । । S S । । । । S S S S S । । । । । S S । । । । S

भवतीति इह यदा यत्र प्रतिपादम् नगणयगणचतुष्कं भवति अर्थात् नगणयगणौ पुनः नगणयगणौ पुनश्च नगणयगणौ पुनरपि नगणयगणौ भवतः तस्मात् अनन्तरम् चेत् भगणसगणत्रयं भवति अर्थात् भगणसगणौ पुनः भगणसगणौ पुनरपि भगणसगणौ भवतः, तदनु एकः मगणः भवति तथा एवम् तदनु इति यावत् भगणसगणयुगलं भवति अर्थात् भगणसगणौ द्विभवतः, तदा सर्पाधीशः इमं दण्डक विशेषस्तबकनामकं वदति ॥ ५७ ॥ २५ ॥

उदारपादः—

भवति नगणयुग्ममादौ ततोऽष्टादशप्रोन्मिता अत्र रेफा भवे-
। । । । । । S । S S । S S । S S । S S । S S । S
युर्यदाऽशेषसर्पाधिराजेन सम्भाषितः पिङ्गलेनोरुधाम्ना भवे-
S । S S । S S । S S । S S । S S । S S । S S । S
द्दण्डकोऽसौ तदोदारपादाभिधः ॥ ६० ॥

भवतीति। यदा अत्र प्रतिपादम् आदौ नगणयुग्मं भवति ततः अष्टादशसंख्यकाः रगणाः भवेयुः, तदा असौ अशेषसर्पाधिराजेन उरुधाम्ना महातेजसा पिङ्गलेन सम्भाषित· उदारपादाभिधः दण्डकः भवेत्, वैकुण्ठ इत्यपि नामास्य ज्ञेयम् ॥ ६० ॥ २६ ॥

एवं यत्र प्रतिपादम् आदौ द्वौ नगणौ तदनु एकोनविंशतिसंख्याका रगणा भवन्ति सः **सोत्कण्ठनामा** दण्डको भवति, प्रतिपादम् आद्य द्वौ नगणौ ततो विंशतिसंख्याका रगणा भवन्ति सः **सार**नामा दण्डको भवति, प्रतिपादं यत्रादौ द्वौ नगणौ ततः एकविंशतिसंख्याका रगणाः भवन्ति सः **कासार**नामा दण्डको भवति, प्रतिपादं यत्रादौ द्वौ नगणौ ततो द्वाविंशतिसंख्याका रगणाः सन्ति सः **विस्तार**नामा दण्डको भवति, प्रतिपादं यत्रादौ द्वौ नगणौ ततः त्रयोविंशतिसंख्याका रगणाः भवन्ति सः **संहार**नामा दण्डको भवति, प्रतिपादं यत्रादौ द्वौ नगणौ ततः चतुर्विंशतिसंख्याका रगणा· भवन्ति सः **नीहार**नामा दण्डको भवतिप्रतिपादं यत्रादौ द्वौ नगणौ ततःपञ्चविंशतिसंख्याका रगणा भवन्ति सः **मन्दार**नामा दण्डको भवति, प्रतिपादम् यत्रादौ द्वौ नगणौ ततः षड्विंशतिसंख्याका रगणा भवन्ति सः नामा **केदार**दण्डको भवति, प्रतिपादं यत्रादौ द्वौ नगणौ ततः सप्तविंशतिसंख्यका रगणाः भवन्ति सः **साधार**नामा दण्डको भवति, प्रतिपादम् यत्रादौ द्वौ नगणौ ततोऽष्टाविंशतिसंख्यका रगणा भवन्ति सः **सत्कार**नामा दण्डको भवति, प्रतिपाद यत्रादौ द्वौ नगणौ तत एकोनत्रिंशत्संख्याका रगणा भवन्ति सः **संस्कार**नामा दण्डको भवति ॥ ६३-९३ ॥ २७-३७ ॥

विमर्ष —

प्रभवति किल चेन्नकारद्वयं शून्यरामोन्मिता अत्र रेफा भवे
I I I I I I S I S S I S S I S S I S S I S
युस्तदाऽनन्तनामा मुदा पिङ्गलो वक्ति संलक्षिताशेषवृत्तोत्करो
S I S S I S S I S S I S S I S S I S S I S S I S
वैनतेयाय सम्पूर्णसौभाग्यसम्पन्नतापन्नलक्ष्मीपतिप्रीणिता-
S I S S I S S I S S I S S I S S I S S I S S I S
य स्वयं वृत्तवारांनिधिः सर्वतो भावुकन्दण्डकन्तं विमर्षाभि-
S I S S I S S I S S I S S I S S I S S I S S I S S I

प्रभवतीति । चेत् अत्र प्रतिपादम् आदौ नकारद्वयं नगणयुग्मं प्रभवति । ततः शून्यरामोन्मिताः त्रिंशत्सख्याका रगणाः भवेयुः, तदा वृत्तवारांनिधिः वृत्तसमुद्रः सच्चरित्रसिन्धुः अनन्तनामा शेषसञ्ज्ञकः पिङ्गलः स्वयम् मुदा हर्षेण सम्पूर्णं यत्सौभाग्य तस्य तेन सलक्षिताशेषवृत्तोत्करः प्रदर्शितसमग्रवृत्तसमूहः वा या संपन्नता संपत्ति. युक्तता वा तया आपन्न' ताम् आपन्नो वा यो लक्ष्मीपतिः विष्णुः तेन प्रीणिताय वैनतेयाय गरुडाय सर्वतो भावुक शिवमय तं दण्डक विमर्षाभिधं विमर्षनामकं वक्ति, माकन्द इत्यपि नामास्य बोध्यम् ॥ ९६ ॥ ३८ ॥

एवमन्यैरपि गणैः कृतयतिभिः विविधा मनोहरा दण्डका भवन्ति ॥ २८ ॥

एवमिति । स्पष्टम् , तद्यथा—यत्र प्रतिपादम् नगणद्वयानन्तर यगणवृद्धौ सत्यां मेघमालादयो दण्डका भवन्ति, एवं प्रतिपादं नगणद्वयानन्तरमन्येषामपि गणाना वृद्धौ दण्डका भवन्ति, यत्र प्रतिपादम् आदौ द्वौ नगणौ तत. द्वौ गुरू तदनु अष्टौ यगणाः स्युः सः सिहविक्रान्तो नाम दण्डको ज्ञेयः, यत्र प्रतिपाद नव दश वा एकादश वा द्वादश वा त्रयोदश वा चतुर्दश वा एतदधिकसख्याका वा यगणा भवन्ति, ते सिहविक्रीडनामादयो दण्डका भवन्ति २८ ॥

विशेषशालीनम्—

इति नियमकृतं यदा स्याद्गणस्थापनं वृद्धिमत्तत्परं शेषशालीनवृत्तं फणीशोदितं चोन्नयेत् ॥ २९ ॥

इतीति । यदा प्रतिपादम् इति नियमकृतं गणस्थापनं वृद्धिमत्तत्पर स्यात् , तदा फणीशोदितं शेषशालीनवृत्तम् उन्नयेत् कविरिति शेषः, अयमभिप्रायः यदि प्रतिपाद नगणद्वयानन्तरं एकत्रिंशत्सख्याकाः तदधिकसंख्याका वा रगणाः अन्ये गणा. वा स्युः तदा शेषशालीनसंज्ञकाः कल्पाः बोध्याः ॥ २९ ॥

कुसुमितकायम्—

शेषप्रोक्तं स्वेष्टप्रोतं कुसुमितकायं मितकायम्प्रकाममयन्त्रितस्व-
S S S S S S S S I I I I S S I I S S I S I S S I S I

कायं खलु समुदायमुदायं कृतधातिदायं द्विमतनतानामथ य-
S S I I I I S I I S S I I I I S S I I I I S S I I I

जतानां रभसानां सभसानां भसभानां समतानां यसभानां
I S S I I S S I I S S I I S S I I S S I I S S

तयसानां दधदपि भननगगानाम ॥ ८९ ॥ ३० ॥

शेषेति । द्विमतनतानाम् मगणद्वयतगणनगणतगणानाम् तथा यगणजगणतगणानाम्, अथ रगणभगणसगणानाम्, ततः सगणभगण सगणानाम्, तदनु भगणसगणभगणानाम्, ततः सगणभगणसगणानाम्, तदनु यगणसगणभगणानाम् तदनन्तरं तगणयगणसगणानाम् अथ च भगणनगणनगणानाम्, अन्ते गुरुद्वयस्य समुदायं दधत् कुसुमितकाय नाम दण्डकवृत्त शेषप्रोक्तम् भवति। की० स्वेष्टप्रोतम् स्वाभीष्टयुक्तम् पु० की० मितकायं प्रमितशरीरम्, पुन की० प्रकामम् यथेष्टम् आयन्त्रितस्वकायम् नियमितस्वीयगणलाभम् पु० की० उदायम् उच्चविस्तार पु० की० कृतयतिदायम् विहितविरामप्रदम्, यद्वा विहितविरामविभागम् एतानि विशेषणानि कुसुमितकायस्य समुदायस्य वा बोध्यानि, अयभिप्रायः यत्र प्रतिपादम् द्वौ मगणौ ततः तगणनगणतगणयगणजगणतगणरगणभगणसगणद्वयभगणसगणभगणसगणभगणसगणभगणतगणयगणसगणभगणतगणयगणसगणभगणाः ततः द्वौ नगणौ तदनु द्वौ गुरू च भवतः, सः कुसुमितकायनामको दण्डको भवति ॥२८॥८८॥

अन्यथाऽपि कवीच्छातो यथाविरतिकैर्गणैः ।
भवन्ति दण्डका भव्या गुच्छकाद्यर्थनामकाः ॥ १ ॥
दामहासप्रसूनार्थमञ्जरीरुचिरार्थकाः ।
कल्पनीया यथोक्तार्थक्रममासाद्य पण्डितैः ॥ २ ॥

इति दण्डकप्रकरणम् ॥

अन्यथेति । कवीच्छातः कवीनाम् इच्छया अन्यथा प्रकारान्तरेणापि यथाविरतिकैः यथासम्भवविश्रमयुक्तैः गणैः भव्याः दण्डका भवन्ति, ते च पण्डितैः यथोक्तार्थक्रमम् आसाद्य गुच्छकाद्यर्थनामकाः तथा दामहासप्रसूनार्थमञ्जरीरुचिरार्थकाः कल्पनीयाः, अर्थात् कवयः स्वेच्छया सयतिभिः गणैः दण्डकान्विरच्य गुच्छदामहासप्रसूनमञ्जर्यादिपर्यायभूतशब्दात्मकानि तेषां नामानि कल्पयेयुः ॥ १ ॥ २ ॥

॥ इति दण्डकप्रकरणम् ॥

## ॥ अथ गद्योदाहरणानि ॥

तत्र ।

मुक्तकम्—

स जयति जगतां विधाता समस्तं येन पालितं भवनं तस्मै

स इति । पूर्वं प्रस्तारप्रकरणान्ते गद्यसामान्यलक्षणं तथा गद्यभेदाः तद्विशेषलक्षणानि चोक्तानि इदानीं तदुदाहरणानि प्रदर्श्यन्ते, तत्रादौ मुक्तकोदाहरणम् , जगतां विधाता सः जयति, येन समस्तं भुवनं पालितम् , तस्म सतत नमः अस्तु, इदमसमासत्वान्मुक्तकं नाम गद्यम् ॥ १ ॥

अथ चूर्णकोदाहरणम् ।

अथ चूर्णकम—

अथ नन्दनन्दनजननाकर्णनजातानन्दसन्दोहशबलमानसाः सकलतद्देशवासिनः किल बभूवुः, सर्वाः सरूपा अपि निरुपमरूपाश्च श्रुतिरूपा गोप्यः स्नेहाकूपारप्लवनव्यापारपरमानन्दं यथा तथा परवशान्तःकरणाः स्वर्णमणिगणभूषणदुकूलाञ्जनप्रभृतिभूषितविग्रहा गृहात्परिगृहीतमाङ्गल्यसाहित्याः प्रत्याहिततद्दर्शनाभिलाषाभाषामङ्गलप्रबन्धं गायन्त्यः सानन्दं नन्दसदनमभिसस्रुः ॥ २ ॥

अथेति । अथ सकलतद्देशवासिनः नन्दनन्दनस्य नन्दगोपसुतस्य कृष्णस्य जननस्य जन्मनः आकर्णनेन श्रवणेन जातो यः आनन्दसन्दोहः तेन शबलं चित्रं मानस हृदय येषाम् एवम्भूताः बभूवुः सर्वाः गोप्यः भाषामङ्गलप्रबन्धं स्वमातृभाषाविनिबद्धमङ्गलगीतं गायन्त्यः सत्यः गृहात् स्वभवनात् नन्दस्य सदन गृहम् सानन्द यथा तथा अभिसस्रुः जग्मु । कीदृश्यः गोप्यः । सरूपाः अपि तुल्यरूपाः अपि निरुपमरूपाः अत्र विरोधाभासोऽलङ्कार. अन्योन्यसारूप्येऽपि इतरापेक्षयाऽनुपमत्वेन विरोध परिहारः। पु० की० श्रुतिरूपाः वेदात्मिकाः । पु० की० स्नेहाकूपारस्य प्रेमसमुद्रस्य प्लवनम् सन्तरणं तदेव व्यापारः तस्य परवशम् अधीनम् अन्तःकरण यासां ताः । पु० की० स्वर्णमणिगणभूषणदुकूलाञ्जनप्रभृति भूषितविग्रहाः हेमरत्नजाताभरणक्षौमकज्जलादिनेपथ्यमण्डितशरीराः । पु० की० परिगृहीतं माङ्गल्यस्य वस्तुनः इति यावत् साहित्य यभिस्ताः । पु० की० प्रत्याहिततद्दर्शनाभिलाषाः हृदयनिहितकृष्णावलोकनोत्कण्ठाः । इदं गद्यमल्पसमासत्वात् चूर्णकं नाम बोध्यम् ॥ २ ॥

अथ वृत्तगन्ध्युदाहरम् ।

वृत्तगन्धि—

जयतु भुवननाथः प्रार्थ्यमानः सुरौघैरवनतामलांघै० ........

र्थार्थवाहपरिचारकत्वमवगम्य कृपालुतैकनिधिरधिभुवनमनिशम् ॥ ३॥

जयत्विति । भुवननाथः अधिभुवनम् भुवनेषु अनिशं जयतु । कीदृश, भु० । सुरौघैः प्रार्थ्यमानः कथम्भूतैः सुरौघैः अवनताः असलाः मांसला· परिपुष्टा इति यावत् साः अस्कन्धाः येषां तैः । पुनः कथम्भूतैः सुरौघैः प्रकृतम् अनुलक्षीकृत्य विधेयतात्कर्म्यैं कर्त्तव्यतत्कर्मतायाम् प्रयुक्त मानसं यैः तैः । पुन की० भुवननाथ. । स्वपरिरक्षणदक्षताम् निजावननिपुणताम् अनुविचिन्त्य तथा स्वार्थार्थवाहपरिचारकत्वम् आत्मार्थार्थवाहसेवकत्वम् अवगम्य कृपालुतायाः एकनिधिः । मुख्यशेवधिः अथवा स्वपरिरक्षणदक्षताम् अनुविचिन्त्य तथा स्वार्थार्थवाहपरिचारकत्वम् अवगम्य सुरौघैः प्रार्थ्यमान. इति सम्बन्धः । इद मालिनीवृत्तपादघटितत्वाद्वृत्तगन्धिनामकं गद्यं बोध्यम् ॥ ३ ॥

अथोत्कलिकाप्रायगद्योदाहरणम् ।

उत्कलिकाप्रायम्—

अथ तालवनगमनमनुभूय सायमसौ भगवान् कृष्णः सकलवनविहारविशृङ्खलविजृम्भितकुतूहलिना हलिना महाबलिना बलदेवेन सहासादितगोष्ठाङ्गणद्वारस्तद्गुणवर्णानुरूपामात्मजां दातुमिव भाविजामातुः सुषुमा मातुमम्बरतल विहायागतेन भगवता भासान्निधिनाऽहस्करेणेव मणिगणप्रचुरेण ज्वलत्कान्तिचामीकरनीराजनपात्रेणोपदीकर्त्तुं तेनैवानीतेन निजरत्नसमुदायेनैव दीपाङ्कुरसमुच्चयेन द्विगुणिततेजोविशेषेण तेन तैजसद्वयेन हृद्गतदिवसविरहभरतापं सूचयन्त्या प्रवृद्धप्रेमप्रपूरप्रसङ्गप्रपञ्चेन पयोद्वयादिव नेत्रपयोजद्वयादपि पयःपूरं परित्यजन्त्याऽत्युत्पुलकाङ्ग्या मात्रा यशोदया कृतनीराजनो व्रजजनतामोददः स्वस्वस्थानाविनिवेशितगोधनस्तज्जन्मसमयपयोदानुषङ्गेण सम्प्राप्तं कालिमानं दुग्धेन परिहर्त्तुं समागतेन धृतशान्तवेषेण शेषेणेव दोष्णा कृतधेनुसेवनो व्रजावनो बन्धुत्वेन कनकेन्द्रहर्षासिंहासनावस्थतपनबिम्बे स्वस्मिन्निव निजोत्पत्तिकारणजातं शीतलिमानं विधातुं विहितप्रयासस्य सुन्दरपयोभवयुग्मस्य शङ्कामुद्भावयन् ऊरुयुगलमध्यवर्त्तितपनीयदोहन-

तगोपीगृहीतवत्सलेहनचलद्ग्रीवाघण्टाभरणरणितसहवर्त्तिमहाककुत्कलितपृष्ठदेशदृढमहोक्षपरिवृढगर्जितनिरन्तरितकाष्ठावकाशो व्रजयुवतिधृताशो विरजस्कीकृताङ्गो जननीसमर्पितसपायससुरसस्वन्नैरवसायितसायन्तनाशनकृत्यो व्रजे स्वल्पशशिकल्पतल्पप्रसूनपरिमलपरिमिलितनिकुञ्जसदने विहारं विरचय्य सुखेन सह सावकाश तस्थौ ॥ ४ ॥

इति इत्यादयो रचनाविशिष्टगद्यविशेषाः समवधार्याः

इति गद्यानि ।

समाप्तोऽयं ग्रन्थः ।

अथेति । असौ भगवान् कृष्णः सायं व्रजे विहार विरचय्य सुखेन सह सावकाशं यथा तथा तस्थौ । कीदृशः कृष्णः सकलवनविहारविशृङ्खलविजृम्भितकुतूहलिना समग्रकाननविहरणनिष्प्रतिबन्धविलसितकौतुकवता हलिना हलधरेण महाबलिनाऽतिबलवता बलदेवेन सह तालवनगमनम् अनुभूय आसादितगोष्ठाङ्गनद्वारः प्राप्तव्रजाजिरद्वारः पुनः को० कृष्णः । तद्गुणवर्णानुरूपाम् तस्य कृष्णस्य गुणै सौन्दर्यादिभिः वर्णैन श्यामेन च अनुरूपाम् योग्याम् आत्मजाम् कालिन्दीम् इति यावत् दातुम् इव भाविजामातुः भविष्यतः कन्यापतेः कृष्णस्येति यावत् सुषुमां परमां शोभाम् मातुम् परिमातुम् अम्बरतल आकाशम् विहाय आगतेन भगवता भासां निधिना अहस्करेण सूर्येण इव मणिगणैः प्रचुरेण प्रभूतेन ज्वलत्कान्तिचामीकरनीराजनपात्रेण दीप्यमानदीप्तिसुवर्णारात्तिकभाजनेन उपदीकर्त्तुम् उपायनीकर्त्तुम् तेनैव सूर्येणैव आनीतेन निजरत्नसमुदायेन इव दीपाङ्कुरसमुच्चयेन कृत्वा द्विगुणिततेजोविशेषेण द्विगुणितस्तेजोविशेषः येन तेन तेन पूर्वोक्तेन तैजसद्वयेन चामीकरपात्रदीपाङ्कुरसमुच्चयरूपतैजसवस्तुयुग्मेन कृत्वा हृद्गतदिवसविरहभरतापम् । मनोगतदिनवियोगातिशयसतापं सूचयन्त्या तथा प्रवृद्धप्रेमप्रपूरप्रपञ्चप्रसङ्गेन समेधितस्नेहप्रवाहविस्तारसम्बन्धेन पयोधरद्वयात् स्तनयुगात् इव नेत्रपयोजद्वयात् नयनकमलयुगात् अपि पयःपूरम् दुग्धप्रवाहम् अश्रुजलप्रवाहं च परित्यजन्त्या वाहयन्त्या स्रावयन्त्येति यावत् तथा उ-

शितं गोधनं येन सः पुनः की० कृष्णः तज्जन्मपयोदानुषङ्गेण कृष्णोत्पत्तिकालागतछायाकारिमेघसंसर्गेण सम्प्राप्तं सँल्लग्नं कालिमानं श्यामताम् दुग्धेन क्षीरप्रक्षालनेन इति यावत् परिहर्त्तुम् दूरीकर्त्तुम् समागतेन आयातेन धृतशान्तवेषेण स्वीकृतानुग्ररूपेण शेषेण इव दोष्णा भुजेन कृतधेनुसेवनः विहितगोसेवः पुनः की० कृष्णः व्रजावनः व्रजरक्षकः बन्धुत्वेन कनकेन्द्रदृषत्सिंहासनावस्थतपनबिम्बे सुवर्णेन्द्रनीलमणिनिर्मितसिंहासनसंक्रान्तसूर्यमण्डले स्वस्मिन् आत्मनि इव निजोत्पत्तिकारणजातं स्वजन्महेतुभूतसलिलोत्पन्नं शीतलिमानं शीतत्व विधातुं कर्त्तुं विहितप्रयासस्य कृतयत्नस्य सुन्दरपयोभवयुग्मस्य रुचिरकमलयुगस्य शङ्काम् उद्भावयन् प्रकटयन् पुनः की० कृष्णःऊरुयुगलमध्यवर्त्तितपनीयदोहनपात्रे सक्थिद्वयान्तरालस्थितहेममयदोहनभाजने आरब्धदोहनः प्रारब्धदोहनव्यापारः। पुन० की० कृष्णः त्रिलोकीमोहनः त्रैलोक्यमोहजनकः। पुन० की० कृष्णः पात्रस्य तले यः दोहधाराणाम् आघातः तेन यो रवः तेन मिश्रितम् यत् गोप्या गृहीतस्य वत्सस्य लेहनेन चलतः ग्रीवाघण्टारूपस्याभरणस्य रणितम् तेन सह वर्त्तते इति तच्छीलम् यत् महत्या ककुदा कलितपृष्ठदेशस्य दृढस्य महाक्षपरिवृढस्य वृषभराजस्य गर्जितम् तेन निरन्तरितः काष्ठावकाशः दिगवकाशः यस्य वा सः पुनः की० कृष्णः व्रजयुवतिभिः धृता आशा अभिलाषः यस्मिन् यद्वा व्रजयुवतिषु धृताआशा विहाराकाङ्क्षा येन सः। पुन० कीदृशः कृष्णः। विरजस्कीकृताङ्गः रजोरहितीकृतावयवः। पुनः कीदृशः कृष्णः जननीसमर्पितसपायससुरसस्वन्नैः यशोदादत्तपायसयुक्तस्वादुशोभनान्धोभिः अवसायितसायन्तनाशनकृत्यः समापितसायङ्कालिकभोजनकार्यः। कीदृशे व्रजे स्वल्पशशिकल्पानि न्यूनपरिमाणचन्द्रतुल्यानि यानि तल्पप्रसूनानि शय्याकुसुमानि तेषां परिमलेन विमर्दोत्थजनमनोहरगन्धेन परिमिलितं निकुञ्जसदनं लतागृहरूपभवनं यत्र तस्मिन्। इति। इदमुत्कलिकाप्राय गद्यम् बहुसमस्तपदघटित्वात्।

इति गद्यप्रकरणम्।

समाप्तोऽयं ग्रन्थः।



